### १४२ अथ ऊकारध्यानम्–

ऊकारोर्जस्वलादेवीशार्दूलवरवाहना॥ रक्ताचतुर्भुजाधत्तेखड्गखेटवराभयान् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### १४३ अथ ऋकारध्यानम्–

ऋतुधामाऋकाराख्यारक्तवर्णावृषस्थिता॥दक्षेपाशवरौधत्तेतथावामेंकुशाभयौ ॥ १ रक्तवर्णः ॥ १ ॥

### १४४ अथ ॠकारध्यानम्–

ॠकाराख्यारेणुकेयंषडास्याषड्भुजासिता॥ शूलंपाशंवरंदक्षेवामेखड्गगदाभयान्॥ १ ॥दधानारक्तसिंहस्थाक्रूरालोकभयंकरी ॥ श्वेतवर्णः १

### १४५ अथ ऌकारध्यानम्–

ऌतंभराऌकाराख्याश्यामाव्याघ्रवरस्थिता ॥ चतुर्मुखाष्टहस्तेयंधत्तेस्त्राणिकरैःपरैः ॥ १ ॥ त्रिशूलपाशडमरुवरान्वामकरैस्तथा ॥ खड्गंकपालमुसलाभयान्पीतांबराशुभा ॥ २ ॥ श्यामवर्णः ॥ १ ॥

### १४६ अथ ॡकारध्यानम्–

ॡकाराल्ंजिकाख्यैषापुष्पदंतगजास्थिता॥ रक्तादशभुजार्धेनदक्षादिक्रमशःकरैः ॥ १ ॥ त्रिशूलपाशमुसलचंद्रहासवराञ्छुभान् ॥ वामैःकरैःखड्गखेटगदाशक्त्यभयांस्तथा ॥ २ ॥ रक्तवर्णः ॥ १ ॥

### १४७ अथ एकारध्यानम्–

एकाराख्यारेवतीस्याद्दशास्यारुण्डमालिनी ॥ रक्ताविंशद्भुजासिंहवाहनाफाललोचना ॥ १ ॥ करैर्धत्तेचक्रशूलपाशखड्गकमंडलून् ॥ अक्षसूत्रंचचिन्मुद्रांभुशुडींमुद्गरंवरम् ॥ २॥ वामेधत्तेकरैश्शंखंभिंडिंदुमृगखेटकान् ॥ कपालंदहनंशोषंदंडंचैवगदाभयौ ॥ ३ ॥ रक्तवर्णः ॥ १ ॥

### १४८ अथ ऐकारध्यानम्–

ऐकाराख्याशुष्कपूर्वारेवतीत्रिशिराहिता ॥ मयूरगाषड्भुजेयंरक्तके-

शैश्वसंवृता ॥ १ ॥ अर्द्धैर्धत्तेकरैश्चक्रंत्रिशूलंचवरंतथा ॥ वामैःशंखं-गदांगुर्वींकरैर्धत्तेऽभयंतथा ॥ २ ॥ शुभ्रवर्णः ॥ १ ॥

### १४९ अथ ओकारध्यानम्-

ओकारात्वश्विनीदेवीरक्तवर्णाषडानना॥ मयूरगार्कबाहुस्स्याद्धत्तेदक्षें-कुशंशरम् ॥ १ ॥ खड्गंपाशंचचिन्मुद्रांदरंचाकेकरेक्षणा ॥ वामेशूलं-कार्मुकंचखेटंमुसलमेवच ॥ २ ॥ पुस्तकंचाभयंचैवसर्वशत्रुभयंकरी ॥ रक्तवर्णः ॥ १ ॥

### १५० अथ औकारध्यानम्-

औकाराख्याह्यघोरेयंकरालीदीर्घजिह्विका ॥ एकवक्त्रावक्रनेत्राभ्रु-कुटीकुटिलेक्षणा ॥१॥ नीलमेघनिभारौद्रीभेरुंडवरवाहना ॥ षड्भुजा-र्ककरैर्धत्तेशूलंखड्गंवरंतथा ॥२॥ गदाखेटाभयान्वामेदधानाचमहोदरी॥ श्यामवर्णः ॥ १ ॥

### १५१ अथ अंकारध्यानम्-

अंजनाभांजनादेवीपंचास्याजटिलाकुशा ॥ महोदरीमहाव्याघ्रवर-वाहनमास्थिता॥ १ ॥चतुर्भुजाशूलपाशवराभयकरामता॥कृष्णवर्णः १ ॥

### १५२ अथ अःकारध्यानम्-

अइत्त्याख्यात्वजादेवीत्रिशिराश्वात्रिलोचना ॥ रक्तापीताम्वराक्रूर-तरक्षुवरवाहना ॥ १ ॥ षड्भुजाशूलपट्टासिवरदानकरांचिता ॥ वामें कुशमहाखेटाभयान्धत्तेकरैःक्रमात् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

### १५३ अथ ककारध्यानम्-

भूतविन्यासिनीशुभ्रागजारूढाचतुर्भुजा ॥ त्रिशूलंचवरंदक्षेवामेंकु-शमथाभयम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### १५४ अथ खकारध्यानम्-

खंजरीटस्थितापीतात्रिशिराश्वात्रिशूलिनी॥ खाख्याखद्योतिनीखड्ग-वराभयकरामता ॥ १ ॥ पीतवर्णः ॥ १ ॥

### १५५ अथ गकारध्यानम्—

गाख्याधूम्राचतुर्वक्त्रासिंहस्थाष्टभुजाशुभा ॥ धूम्राभादक्षिणेधत्तेशूलं चाक्षंस्रुवंवरम् ॥ १ ॥ वामेतुपुस्तकंकुंडींकपालमभयंक्रमात् ॥ धूम्रवर्णः ॥ १ ॥

### १५६ अथ घकारध्यानम्—

कृष्णवर्णाघरूपाचसूकरास्याकृशोदरी ॥ षड्भुजाशूलखट्वांगवरान् दक्षभुजैःक्रमात् ॥ १ ॥ वामेखड्गंतथाखेटमभयंशत्रुभंजनी ॥ कृष्णवर्णः ॥ १ ॥

### १५७ अथ ङकारध्यानम्—

अनंतशक्तिर्देवेशीरक्ताबर्हिणवाहना ॥ षडाननेषुचापासिखेटदानाभयान्विता ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### १५८ अथ चकारध्यानम्—

सुषुमाचैकवक्त्रैषाहयारूढाचतुर्भुजा ॥ खड्गखेटधराचारुयावराभयकराशुभा ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

### १५९ अथ छकारध्यानम्—

छोनिर्झरारुंधतीयंपीतामर्कटवाहना ॥ त्रिशूलंक्षुरिकांपाशंखेटंचदधतीशुभा ॥ १ ॥ पीतवर्णः ॥ १ ॥

### १६० अथ जकारध्यानम्—

जोभोगदाहिरक्तास्यात्रिणेत्रासिंहवाहना ॥ चतुर्भुजाखड्गखेटवराभयकरान्विता ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### १६१ अथ झकारध्यानम्—

झोनिर्झरनदीदेवीशरन्मेघनिभांबुजा ॥ पाशंवराभयौधत्तेनक्रस्थाशुभदानृणाम् ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

१६२ अथ ञकारध्यानम्-

ञाख्याप्रबोधिनीशुभ्रासिंहस्थाचित्स्वरूपिणी ॥ त्रिशूलांबुजचिन्मु-
द्राभयान्वितकराशुभा ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

१६३ अथ टकारध्यानम्-

टाख्याचधारणीदेवीशूलटंकवराभयान् ॥ धत्तेमत्तमतंगस्थापाटला-
भासितांशुका ॥ १ ॥ पाटलवर्णः ॥ १ ॥

१६४ अथ ठकारध्यानम्-

क्रियासरस्वतीठाख्याटंकांकुशवराभयान् ॥ धत्तेसिंहवरारूढाचै-
कवक्त्रारुणामता ॥ १ ॥ अरुणवर्णः ॥ १ ॥

१६५ अथ डकारध्यानम्-

डकारिणिपंचवक्त्रासिताटंकगदाधरा ॥ चतुर्बाहुःकुक्कुटस्थावराभय-
कराचसा ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

१६६ अथ ढकारध्यानम्-

ढरूपिणीश्रीघनाख्यापंचवक्त्रामयूरगा ॥ तटिद्गौरीकरैर्धत्तेशूलटंकव-
राभयान् ॥ १ ॥ हेमवर्णः ॥ १ ॥

१६७ अथ णकारध्यानम्-

णोनंतशक्तिर्देवेशीरक्ताबर्हिणवाहना ॥ एकवक्त्राशूलशक्तिवराभय-
कराशुभा ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१६८ अथ तकारध्यानम्-

ताख्यासरस्वतीशुभ्रासितपद्मासनांशुका ॥ एकवक्त्राकरैर्धत्तेवीणातं
त्रीवराभयान् ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

१६९ अथ थकारध्यानम्-

पंचवक्त्रासिताथाख्यानीलकंठासरस्वती ॥ शारिकांडमरुंधत्तेवृषारू-
ढावराभयौ ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१७० अथ दकारध्यानम्—

एकवक्त्रारुणादाख्याष्टभुजाभोगदायिनी ॥ धत्तेऽब्जंशारिकावीणांडमर्वेणवराभयान् ॥ १ ॥ अरुणवर्णः ॥ १ ॥

१७१ अथ धकारध्यानम्—

श्यामलाचामलाधाख्याह्येकवक्त्राचतुर्भुजा ॥ वृषस्थाशारिकामब्जंकरैर्धत्तेवराभयौ ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१७२ अथ नकारध्यानम्—

नोनंतशक्तिर्देवेशीमत्तमातंगसंस्थिता ॥ एकवक्त्रातटिद्गौरीधत्तेपद्मवराभयान् ॥ १ ॥ हेमवर्णः ॥ १ ॥

१७३ अथ पकारध्यानम्—

पाख्येच्छाशक्तिरूपेयंशूलशक्तिवराभयान् ॥ धत्तेकरैःपंचवक्त्राफुल्लपद्मासनारुणा ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१७४ अथ फकारध्यानम्—

पंचवक्त्रोग्रसिंहस्थापाटलातपकोमला ॥ फाख्याशुकैणासिखेटवराभयधराशरान् ॥ १ ॥ पाशंचडमृगंधत्तेक्रमेणदशभिःकरैः ॥ पाटलवर्णः ॥ १ ॥

१७५ अथ बकारध्यानम्—

चिच्छयामलाबभ्रुवर्णासिंहारूढावरूपिणी ॥ धत्तेक्रमेणदशभिःकरैः पूर्ववदायुधान् ॥ १ ॥ बभ्रुवर्णः ॥ १ ॥

१७६ अथ भकारध्यानम्—

भाख्यातुश्यामलाचैकवक्त्राभद्रासनेस्थिता ॥ उद्यद्रविनिभाधत्तेशरचापवराभयान् ॥ १ ॥ सिंदूरवर्णः ॥ १ ॥

१७७ अथ मकारध्यानम्—

मोविद्याश्यामलादेवीहयास्यास्फटिकप्रभा ॥ वीणावादनतत्त्वज्ञावराभयकराशुभा ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १७८ अथ यकारध्यानम्-

याख्येयंदीपिनीदेवीसिंहस्थाष्टभुजासिता ॥ शूलचापेषुपाशासिखे-
टदानाभयान्विता ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

## १७९ अथ रेफध्यानम्-

रेफाख्यारेचिकाश्यामासिंहस्थालोहितांशुका ॥ पंचास्याष्टकरैर्धत्ते
दक्षवामक्रमेणसा १ खड्गखेटांकुशगदापाशशूलवराभयान् ॥ श्यामवर्णः १

## १८० अथ लकारध्यानम्-

लात्मिकामोहिनीदेवीस्वर्णाभागजसंस्थिता ॥ षड्भुजांकुशशूलासि-
खेटदानाभयान्विता ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

## १८१ अथ वकारध्यानम्-

वाख्यापारायणीदेवीस्फटिकाभारुणांशुका ॥ स्फुटपद्मासनाधत्तेपद्म-
द्वयवराभयान् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १८२ अथ शकारध्यानम्-

शाख्यामंगलगौरीतुतप्तजांबूनदप्रभा ॥ सहस्रपद्मपीठस्थादिव्याभरण-
भूषिता ॥ १ ॥ चतुर्भुजाकरैर्धत्तेपद्मद्वयवराभयान् ॥ कनकवर्णः ॥ १ ॥

## १८३ अथ षकारध्यानम्-

रक्ताषानुक्रियादेवीराजहंसवरस्थिता ॥ पीतांबराकरैर्धत्तेपद्मद्वयव-
राभयान् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## १८४ अथ सकारध्यानम्-

सिद्धक्रियासकाराख्यासितांबुजनिवासिनी ॥ पाटलाभाकरैर्धत्तेचिदं-
बुजवराभयान् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

## १८५ अथ हकारध्यानम्-

आध्यायिनीहकाराख्यामत्तमातंगवाहना ॥ पाटलाभाकरैर्धत्तेचिदंबु-
जवराभयान् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

### १८६ अथ ळकारध्यानम्—

ळोबंधमोचिनीदेवीस्वर्णाभागजसंस्थिता ॥ षड्भुजांकुशशूलासिखेटदानाभयान्विता ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

### १८७ अथ क्षकारध्यानम्—

क्षोमायामालिनीदेवीपंचाननवरास्थिता ॥ पंचास्यापाटलाधत्तेखड्गशूलवराभयान् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

---

## अथ प्रणवादिवर्णदेवताध्यानम्—( पांचरात्रागमे )

( अत्रसर्वासांदेवतानांप्रादक्षिण्यक्रमेणायुधविन्यासः कर्तव्यः )

### १८८ तत्र ॐकारस्य—

श्रीनारायणोदेवता ( शेषसंहितायाम् ) नारायणोनीलोत्पलदलप्रभः पंकजांतःस्थितः पीतांबरःसर्वाभरणभूषितःश्रीभूम्यांसहितः शंखचक्रगदापद्मधरः ॥ १ ॥

### १८९ अथ अकारस्य—

विष्णुर्देवता (पाद्मसंहितायाम् ) पद्मकिंजल्कवर्णः पीतांबरः सर्वाभरणभूषितः गदापंकजशंखारिधरः ॥ १ ॥

### १९० अथ आकारस्य—

मधुसूदनोदेवता ( पाद्मसंहितायाम् ) अरुणपंकजवर्णः पीतांबरः चक्रशंखाब्जगदाधरः सर्वाभरणभूषितः स्थितः ॥ १ ॥

### १९१ अथ इकारस्य—

त्रिविक्रमोदेवता(पाद्मसंहितायाम् ) कालानलवर्णः पीतवासाः पद्मदंडारिशंखधरः सर्वाभरणयुक्तः स्थितः ॥ १ ॥

### १९२ अथ ईकारस्य—

वामनोदेवता ( पाद्मसंहितायाम् )बालार्कवर्णः पीतवस्त्रः शंखचक्रगदापद्मधरः आभरणभूषितः स्थितः ॥ १ ॥

१९३ अथ उकारस्य-

श्रीधरोदेवता पीतवर्णः पीतवस्त्रः पद्मचक्रगदाशंखधरः भूषायुक्तः स्थितः ॥ १ ॥

१९४ अथ ऊकारस्य-

हृषीकेशोदेवता तडिद्वर्णः पीतवस्त्रः गदारिपद्मशंखधरः भूषायुक्तःस्थितः १

१९५ अथ ऋकारस्य-

पद्मनाभोदेवता नीलोत्पलवर्णः पीतवस्त्रः शंखचक्रपद्मगदाधरः भूषायुक्तः स्थितः ॥ १ ॥

१९६ अथ ॠकारस्य-

दामोदरोदेवता जपापुष्पवर्णः पद्मशंखगदाचक्रधरः पीतवस्त्राभरणादियुक्तः स्थितः ॥ १ ॥

१९७ अथ ऌकारस्य-

शंभुर्देवता त्रिणेत्रः अरुणवर्णः जटामकुटधारी अभयपरशुमृगवरहस्तः व्याघ्रचर्मधारी ॥ १ ॥

१९८ अथ ॡकारस्य-

नारायणोदेवता असितद्युतिः शंखपद्मगदाचक्रधरः वनमालाभरणादिभूषितः पीतांबरः स्थितः ॥ १ ॥

१९९ अथ एकारस्य-

माधवोदेवता धवलवर्णः पीतवस्त्रः गदाचक्रशंखांबुजधरः भूषितः स्थितः ॥ १ ॥

२०० अथ ऐकारस्य-

गोविंदोदेवता पाटलाभः पीतवासाः चक्रदंडाब्जशंखधरः सर्वाभरणभूषितः स्थितः ॥ १ ॥

२०१ अथ ओकारस्य-

वासुदेवोदेवता घनश्यामः पीतवस्त्रः पद्मचक्रशंखगदाधरः भूषणभूषितः स्थितः ॥ १ ॥

## २०२ अथ औकारस्य—

संकर्षणोदेवता रक्तवर्णः पीतवस्त्रः गदाशंखाब्जचक्रधरः भूषण भूषितः स्थितः ॥ १ ॥

## २०३ अथ अंकारस्य—

प्रद्युम्नोदेवता कनत्कनकवर्णः चक्रशंखगदापद्मधरः भूषितः स्थितः १

## २०४ अथ अःकारस्य—

अनिरुद्धोदेवता दूर्वादलश्यामः पीतवासाः चक्रगदाशंखपद्मधरः भूषण भूषितः स्थितः ॥ १ ॥

## २०५ अथ ककारस्य—

विधिर्देवता चतुर्मुखः हेमवर्णः वराभयकुंडिकाक्षसूत्रकरः मुख्यहस्तयोर्वराभयधरः अन्ययोःकुंडिकाक्षसूत्रधरः जटामंडलधरः सुखासीनः॥ १ ॥

## २०६ अथ खकारस्य—

सुदर्शनोदेवता अग्निज्वालावर्णः षट्कोणसंस्थः शंखचक्रचापपरश्वसीषुशूलपाशांकुशाब्जवज्रखेटहलमुसलगदाकुंतायुधधरः सर्वाभरणभूषितः ज्वालाकेशः स्थितः ॥ १ ॥

## २०७ अथ गकारस्य—

वाणीदेवता स्फटिकवर्णा अक्षमालापद्मशुकपुस्तकधरा प्रादक्षिण्येन सर्वालंकारभूषिता ॥ १ ॥

## २०८ अथ घकारस्य—

शार्ङ्गधारीदेवता हेमनिभः नराकृतिः दक्षिणहस्तेतर्जनीमुद्रान्वितः वामहस्तेनकटिमवलंब्यस्थितः स्वचिह्नांकितमस्तकः स्थितः ॥ १ ॥

## २०९ अथ ङकारस्य—

नंदकोदेवता दूर्वादलश्यामः नराकृतिः दक्षिणहस्तेतर्जनीमुद्रान्वितः कटिविन्यस्तवामहस्तः स्वचिह्नांकितमस्तकः ॥ १ ॥

## २१० अथ चकारस्य-

नंदकोदेवता शेषं पूर्ववत् ॥ १ ॥

## २११ अथ छकारस्य-

यमोदेवता कालवर्णः अभयदंडपाशवरहस्तः महिषारूढः करालवदनः ॥ १ ॥

## २१२ अथ जकारस्य-

मुसलीदेवता सस्यश्यामः नराकृतिः दक्षिणहस्ते तर्जनीमुद्रान्वितः कटिविन्यस्तवामहस्तः मस्तकेस्वचिह्नांकितः सर्वाभरणभूषितः ॥ १ ॥

## २१३ अथ झकारस्य-

अंकुशधारीदेवता हेमवर्णः नराकृतिः दक्षिणहस्तेतर्जनीमुद्रान्वितः कटिविन्यस्तवामहस्तः स्वचिह्नांकितमस्तकः सर्वाभरणभूषितः ॥ १ ॥

## २१४ अथ ञकारस्य-

भृगुर्देवता दूर्वादलश्यामः दक्षिणहस्तेविज्ञानमुद्रां वामेपुस्तकंचदधानः उपवीतजटादिभिर्युक्तः ॥ १ ॥

## २१५ अथ टकारस्य-

कूर्मोदेवता कांचनसन्निभः अभयचक्रशंखवरदहस्तः पीतांबरधरः सर्वालंकारभूषितः ॥ १ ॥

## २१६ अथ ठकारस्य-

पट्टाभिरामोदेवता श्यामवर्णः पीठमध्येसुखासीनः तद्वामेहेमवर्णासीता पुरतः कनकवर्णोहनुमान् पश्चिमेहेमवर्णोलक्ष्मणः पार्श्वयोः श्यामवर्णो भरतः रक्तवर्णःशत्रुघ्नश्च वायव्ये हेमपिंगलः सुग्रीवः कालवर्णोविभीषणः रक्तवर्णोंगदः कनकवर्णो जांबवान्, एतैः परिवृतः सर्वालंकारभूषितः ॥ १ ॥

## २१७ अथ डकारस्य—

गरुडोदेवता कांचनप्रभः कुंचितदक्षिणपादः पृष्ठेनिक्षिप्तवामपादः प्रसारितोभयपक्षः हृदिबद्धांजलिपुटः नानाभरणभूषितः ॥ १ ॥

## २१८ अथ ढकारस्य—

सप्तमातृकादेवताः—तत्र ब्राह्मीहेमवर्णा अभयशूलाक्षमालावरहस्ता जटामकुटधारिणी हंसध्वजवाहना सर्वालंकारभूषिता ॥ १ ॥ माहेश्वरी रक्ताभा अभयशूलाक्षमालावरहस्ता जटामकुटधारिणी वृषभध्वजवाहना ॥२॥ कौमारी अरुणप्रभा अभयशक्तिकुक्कुटवरहस्ता मयूरध्वजवाहना सर्वालंकारभूषिता ॥ ३ ॥ वैष्णवी श्यामा अभयशंखचक्रवरहस्तागरुड ध्वजवाहना सर्वालंकारभूषिता ॥ ४ ॥ वाराही श्यामवर्णा वराहमुखी अष्टभुजा दक्षिणादितःअभयमुसलखड्गचक्रशंखखेटहलवरधरा सिंहारूढा सर्वालंकारभूषिता॥५॥ माहेंद्री रक्तवर्णा चतुर्भुजा अभयशक्तिवज्रवरहस्ता गजध्वजवाहना सर्वालंकारभूषिता॥६॥ चामुंडा रक्तवर्णा चतुर्भुजा अभयकपालशूलवरहस्ता व्याघ्रचर्मांबरधरा सर्वालंकारभूषिता ॥ ७॥

## २१९ अथ णकारस्य—

विष्णुर्देवता पद्मकिंजल्कनिभः चतुर्भुजः पद्मगदाचक्रशंखधरः पीतांबरः सर्वालंकारभूषितः स्थितः ॥ १ ॥

## २२० अथ तकारस्य—

अच्युतोदेवता पीतवर्णः चतुर्भुजः शंखपद्मचक्रगदाधरः श्रीभूसहितः सर्वालंकारभूषितः ॥ १ ॥

## २२१ अथ थकारस्य—

पुरुषोत्तमोदेवता चक्रपद्मशंखगदाधरः चतुर्भुजः स्फटिकवर्णः सर्वालंकारभूषितः ॥ १ ॥

## २२२ अथ दकारस्य-

अत्रिर्देवता अरुणप्रभः जटावान् आसीनः दक्षिणेज्ञानमुद्रां वामे पुस्तकं च दधानः सर्वालंकारभूषितः ॥ १ ॥

## २२३ अथ धकारस्य-

कुबेरोदेवता सितप्रभः द्विभुजः पद्मखलीनहस्तः तुरंगारूढः सर्वाभरणभूषितः ॥ १ ॥

## २२४ अथ नकारस्य-

लंबोदरोदेवता अरुणप्रभः चतुर्भुजः भग्नदंतपाशांकुशमहाफलहस्तः गजवक्त्रः सर्वाभरणभूषितः ॥ ३७ ॥

## २२५ अथ पकारस्य-

योगनृसिंहोदेवता हेमनिभः जानूपरिप्रसारितमुख्यबाहुद्वयः इतराभ्यां चक्रशंखधरः सर्वालंकारभूषितः ॥ १ ॥

## २२६ अथ फकारस्य-

भीमनृहरिर्देवता तप्तकांचनसन्निभः चतुर्भिर्बाहुभिश्चतुश्चक्राणि दधानः ज्वालाकेशधरः दंष्ट्राकरालवदनः सर्वालंकारभूषितः ॥ १ ॥

## २२७ अथ बकारस्य-

बलरामोदेवता सितप्रभः द्विभुजः दक्षिणेहलधरः प्रलंबवामहस्तः नीलांबरधरः सर्वालंकारभूषितः ॥ १ ॥

## २२८ अथ भकारस्य-

पूर्वोक्तयोगनृसिंहोदेवता अन्यत्सर्वं पकारवत् ॥ १ ॥

## २२९ अथ मकारस्य-

नारायणोदेवता श्यामवर्णः पद्मासनस्थः चतुर्भुजः शंखचक्रगदापद्मधरः श्रीभूभ्यांसहितः सर्वाभरणभूषितः ॥ १ ॥

## २३० अथ यकारस्य-

वायुर्देवता धूम्रवर्णः द्विभुजः अंकुशध्वजहस्तः हरिणारूढः सर्वाभरणभूषितः ॥ १ ॥

## २३१ अथ रेफस्य-

धूमध्वजोदेवता अरुणवर्णः दक्षिणेचतुर्हस्तः वामेत्रिहस्तः प्रादक्षिण्येन स्रुक्स्रुवाक्षमालाशक्तितोमरव्यजनघृतपात्रधरः त्रिपाद् द्विशीर्षः सर्वालंकारभूषितः ॥ १ ॥

## २३२ अथ लकारस्य-

इंद्रोदेवता मेघश्यामः चतुर्भुजः अभयवज्रशंखवरहस्तः गजारूढः सर्वालंकारभूषितः ॥ १ ॥

## २३३ अथ वकारस्य-

वरुणोदेवता श्यामलः द्विभुजः मकरवाहनारूढः दक्षिणेपाशहस्तः वामेऽभयप्रदः सर्वालंकारभूषितः ॥ १ ॥

## २३४ अथ शकारस्य-

उमादेवता श्यामवर्णा द्विभुजा दक्षिणेपद्मधरा प्रलंबवामहस्ता चंद्रकलावतंसा सर्वालंकारभूषिता ॥ १ ॥

## २३५ अथ षकारस्य-

लक्ष्मीर्देवता कांचनप्रभा पद्मासनासीना चतुर्भुजा अभयपद्मद्वयवरहस्ता गजद्वयसमुद्धृतकुंभामृताभिषिक्ता सर्वाभरणभूषिता ॥ १ ॥

## २३६ अथ सकारस्य-

चन्द्रोदेवता स्फटिकसन्निभः सिंहासनेसमासीनः द्विभुजः कुमुदद्वयधारी श्यामया धृतकुमुदया रोहिण्या सहितः सर्वालंकारभूषितः ॥ १ ॥

## २३७ अथ हकारस्य-

सूर्योदेवता रक्तवर्णः प्रभामंडलमध्येऽष्टदलपद्म आसीनः द्विभुजः पद्मद्वयधरः सर्वालंकारभूषितः ॥ १ ॥

## २३८ अथ ळकारस्य-

सूर्योदेवता अन्यत्सर्वं पूर्ववत् ॥ १ ॥

## २३९ अथ क्षकारस्य-

पूर्वोक्तभीमनृसिंहोदेवता अन्यत्सर्वंपूर्ववत् ॥ १ ॥

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्णाटकजनपदसंपदधिष्ठानभूतश्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपालप्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्रीमद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेंतेंबरगंडलोकैकवीरयदुकुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडधरणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितमहीशूरपुरवराधीशकृष्णराजमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेचामुंडादि शक्तिस्वरूपनिरूपणंनामप्रथमोनिधिः संपूर्णः ॥ १ ॥

श्रीचामुंडाचरणारविंदार्पणमस्तु ॥

॥ शुभमस्तु ॥

---

इति श्रीतत्त्वनिधिग्रन्थान्तर्वर्ती प्रथमः शक्तिनिधिः सम्पूर्णः ।



श्रीः।

अथ

# श्रीतत्त्वनिधौ–

## द्वितीयोविष्णुनिधिः।

### १ अथ विराट्पुरुषध्यानम् (भागवते २ स्कन्धे १ अध्याये.)

पातालमेतस्यहिपादमूलंपठंतिपार्ष्णिप्रपदेरसातलम् ॥ महातलंविश्वसृजस्सुगुल्फौतलातलंवैपुरुषस्यजंघे ॥ १ ॥ द्वेजानुनीसुतलंविश्वमूर्तेरूरुद्वयंवितलंचातलंच ॥ महीतलंतज्जघनंमहीपतेनभस्थलंनाभिसरोगृणंति ॥ २ ॥ उरस्थलंज्योतिरनीकमस्यग्रीवामहर्वदनंवैजनोस्य ॥ तपोललाटंविदुरादिपुंसस्सत्यंचशीर्षाणिसहस्रशीर्ष्णः॥ ३॥ इंद्रादयोबाहवआहुरुस्राःकर्णौदिशः श्रोत्रममुष्यशब्दः॥ नासत्यदस्रौपरमस्यनासेघ्राणंचगंधोमुखमग्निरिद्धः ॥ ४ ॥ द्युरक्षिणीचक्षुरभूत्पतंगःपक्ष्माणिविष्णोरहनीउभेच॥ तद्भ्रूविजृंभःपरमेष्ठिधिष्ण्यमापोस्यतालूरसएवजिह्वा ॥ ५॥ छंदांस्यनंतस्यवचोगृणंतिदंष्ट्रायमेंदूडुगणाद्विजानि ॥ हासोजनोन्मादकरीचमाया दुरंतसर्गोयदपांगमोक्षः ॥ ६ ॥ व्रीडोत्तरोष्ठोधरएवलोभोधर्मस्तनोधर्मपथश्चपृष्ठः॥ कस्तस्यमेढ्रंवृषणौचमित्रःकुक्षिस्समुद्रागिरयोस्थिसंघाः ॥ ७॥ नद्योस्यनाड्योथतनूरुहाणिमहीरुहाविश्वतनोर्नृपेंद्र ॥ अनंतवीर्यश्वसितं मातरिश्वागतिर्वयःकर्मगुणप्रवाहः ॥ ८ ॥ ईशस्यकेशान्विदुरंबुवाहान्वासस्तुसंध्येकुरुवर्यभूम्नः ॥ अव्यक्तमाहुर्हृदयंमनश्चसचंद्रमास्सर्वविकारकोशः ॥ ९ ॥ विज्ञानशक्तिंमतिमामनंतिसर्वात्मनोंतःकरणंगिरित्रः ॥ अश्वाश्वतर्युष्ट्रगजानखानिसर्वेमृगाः पशवःश्रोणिदेशः ॥ १० ॥ वचांसि तद्व्याकरणंविचित्रंमनुर्मनीषामुनयोनिवासः ॥ गंधर्वविद्याधरचारणाप्सर-

स्स्वराःस्मृतिर्ह्यसुरानीकवर्यः ॥ ११ ॥ ब्रह्माननंक्षत्रभुजोमहात्माविडूरुरं-
घ्रिश्रितकृष्णवर्णः ॥ स्वाहास्वधावीर्यगुणोपपन्नोहव्यात्मकःकर्मवितानयो।
गः ॥ १२ ॥ इयानसावीश्वरविग्रहस्ययस्सन्निवेशःकथितोमयाते ॥ संधा-
र्यतेस्मिन्वपुषिस्थविष्ठेमनस्स्वबुद्ध्यानयतोस्तिकिंचित् ॥ १३ ॥ १ ॥

## २ अथ महावैकुंठमूर्तिध्यानम्–( पाद्मोत्तरखंडे )

तस्मिन्मणिमयस्तंभसहस्रेसूर्यवर्चसि ॥ विमानेशुशुभेदिव्येसंस्थितो
भगवान्हरिः ॥ १ ॥ तत्रचाधारशक्त्यादिधृतेपीठेहिरण्मये ॥ नानारत्न-
मयेदिव्येनानारत्नसमन्विते ॥ २ ॥ तन्मध्येष्टदलेपद्मेमंत्राक्षरमयेशुभे ॥
कर्णिकायांसुरम्यायांलक्ष्मीवीजेशुभाक्षरे ॥ ३ ॥ तस्मिन्बालार्कसाहस्र-
कोटितुल्यप्रभान्वितः ॥ दिव्योनारायणः श्रीमानासीनःपंकजासने ॥ ४ ॥
तस्यदक्षिणतः पार्श्वेजगन्माताहिरण्मयी ॥ सर्वलक्षणसंपन्नादिव्याभरण-
भूषिता ॥ ५ ॥ वसुपात्रंमातुलुंगंस्वर्णपद्मेवहाकरैः ॥ वामतःपृथिवीदे-
वीनीलोत्पलदलप्रभा ॥ ६ ॥ नानालंकारसंयुक्ताविचित्रांबरभूषिता ॥
वहासाह्यूर्ध्वबाहुभ्यांरम्यंरक्तोत्पलद्वयम् ॥ ७ ॥ उत्तराभ्यांतथादेवी
धान्यपात्रंशुकं तथा ॥ गृहीतचामरादिव्याशक्तयोविमलादयः ॥ ८ ॥
दलाग्रेषुसमासीनास्सर्वलक्षणशोभिताः ॥ तासांमध्येसमासीनोभगवान-
च्युतोहरिः ॥ ९ ॥ शंखचक्रगदापद्मपाणिभिर्दिव्यभूषणैः ॥ केयूरांगदहा-
राद्यैर्भूषणैरुपशोभितः ॥ १० ॥ प्रातरुद्यत्सहस्रांशुकुंडलाभ्यांविराजितः ॥
पूर्वोक्तैस्त्रिदशैर्नित्यंसेवितःपुरुषोत्तमः ॥ ११ ॥ आस्तेवैकुंठनगरेनित्य-
मुक्तैकभोगवान् ॥ श्रीमदष्टाक्षरैर्मंत्रैःसिद्धानांवैमनीषिणाम् ॥ १२ ॥
गमनं वैष्णवेलोकेनेतरेषांकथंचन ॥ रक्तवर्णः ॥ १ ॥

## ३ अथ विष्णुध्यानम्–( पाद्मपुराणे )

देवदेवस्तुकर्तव्यःशेषसुप्तोद्विबाहुकः ॥ एकपादोस्यकर्तव्योलक्ष्म्यु-
त्संगगतःप्रभोः ॥ १ ॥ तथापरश्चकर्तव्यश्शेषभोगांकसंस्थितः ॥ एकः
करोस्यकर्तव्यःसव्यजानौप्रसारितः ॥ २ ॥ कर्तव्योमूर्धदेशस्थस्तथात-

स्यापरः करः ॥ नाभीसंभूतकमलेसुखासीनःपितामहः ॥ ३ ॥ नालेलग्नौतु कर्तव्यौपद्मस्यमधुकैटभौ ॥ शंखचक्रगदादीनिमूर्तानिपरितोन्यसेत् ॥ ४ ॥ मेघवर्णः ॥ १ ॥

### ४ अथ लक्ष्मीध्यानम्–( रत्नकोशे )

अरुणकमलसंस्थातद्रजःपुंजवर्णाकरकमलधृतेष्टाभीतियुग्मांबुजाच ॥ मणिमुकुटविचित्रालंकृताकल्पजातैर्भवतुभुवनमातासंततंश्रीश्श्रियैनः ॥ ॥ १ ॥ कनकवर्णः ॥ १ ॥

### ५ अथ भूदेवीध्यानम्–( पांचरात्रे )

स्वर्णवर्णाद्विहस्ताचदक्षिणेनाभयप्रदा ॥ दाडिमीफलसंयुक्तावामेकल्पतरोरधः ॥ १ ॥ वामपादेनसंस्पृष्टनिधिकुंभाधरामता ॥ सर्वालंकारभूषाढ्याध्येयासर्वफलप्रदा ॥ २ ॥ स्वर्णवर्णः ॥ १ ॥

### ६ अथ नीलादेवीध्यानम्–( पांचरात्रे )

नीलोत्पलदलश्यामानीलवस्त्रविभूषिता ॥ चतुर्भुजासुखासीनावराभयकरान्विता ॥ १ ॥ इतराभ्यांतुहस्ताभ्यांकुमुदद्वयधारिणी ॥ सर्वाभरणसंयुक्तानीलादेवीसमीरिता ॥ २ ॥ श्यामवर्णः ॥ १ ॥

### ७ अथ वैकुंठनारायणध्यानम्–( अष्टाक्षरीकल्पे )

सव्यंपादंप्रसार्यश्रितदुरितहरंदक्षिणंकुंचयित्वाजानुन्याधायसव्येतरमितरभुजंनागभोगेनिधाय ॥ पश्चाद्बाहुद्वयेनप्रतिभटशमनेधारयञ्छंखचक्रेदेवीभूषादिजुष्टोजनयतिजगतांशर्मवैकुंठनाथः ॥ १ ॥ मेघवर्णः ॥ १ ॥

### ८ अथ तारकरामध्यानम्–( श्रीरामकल्पे )

वैदेहीसहितंसुरद्रुमतलेहैमेमहामंडपेमध्येपुष्पकमासनेमणिमयेवीरासनेसंस्थितम् ॥ अग्रेवाचयतिप्रभंजनसुतेतत्त्वंमुनिभ्यःपरंव्याख्यांतंभरतादिभिःपरिवृतंरामंभजेश्यामलम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

### ९ अथ शिशुमारमूर्तिध्यानम्–( मयूखेदानखंडे )

शिशुमारस्स्फुरत्तारानिभकांतिश्चतुर्भुजः ॥ शंखचक्रवराभीतिलसत्पा

णिस्त्रयीमयः ॥ १ ॥ ज्योतिश्चक्राधारपुच्छश्रितदेवगणोज्ज्वलः ॥ कालरूपीसदाध्येयोभक्ताभीष्टप्रदोहरिः ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

१० अथ त्रिविक्रमध्यानम्-( पांचरात्रेमंत्रसारेभागवते )

त्रिविक्रमोरक्तवर्णश्शंखचक्रगदाब्जभृत् ॥ किरीटहारकेयूरकुंडलैश्चविराजते ॥ १ ॥ स्फुरत्किरीटांगदमीनकुंडलश्रीवत्सरत्नोत्तममेखलांबरैः ॥ मधुव्रतस्रग्वनमालयावृतोरराजराजन्भगवानुरुक्रमः ॥ २ ॥ क्षितिंपदैकेनबलेर्विचक्रमेनभश्शरीरेणादिशश्चबाहुभिः ॥ पदंद्वितीयात्क्रमतस्त्रिविष्टपंनवैतृतीयस्यतदीयमण्वपि ॥ ३ ॥ उरुक्रमस्यांघ्रिरुपर्यधोदिवोमहर्जनाभ्यांतपसःपरंगतः ॥ रक्तवर्णः ॥ १ ॥

११ अथ हयग्रीवध्यानम्-( पांचरात्रे )

वंदेतुरंगवदनंशशिबिंबसंस्थंचंद्रावदातममृतात्मकरैस्समंतात् ॥ अंडांतरंबहिरपिप्रतिभासयंतंशंखाक्षपुस्तकसुबोधयुताब्जबाहुम् ॥ १ ॥ श्वेतवर्णः ॥-॥ प्रकारान्तरेण-( वेदांताचार्यकृतहयग्रीवस्तुतौ ) व्याख्यामुद्रांकरसरसिजैःपुस्तकंशंखचक्रेबिभ्रद्भिन्नस्फटिकरुचिरेपुंडरीकेनिषण्णः । अम्लानश्रीरमृतविशदैरंशुभिःप्लावयन्मामाविर्भूयादनघमहिमामानसेवागधीशः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१२ अथ भूवराहमूर्तिध्यानम्-( पांचरात्रे )

श्यामस्सुदर्शनदराभयसद्वरेतोभूम्यायुतोखिलनिजोक्तपरिग्रहैश्च ॥ ध्येयोनिजैश्चतनुभिस्सकलैरुपेतःकोलोहरिस्सकलवांछितासिद्धयेनः ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१३ अथ धरणीवराहमूर्तिध्यानम्-( हेमाद्रौदानकांडे )

वराहरूपःकार्यस्तुशेषोपरिगतःप्रभुः ॥ शेषश्चतुर्भुजःकार्यश्चारुरत्नफणान्वितः ॥ १ ॥ कर्तव्यौसीरमुसलौकरयोस्तस्ययादव ॥ सर्परूपश्च कर्तव्यस्तथैवरचितांजलिः ॥ २ ॥ आलीढस्थानसंस्थानस्तत्पृष्ठेभगवान्भवेत् ॥ वामारत्निगतातस्ययोषिद्रूपावसुंधरा ॥ ३ ॥ नमस्कारपरा

तस्यकर्तव्याद्विभुजाशुभा ॥ यस्मिन्भुजेधरादेवीतत्रशंखःकरेभवेत् ॥ ४ ॥
अन्येतस्यकराःकार्याःपद्मचक्रगदाधराः ॥ पद्मासनस्थांकुर्वीतश्रियन्त्रैलोक्यमातरम् ॥ ५ ॥ गौरवर्णांसुरूपांचसर्वालंकारभूषिताम् ॥
रौक्मपद्मकरव्यग्रांवरदांदक्षिणेनतु ॥ ६ ॥ वराहः श्यामवर्णः ॥ भूमिश्शुक्लवर्णा ॥ श्रीस्सुवर्णवर्णा ॥ शेषश्शुभ्रवर्णः ॥ १ ॥

## १४ श्रीकरमूर्तिध्यानम्—( पांचरात्रे )

आदित्यचंद्रावपिशंखचक्रेशंखप्रसूनाख्यनिधीदधानः ॥ चिंत्यःकराभ्यांवसुतर्पयन्सस्वांकस्थलक्ष्मीर्गरुडांससंस्थः ॥ १ ॥ कांचनवर्णः ॥ १ ॥

## १५ अथ हंसमूर्तिध्यानम्—( पांचरात्रे मंत्रसारे )

ध्यायेद्रवींदुकरमिंदुसहस्रलक्षकांतिंप्रियासहितमास्थितमिंदुबिंबे ॥
शंखारिदोर्द्वयमुदर्कमहेंदुबिंबात्संसिच्यमानममृतेनरमाधिनाथम् ॥ १ ॥
शुक्लवर्णः ॥ १ ॥

## १६ अथ दधिवामनमूर्तिध्यानम्—( पांचरात्रे )

ध्यायेत्सुशुक्लमरविंददलायताक्षंसौवर्णपात्रदधिभोज्यमथामृतंच ॥
दोर्भ्यांदधानमखिलैश्चसुरैस्समेतंशीतांशुमंडलगतंरमयासमेतम् ॥ १ ॥
शुक्लवर्णः ॥ १ ॥

## १७ अथ अश्वत्थनारायणध्यानम्—( ब्रह्मांडपुराणे अश्वत्थकल्पे )

श्वेतवर्णंसलक्ष्मीकंभुजाष्टकविभूषितम् ॥ शंखचक्रधरंदेवंपीतवाससमच्युतम् ॥ १ ॥ अभयंवरदंशांतंखड्गखेटकधारिणम् ॥ धनुर्बाणसमायुक्तंचिंतयेत्पुरुषोत्तमम् ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

## १८ अथ लक्ष्मीनृसिंहध्यानम्—( तन्मन्त्रध्याने )

शरच्चंद्रनिभंदेवंशंखचक्रवराभयान् ॥ बिभ्राणंपुंडरीकाक्षंलक्ष्म्यालिंगितविग्रहम् ॥ १ ॥ सिंहवक्त्रंमहाकायंनृसिंहंहृदिभावयेत् ॥ श्वेतवर्णः १ ॥

अथ केशवादिचतुर्विंशतिमूर्तीनांलक्षणानि-( पांचरात्रेक्रियापादे )

१९ तत्रकेशवध्यानम्-

केशवस्तुसुवर्णाभश्शंखचक्रगदाब्जभृत् ॥ शुक्लांबरधरस्सौम्योमुक्ताभरणभूषितः ॥ १ ॥ दक्षिणोर्ध्वकरेशंखःवामोच्चकरेचक्रं वामाधः करेगदा दक्षाधःकरेपद्मं शुक्लांबरः मुक्ताभरणः कार्यः॥ स्वर्णवर्णः ॥ १ ॥

२० अथ नारायणध्यानम्-

नारायणोघनश्यामःपद्मशंखगदारिभृत् ॥ पीतवासामणिमयैर्भूषणैरुत्तमैर्वृतः ॥ १ ॥ दक्षिणाधःकरेशंखः दक्षोर्ध्वकरेपद्मं वामोच्चकरे गदा वामाधःकरेचक्रम् ॥ मेघश्यामवर्णः ॥ १ ॥

२१ अथ माधवध्यानम्-

माधवस्तूत्पलप्रख्यश्चक्रशंखगदाब्जभृत् ॥ चित्रमाल्यांबरधरःपुंडरीकनिभेक्षणः ॥ १ ॥ वामोर्ध्वकरेशंखः वामाधःकरेपद्मं दक्षोर्ध्वकरेचक्रं दक्षाधःकरेगदा ॥ कृष्णवर्णः ॥ १ ॥

२२ अथ गोविंदध्यानम्-

गोविंदश्शशिवर्णःस्यात्पद्मशंखगदारिभृत् ॥ रक्तारविंदनयनस्तप्तकांचनभूषणः ॥ १ ॥ वामाधःकरेशंखः दक्षाधःकरेचक्रं दक्षोर्ध्वकरे गदा वामोच्चकरेपद्मम् ॥ श्वेतवर्णः ॥ १ ॥

२३ अथ विष्णुध्यानम्-

धौतवर्णोभवेद्विष्णुश्चक्रशंखगदाब्जभृत् ॥ हेमांबरधरस्स्रग्वीकेयूरांगदभूषितः ॥ १ ॥ वामोर्ध्वकरेशंखः वामाधःकरेचक्रं दक्षाधःकरेगदा दक्षोर्ध्वकरेपद्मम् ॥ श्वेतवर्णः ॥ १ ॥

२४ अथ मधुसूदनध्यानम्-

अरविंदनिभश्श्रीमान्मधुजित्कमलाश्रयः ॥ शंखंचक्रंगदांपद्मंदोर्भिर्नित्यंबिभर्त्यसौ ॥ १ ॥ दक्षोर्ध्वकरेशंखः वामोच्चकरेपद्मं वामाधः करेगदा दक्षाधःकरेचक्रम् ॥ रक्तवर्णः ॥ १ ॥

२५ अथ त्रिविक्रमध्यानम्-

त्रिविक्रमोरक्तवर्णः शंखचक्रगदाब्जभृत् ॥ किरीटहारकेयूरकुंडलैश्चविराजते ॥ १ ॥ वामाधःकरेशंखः दक्षाधःकरेपद्मं दक्षोर्ध्वकरेगदा वामोर्ध्वकरेचक्रम् ॥ रक्तवर्णः ॥ १ ॥

२६ अथ वामनध्यानम्-

वामनःकुंदवर्णस्स्यात्पुंडरीकायतेक्षणः ॥ दोर्भिश्शंखंगदांचक्रंपद्मंचैव बिभर्त्यसौ ॥ १ ॥ दक्षाधःकरेशंखः दक्षोच्चकरेचक्रं वामोच्चकरेगदा वामाधःकरेपद्मम् ॥ श्वेतवर्णः ॥ १ ॥

२७ अथ श्रीधरध्यानम्-

श्रीधरःपुंडरीकाभःचक्रशंखगदाब्जभृत् ॥ रक्तारविंदनयनोमुक्तादाम विभूषितः ॥ १ ॥ वामाधःकरेशंखः दक्षाधःकरेपद्मं दक्षोर्ध्वकरेचक्रं वामोच्चकरेगदा ॥ श्वेतवर्णः ॥ १ ॥

२८ अथ हृषीकेशध्यानम्-

विद्युद्वर्णोहृषीकेशश्चक्रशंखगदाब्जभृत् ॥ रक्तमाल्यांबरधरःपुंडरीकावतंसकः ॥ १ ॥ वामाधःकरेशंखः दक्षाधःकरेगदा दक्षोर्ध्वकरेचक्रं वामोर्ध्वकरेपद्मम् ॥ कनकवर्णः ॥ १ ॥

२९ अथ पद्मनाभध्यानम्-

इंद्रनीलनिभश्चक्रशंखपद्मगदाधरः ॥ पद्मनाभःपीतवासाश्चित्रमाल्यानुलेपनः ॥ १ ॥ दक्षाधःकरेशंखः दक्षोर्ध्वकरेपद्मं वामोर्ध्वकरेचक्रं वामाधःकरेगदा ॥ नीलवर्णः ॥ १ ॥

३० अथ दामोदरध्यानम्-

दामोदरश्शाद्वलाभोगदापद्मारिशंखभृत् ॥ पीतवासाविशालाक्षोनानारत्नविभूषितः ॥ १ ॥ दक्षोर्ध्वकरेशंखः वामोर्ध्वकरेगदा वामाधःकरेचक्रं दक्षाधःकरेपद्मम् ॥ दूर्वाश्यामवर्णः ॥ १ ॥

३१ अथ संकर्षणध्यानम्-

संकर्षणस्सितोधत्तेशंखपद्मारिसद्गदाः ॥ दक्षोर्ध्वकरेशंखः वामोच्चकरेपद्मं वामाधःकरेचक्रं दक्षाधःकरेगदा ॥ श्वेतवर्णः ॥ १ ॥

### ३२ अथ वासुदेवध्यानम्-

वासुदेवश्शंखचक्रगदापद्मधरस्सितः ॥ दक्षोर्ध्वकरेशंखः वामोर्ध्व-करेचक्रं वामाधःकरेपद्मं दक्षाधःकरेगदा ॥ श्वेतवर्णः ॥ १ ॥

### ३३ अथ प्रद्युम्नध्यानम्-

प्रद्युम्नःकनकाभस्स्याच्छंखाब्जारिगदाधरः॥ दक्षोर्ध्वकरेशंखः वामो-र्ध्वकेरेगदा वामाधःकरेपद्मं दक्षाधःकरेचक्रम् ॥ कनकवर्णः ॥ १॥

### ३४ अथ अनिरुद्धध्यानम्-

अनिरुद्धोनीलवर्णःशंखपद्मगदारिभृत् ॥ वामोर्ध्वकरेशंखः वामाधः-करेपद्मं दक्षाधःकरेचक्रं दक्षोच्चकरेगदा ॥ नीलवर्णः ॥ १ ॥

### ३५ अथ पुरुषोत्तमध्यानम्-

पद्मशंखगदाचक्रभृच्छ्वेतःपुरुषोत्तमः ॥ वामोर्ध्वकरेशंखः वामाधः-करेगदा दक्षाधःकरेचक्रं दक्षोच्चकरेपद्मम् ॥ श्वेतवर्णः ॥ १ ॥

### ३६ अथ अधोक्षजध्यानम्-

धत्तेचाधोक्षजोनीलंगदाचक्रदराब्जकम् ॥ वामोर्ध्वकरेशंखः वामाधः करेचक्रं दक्षाधःकरेपद्मं दक्षोर्ध्वकरेगदा ॥ नीलवर्णः ॥ १ ॥

### ३७ अथ नारसिंहध्यानम्-

नारसिंहश्श्वेतवर्णःगदाशंखारिपद्मभृत् ॥ वामाधःकरेशंखः दक्षा-धःकरेचक्रं दक्षोर्ध्वकरेपद्मं वामोर्ध्वकरेगदा ॥ श्वेतवर्णः ॥ १ ॥

### ३८ अथ अच्युतध्यानम्-

धत्तेच्युतःस्वर्णवर्णःगदाशंखारिसारसान् ॥ वामाधःकरेशंखः दक्षा-धःकरेगदा दक्षोर्ध्वकरेपद्मं वामोच्चकरेचक्रम् ॥ कनकवर्णः ॥ १ ॥

### ३९ अथ जनार्दनध्यानम्-

जनार्दनोरक्तवर्णश्चक्रशंखगदाब्जभृत् ॥ वामोर्ध्वकरेशंखः वामा-धःकरेगदा दक्षाधःकरेपद्मं दक्षोर्ध्वकरेचक्रम् ॥ रक्तवर्णः ॥ १ ॥

## ४० अथ उपेंद्रध्यानम्-

उपेंद्रोनीलवर्णस्तुगदाचक्राब्जशंखभृत् ॥ दक्षाधःकरेशंखः दक्षोर्ध्वकरेगदा वामोच्चकरेचक्रं वामाधःकरेपद्मम् ॥ नीलवर्णः ॥ १ ॥

## ४१ अथ हरिध्यानम्-

हरिःकनकवर्णस्स्याचक्रशंखगदाब्जभृत् ॥ दक्षाधःकरेशंखः दक्षोर्ध्वकरेचक्रं वामोच्चकरेपद्मं वामाधःकरेगदा ॥ कनकवर्णः ॥ १ ॥

## ४२ अथ कृष्णध्यानम्-

कृष्णस्तुकृष्णवर्णस्स्याद्गदाब्जदरचक्रभृत् ॥ दक्षाधःकरेशंखः दक्षोर्ध्वकरेगदा वामोच्चकरेपद्मं वामाधःकरेचक्रम् ॥ कृष्णवर्णः ॥ १ ॥ २४ ॥

---

## केशवादीनांवर्णाः-( पद्मपुराणे )

केशवःकनकप्रख्यःस्यादर्जुनसमाच्छविः ॥ नारायणश्श्यामवर्णोमाधवःस्फटिकप्रभः ॥ १ ॥ गोविंदःपद्मकिंजल्कनिभोविष्णुरुदाहृतः ॥ अरुणांबुजसंकाशोमधुसूदनउच्यते ॥ २ ॥ त्रिविक्रमश्शिखिनिभो वामनोबालसूर्यवत् ॥ श्रीधरःपीतवर्णाभोहृषीकेशस्तटित्प्रभः ॥ ३ ॥ पद्मनाभश्श्यामवर्णोबंधूककुसुमच्छविः ॥ दामोदरोद्वादशैतेकथिताः केशवादयः॥ ४ ॥-॥ वासुदेवादिमूर्तीनांयोवर्णःपरिकीर्तितः ॥ सएववासुदेवादिचतुर्णांतद्ध्रुवामपि ॥ ५ ॥ शुद्धस्फटिकसंकाशोविज्ञेयःपुरुषोत्तमः ॥ अधोक्षजश्श्यामवर्णोनृसिंहोहेमसन्निभः ॥ ६ ॥ पीतवर्णोच्युतोतीवरक्तवर्णोजनार्दनः ॥ उपेंद्रश्श्यामलःप्रोक्तोहरिःपीतनिभः स्मृतः ॥ ७ ॥ कृष्णःकृष्णांबुदप्रख्यश्चतुर्विंशतिमूर्तयः ॥

---

## अथ व्यूहचतुष्टयमूर्तिध्यानम्-( भट्टभास्करीये )

## ४३ तत्र संकर्षणध्यानम्-

वासुदेवस्वरूपेणकार्यस्संकर्षणःप्रभुः ॥ सतुशुक्लवपुःकार्योनीलवासायदूत्तमः ॥ १ ॥ गदास्थानेचमुसलंचक्रस्थानेचलांगलम् ॥ श्वेतवर्णः ॥ १ ॥

### ४४ अथ वासुदेवध्यानम्-

वासुदेवस्सितश्शांतस्सिताब्जस्थश्चतुर्भुजः ॥ योगमूर्ध्वोर्ध्वशंखश्चद-क्षेशार्ङ्गधरस्स्मृतः ॥ १ ॥ धारयेदुत्तरे चक्रं दक्षिणेचगदामिति ॥ श्वेतवर्णः ॥ १ ॥

### ४५ अथ प्रद्युम्नध्यानम्-

दक्षिणोर्ध्वकरेपद्मंदद्याच्छंखमधःकरे ॥ चक्रमूर्ध्वेतथावामेगदांदद्या-दधःकरे ॥ १ ॥ पीतवर्णः ॥ १ ॥

### ४६ अथानिरुद्धध्यानम्-

कृष्णंचतुर्भुजंदक्षेशरं खड्गं तथोत्तरे ॥ धनुःखेटधरंवीरमनिरुद्धंप्रच-क्षते ॥ १ ॥ कृष्णवर्णः ॥ १ ॥ ४ ॥

---

### अथ मत्स्यादिदशावतारमूर्तीनांध्यानम्-(पांचरात्रे) [वर्णस्तुपाद्मे]

### ४७ तत्र मत्स्यध्यानम्-

वामेशंखंगदांदक्षेद्विभुजोमत्स्यरूपधृक् ॥ नरांघ्रिर्मत्स्यरूपोवामत्स्य-रूपीजनार्दनः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### ४८ अथ कूर्मध्यानम्-

कूर्मस्तुकच्छपाकारोमत्स्यरूपोक्तरूपवान् ॥ स्वर्णवर्णः ॥ १ ॥

### ४९ अथ वराहध्यानम्-

मधुपिंगलवर्णंचचतुर्बाह्वायुधैर्वृतम् ॥ नरांगसूकरास्यंचमनाकूपी-नंसुभीषणम् ॥ १ ॥ श्रीर्वामकूर्परस्थाचधरानंतौपदानुगौ ॥ एतद्रूपधरं-वंदेवराहंभुक्तिमुक्तिदम् ॥ २ ॥ श्यामवर्णः ॥ १ ॥

### ५० अथ नृसिंहध्यानम्-

ज्वलदग्निसमाकारंसिंहवक्त्रंनरांगकम् ॥ दंष्ट्राकरालवदनंलोलजि-ह्वासुभीषणम् ॥ १ ॥ वृत्तास्यंजटिलंक्रुद्धमालीढंपीनवक्षसम् ॥ अभे-द्यतीक्ष्णनखरमात्मोरुकृतदानवम् ॥ २ ॥ तद्वक्षोदारयंतंचकराभ्यांनख-रैर्भृशम् ॥ गदाचक्रधरंद्वाभ्यांनृसिंहंप्रणमेत्प्रभुम् ॥ ३ ॥ श्वेतवर्णः ॥ १ ॥

## ९१ अथ वामनध्यानम्—

कुंडीच्छत्रधरोद्वाभ्यां वामनःपरिकीर्तितः ॥ १ ॥ श्यामवर्णः॥ १॥

## ९२ अथ परशुरामध्यानम्—

क्षत्रांतकारणंघोरमुद्वहन्परशुंकरे ॥ जामदग्न्यश्चकर्तव्योरामश्शत्रुनिषूदनः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

## ९३ अथ श्रीरामध्यानम्—

युवाप्रसन्नवदनस्सिंहस्कंधोरुणेक्षणः ॥ आजानुबाहुःकर्तव्योरामोबाणधनुर्धरः ॥ १ ॥ श्यामवर्णः ॥ १ ॥

## ९४ अथ बलरामध्यानम्—

मद्यपात्रंचसीरंचवामदक्षिणयोःक्रमात् ॥ गदामुसलवज्रंचहलीरामःदधत्सितः ॥ १ ॥ मुसलरूपंवज्रमित्यर्थः ॥ क्षीरवर्णः ॥ १ ॥

## ९५ अथ बुद्धध्यानम्—

काषायवस्त्रसंवीतः स्कंधसंसक्तचीवरः ॥ पद्मासनस्थोद्विभुजोध्येयोबुद्धःप्रकीर्तितः ॥ १ ॥ पाटलवर्णः प्रसिद्धः ॥ १ ॥

## ९६ अथ कल्किध्यानम्—

खड्गोद्यतकरःक्रुद्धोहयारूढोमहाबलः ॥ म्लेच्छच्छेदकरःकल्कीद्विभुजः परिकीर्तितः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

( ग्रंथांतरेदशावतारमूर्तीनांमध्येबुद्धस्थानेकृष्णइतिदृश्यते )

## ९७ अथ कृष्णध्यानम्—( पाद्मे )

शंखचक्रधरः श्यामोद्विभुजः कृष्णसंज्ञकः ॥श्यामवर्णः॥ ११॥०॥

---

## मत्स्यादिदशावतारमूर्तीनांवर्णाः—( पाद्मे )

मत्स्यः स्फटिकसंकाशःकूर्मःकांचनसप्रभः ॥वराहश्श्यामलनिभोधवलाकृतिरेववा ॥ १ ॥ नृसिंहश्चंद्रवर्णाभःप्रह्लादःकांचनप्रभः ॥ वामनश्श्यामलनिभोकालवर्णोमहाबलः॥ २॥ जामदग्न्यस्सुवर्णाभोराघवश्श्यामलाकृतिः॥ भरतश्श्यामलःप्रोक्तःलक्ष्मणःकनकप्रभः॥ ३शत्रुघ्नोरक्तवर्णाभो

सीताहेमनिभाकृतिः ॥ मांडवीरक्तवर्णाभाचोर्मिलाश्यामलाकृतिः ॥ ४ ॥ श्रुतकीर्तिस्सितांगीस्याद्धनूमान्कनकप्रभः ॥ अंगदोरक्तवर्णाभस्सुग्रीवोहेमपिंगलः ॥ ५ ॥ नीलोत्पलनिभःप्रोक्तोजांबवान्कनकप्रभः ॥ गुहस्तुतिलवर्णाभः कालवर्णोविभीषणः ॥ ६ ॥ बलःक्षीरनिभश्चैवरक्तवर्णाचरेवती ॥ मेघश्यामोभवेत्कृष्णोरुक्मिणीकनकप्रभा ॥ ७ ॥ कल्कीश्वेतनिभश्चैववर्णाएषांप्रकीर्तिताः ॥

---

### ५८ अथ लक्ष्मीनारायणध्यानम्—( भट्टभास्करीये )

नारायणश्चतुर्बाहुश्शंखचक्रीतथोत्तरे ॥ दक्षिणेतुगदापद्मीनीलजीमूतसन्निभः ॥ १ ॥ वामेश्रीर्वल्लकीहस्तापुष्टापद्मकरापरे ॥ श्यामवर्णः ॥ १ ॥

### ५९ अथ सूर्यनारायणध्यानम्—( ऋग्विधाने )

ध्येयस्सदासवितृमंडलमध्यवर्तीनारायणस्सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुंडलवान्किरीटीहारीहिरण्मयवपुःधृतशंखचक्रः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

### ६० अथाष्टमुखगंडभेरुंडनृसिंहध्यानम्—(अथर्वणरहस्येमंत्रसारे)

वंदेहंक्रूरघोरप्रबलतरमहागंडभेरुंडसिंहव्याघ्राश्वक्रोडशाखामृगवरखगराड्भल्लुकाद्यष्टवक्त्रम् ॥ द्वात्रिंशत्कोटिबाहुंहलमुसलगदाशंखचक्रादिहेतीर्बिभ्राणंभीमदंष्ट्रंशरभखगगजान्भक्षयंतंनृसिंहम् ॥ १ ॥ शरीरे रक्तवर्णः मुखेषुतत्तद्वर्णाः ॥ १ ॥

### अथवा प्रकारान्तरेणध्यानम्—( मंत्रसारे )

कल्पांताशनिविष्फुलिंगहुतभुङ्नीकाशनेत्रत्रयंकोलंवज्रसमानतुंडनखरंदंष्ट्रिद्विजिह्वाननम् ॥ १ ॥ ऋक्षंमारुतसातिमार्तिहरणंचाष्टाननंभीषणंध्यायेद्रुद्रमदांतकंशरभहृद्भेरुंडसिंहंसदा ॥ २ ॥ अष्टास्योवह्निदृष्टिर्भिदुरवरनखोविद्युदुज्ज्वालसिंहोहीराभौद्वौचपक्षौहृदयजठरगाह्यष्टकाल्यष्टदुर्गा ॥ ऊरूद्वौरुद्रकालौखगमृगनृहरिर्गंडभेरुंडरूपःपायादस्मान्सचक्रोहरिरिहशरभायुग्रशत्रून्प्रविध्यन् ॥ ३ ॥ हस्तांजल्याहतात्मद्विषदसुरवरोरोजबद्ध-

स्रपानव्यात्तास्यंदोर्युगांचनखदलितमहाशारभांगसुभूषम् ॥ बाहुद्वंद्वोपरुद्धासुरकचचरणंदोर्युगोद्यन्नखाग्रप्रच्छन्नारातिदेहंरविशशिदहनत्रीक्षणंवज्रपक्षम् ॥ ४ ॥ अंभोजंवीतिहोत्रांकुशविशिखमहापाशकुंतासिशक्तीरांत्रंचक्रंकुठोरोद्धतभुजयुगलद्वेषिदोःखङ्गशंखान् ॥ हैरण्यांत्रंत्रिशूलंफलकमपिमहापाशशीर्षंपिनाकंवज्रंकौमोदकींचाप्यतिबलमुसलंसंदधानंकराग्रैः ॥ ५ ॥ शरीरेरक्तवर्णः मुखेषुतत्तद्वर्णाः ॥ १ ॥

### ६१ अथ पंचवक्रनारसिंहध्यानम्–( मंत्रसारे )

पंचवक्रंमहाभीमंकालानलसमप्रभम् ॥ मुंडमालाधरंरौद्रंकंठहारेणशोभितम् ॥ १ ॥ नागयज्ञोपवीताढ्यंपंचाननसुशोभितम् ॥ चंद्रमौलिंनीलकंठंप्रतिवक्रंत्रिलोचनम् ॥ २ ॥ भुजैःपरिघसंकाशैर्दशभिश्चोपशोभितम् ॥ अक्षसूत्रंगदांपद्मंशंखंगोक्षीरसन्निभम् ॥ ३ ॥ धनुश्चमुसलंचैवतथाचक्रंमहत्प्रभम् ॥ खङ्गंचशूलपाशौचनृसिंहंरुद्ररूपिणम् ॥ ४ ॥ इंद्रगोपकनीलाभंचंद्राभंस्वर्णसन्निभम् ॥ पूर्वादिमोत्तरांतास्यमूर्ध्वास्यंसर्ववर्णकम् ॥ ५ बिभ्राणंसर्वजगतामाधारंगिरिकन्यके ॥ शरीरेरक्तवर्णः ॥ मुखेषुवर्णानां पंचकम् ॥ १ ॥

### ६२ अथ प्रतापरामध्यानम्–( मंत्रसारे )

दोर्भिःखड्गंत्रिशूलंडमरुमसिधनुर्दंडबाणंकुठारंशंखंचक्रंकृपाणंहलमुसलगदाभिंडिवालंचपाशम् ॥ उद्यद्बाहुंचमुष्टिंह्यभयवरकरंबिभ्रतंशुक्लवर्णंवंदेरामंत्रिणेत्रंत्वमररिपुकुलंमर्दयंतंप्रतापैः ॥ १ ॥ शुक्लवर्णः ॥ १ ॥

### ६३ अथ सपरिवारपट्टाभिरामध्यानम्–( रामाष्टोत्तरे )

वामेभूमिसुतापुरस्तुहनुमान्पश्चात्सुमित्रासुतश्शत्रुघ्नोभरतश्चपार्श्वदलयोर्वाय्वादिकोणेषुच ॥ सुग्रीवश्चविभीषणश्चयुवराट्तारासुतोजांबवान्मध्येनीलसरोजकोमलरुचंरामंभजेश्यामलम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ६४ अथ अनंतमूर्तिध्यानम्–( भविष्योत्तरेनंतकल्पे )

नवाम्रपल्लवाभासंपिंगभ्रूश्मश्रुलोचनम् ॥ दक्षिणोर्ध्वकरेपद्मंशंखंतस्या-

प्यधःकरे ॥ १ ॥ चक्रमूर्ध्वंकरेवामेगदांतस्याप्यधःकरे ॥ बिभ्रतंपुंडरीकाक्षं फणासप्तान्वितंभजे ॥ २ ॥ गोमूत्रवर्णः ॥ १ ॥

६५ अथ गोपालकृष्णध्यानम्-( भागवते )

नौमीड्यतेभ्रवपुषेतटिदंबरायगुंजावतंसशिखिपिञ्छलसन्मुखाय ॥ वन्यस्रजेकवलवेत्रविषाणवेणुलक्ष्मश्रियेमृदुपदेपशुपांगजाय ॥ १ ॥ नीलवर्णः १

६६ अथ संतानगोपालध्यानम्-( पांचरात्रे )

पिबंतंचस्तनंमातुर्मुखंसंवीक्ष्यसुस्मितम् ॥ अंगुल्यग्रैस्तनंचान्यंस्पृशंतंचमुहुर्मुहुः ॥ १ ॥ यशोदांकस्थितंगोपंध्यायेत्पुत्रप्रदंसदा ॥ १ ॥ नीलवर्णः ॥

६७ अथ मदनगोपालध्यानम्-( पांचरात्रे )

रक्तवर्णोदशभुजःसर्वालंकारभूषितः ॥ शंखचक्रगदापद्मपाशांकुशसुमाशुगान् ॥ १ ॥ इक्षुकोदंडमन्याभ्यांवादयन्वेणुमादरात् ॥ षोडशच्छदपद्मस्थषट्कोणोपरिसंस्थितः ॥ २ ॥ गोपालोमदनाख्योयंमंदस्मितमुखांबुजः ॥ स्वरपत्रस्थगोपीभिरादरादीक्षितोवतात् ॥ ३ ॥ रक्तवर्णः ॥ १ ॥

६८ अथ सुदर्शनध्यानम्-( पांचरात्रे )

शंखंचक्रंचपाशंपरशुमसिमिषुंशूलचापांकुशाग्निंबिभ्रत्तंवज्रखेटंहलमुसलगदाकुंतमत्युग्रदंष्ट्रम् ॥ ज्वालाकेशंत्रिणेत्रंज्वलदनलनिभंहारकेयूरभूषंध्यायेत्षट्कोणसंस्थंसकलरिपुजनःप्राणसंहारचक्रम् ॥ १ ॥ रक्तवर्णः ॥ १

६९ अथ चक्रध्यानम्-( पांचरात्रे )

तिर्यग्ज्वालाग्निरूपंज्वलितशिखिशिखोत्तुंगकेयूरबाहुंपिंगाक्षंदीप्तजिह्वांदशशतविलसत्तीक्ष्णधारातिरौद्रम् ॥ शार्ङ्गंचक्राब्जशंखान्शरमुसलधरंसर्वशत्रून्दहंतंषट्कोणाभ्यंतरस्थंरविनियुतनिभंचक्रराजंप्रसन्नम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७० अथ विष्वक्सेनध्यानम्-( पांचरात्रेपाद्मसंहितायाम् )

श्यामवर्णःचतुर्भिर्भुजैस्तर्जनीशंखचक्रगदादधानः पीठाधस्तात्प-

सारितदक्षिणपादः आकुंचितवामपादः किरीटादिसर्वालंकारभूषितो-
विष्वक्सेनः ॥ श्यामवर्णः ॥ १ ॥

### ७१ अथ हनुमत्स्वरूपम्–(तन्मंत्रध्याने)

स्फटिकाभंस्वर्णकांतिंद्विभुजंचकृतांजलिम् ॥ कुंडलद्वयसंशोभिमु-
खांबुजमहंभजे ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

### ७२ अथ पंचमुखांजनेयध्यानम्–(सुदर्शनसंहितायाम्)

पंचवक्त्रंमहाभीमंत्रिपंचनयनैर्युतम् ॥ कोटिसूर्यप्रतीकाशंकपिवक्त्रं-
सुतेजसम् ॥ १ ॥ दंष्ट्राकरालवदनंभ्रुकुटीकुटिलेक्षणम् ॥ अस्यैकंदक्षि-
णंवक्त्रंनारसिंहंमहाद्भुतम् ॥ २ ॥ अत्युग्रतेजोवपुषंभीषणंभयनाशनम्॥
पश्चिमेगारुडंवक्त्रंवक्रतुंडंमहाद्युति ॥ ३ ॥ पातालसिद्धिदंघोरंविषभूता-
दिकृंतनम् ॥ उत्तरंसौकरंवक्त्रंकृष्णंदीप्तंशिखोज्ज्वलम् ॥४॥ सर्वभूत-
प्रशमनंतापज्वरनिवारणम् ॥ऊर्ध्वंहयाननंघोरंदानवांतकरंपरम्॥५॥खड्ग
त्रिशूलखट्वाङ्गपाशमंकुशपर्वतौ ॥ द्रुमगोमुद्रिकामुंडंदधानंसुरवंदितम् ॥
॥ ६ ॥ स्वर्णवर्णः ॥ १ ॥

### ७३ अथ गरुडध्यानम्–(भट्टभास्करीये)

उपेंद्रस्याग्रतःपक्षीगुडाकेशःकृतांजलिः ॥ सव्यजानुगतोभूमौमूर्ध्ना-
चफणिमंडितः ॥ १ ॥ स्थूलजंघोनरग्रीवस्तुंगनासोनरांगकः॥द्विबाहुः
पक्षयुक्तश्चकर्तव्योविनतासुतः ॥ २ ॥ सुवर्णवर्णः ॥ १ ॥

### ७४ अथ श्रीकार्तवीर्यध्यानम्–(डामरतंत्रे)

अव्यात्सर्वभयात्प्रभाकरनिभःप्रद्योतनद्योतितस्वर्णस्रक्परिवीतकंध-
रधरोरक्तांशुकोष्णीषवान् ॥ नानाकल्पविभूषणःकरसहस्रार्धात्तबाणास-
नोबाणात्तार्धसहस्रबाहुरनिशंभूवल्लभोनःप्रभुः ॥ १ ॥ रक्तवर्णः ॥

### अथवा प्रकारांतेण ध्यानम्–(कार्तवीर्यार्जुनकल्पे)

सहस्रबाहुंसशरंसचापंरक्तांबरंरत्नकिरीटकुंडलम् ॥ चोरादिदुष्टामय-
नाशमिष्टंध्यायेन्महांतंभुविकार्तवीर्यम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७५ अथ मन्मथध्यानम्-( भट्टभास्करीये )

कामदेवस्तुकर्तव्योरूपेणाप्रतिमोभुवि ॥ अष्टबाहुःप्रकर्तव्योशंखपद्म-विभूषितः॥ १ ॥चापबाणकरश्चैवमदोदंचितलोचनः ॥ रतिःप्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला ॥ २॥ चतस्रस्तस्यकर्तव्याःपत्न्योरूपमनो-हराः ॥ चत्वारश्चकरास्तस्यकार्याभार्यास्तनोपगाः ॥ ३ ॥ केतौतुम-करःकार्यःपंचबाणरथोमहान् ॥-॥ कामंकांचनसंनिभमिति शैवागमे॥ स्वर्णवर्णः ॥ १ ॥

७६ अथ दत्तात्रेयध्यानम्-( तत्कल्पे )

मंदारमूलेमणिमंटपस्थितंसुवर्णदानैकनिबद्धदीक्षम् ॥ ध्यायेत्परीतंन-वनाथसिद्धैर्दारिद्र्यदावानलकालमेघैः ॥ १ ॥ व्याख्यामुद्रांकरसरसिजे-दक्षिणेसंदधानोजानुन्यस्तावरकरसरोजातवामोन्नतांसः ॥ ध्यानाधारा-त्सुखपरवशादर्धमामीलिताक्षोदत्तात्रेयोभसितधवलःपातुनःकृत्तिवासाः ॥ ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्नाटकजनपदसंपदधिष्ठानभूत-श्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपाल-प्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्री-मद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेंतेंबरगंडलोकैकवीरयदु-कुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडध-रणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितमहीशूरपुरवराधीशश्रीकृष्णरा-जमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथे-विराड्रूपादिविष्णु-स्वरूपनिरूपणंनामद्वितीयोविष्णुनिधिस्संपूर्णः ॥

---

इति श्रीतत्त्वनिधिग्रन्थान्तर्वर्ती द्वितीयोविष्णुनिधिः सम्पूर्णः ।

श्रीः ।

अथ

# श्रीतत्त्वनिधौ–

## तृतीयश्शिवनिधिः ।

### १ अथ महेश्वरध्यानम्–( शिवपंचाक्षरीमंत्रे )

शांतंपद्मासनस्थंशशधरमुकुटंपंचवक्रंत्रिणेत्रंशूलंवज्रंचखड्गं परशुमभयदंदक्षभागेवहंतम् ॥ नागंपाशंचघंटांप्रलयहुतवहंसांकुशंवामभागे नानालंकारयुक्तंस्फटिकमणिनिभंपार्वतीशंनमामि ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### २ अथ गौरीध्यानम्–( नृसिंहप्रासादे )

गौरीशुक्लांबरादेवीरूपेणाप्रतिमाभुवि ॥ पृथक्चतुर्भुजाकार्यादेवीसिंहासनेशुभा ॥ १ ॥ सिंहासनेस्याः कर्तव्यंकमलंचारुकर्णिकम् ॥ अष्टपत्रंमहाभागाकर्णिकायांसुसंस्थिता ॥ २ ॥ विनायकवदासीनादेवीकार्यामहाभुजा ॥ बृहन्नालंकरेकार्यंतस्याश्चकमलंशुभम् ॥ ३ ॥ दक्षिणेयादवश्रेष्ठकेयूरप्रांतसन्निभम् ॥ वामेमृतघटःकार्यस्तथाराजन्मनोहरः ॥ ४ ॥ तस्याअन्यौकरौकार्यौबिल्वशंखधराविति ॥ मरकतवर्णः ॥ १ ॥

### ३ अथ महाकैलासमूर्तिध्यानम्–(स्कांदेशंकरसंहितायामुपदेशकांडे)

शृणुतब्राह्मणाःसर्वेगुह्याद्गुह्यतरंपरम् ॥ अस्तिमेरोरुदग्भागेमहान्कैलासपर्वतः ॥ १ ॥ सांबस्यसगुणस्यायंसभक्तस्येंदुमौलिनः ॥ संवासोयोजनानांचविंशत्कोटिभिरायतः ॥ २ ॥ औन्नत्यमेतद्द्विगुणमस्यज्ञेयंद्विजोत्तमाः ॥ नवरत्नमयंतस्यमध्येशिखरमुत्तमम् ॥ ३ ॥ तत्रालयंमहेश-

स्यनानारत्नविचित्रितम् ॥ प्राकारगोपुराट्टालवलभीभिर्विराजितम् ॥ ४ ॥ तथासिंहासनेतत्रमहाञ्छंभुःसदाशिवः ॥ प्रफुल्लकमलोल्लासपंचविंशन्मुखोज्ज्वलः ॥ ५ ॥ धृतनानायुधोद्भासिपंचाशत्करमंडितः ॥ फुल्लरक्तांबुजाभश्रीनाभ्यंघ्रियुगलोज्ज्वलः ॥ ६ ॥ विचित्ररत्नखचितभूषणैरपिभूषितः ॥ अनेककोटिसूर्याभःपरमानंदविग्रहः ॥ ७ ॥ अप्राकृततनुश्श्रीमाल्लँक्ष्यलक्षणवर्जितः ॥ यतोवाचोनिवर्ततेअप्राप्यमनसासह ॥ ८ ॥ गंगाश्रयजटाजुटश्चंद्ररेखाविभूषितः ॥ भस्मोद्धूलितसर्वांगोव्यालयज्ञोपवीतवान् ॥ ९ ॥ कपालमालाधारीचव्याघ्रचर्मांबरावृतः ॥ प्रतिवक्त्रंत्रिनयनोभक्तसर्वार्थसिद्धिदः ॥ १० ॥ प्रसार्यदक्षिणंपादंकुंचयित्वेतरंपदम् ॥ अभयंचक्रशूलेचटंकबाणौगदांबुजे ॥ ११ ॥ खड्गतोमरशक्तीश्चपरशुप्रासपन्नगान् ॥ हलांकुशाक्षमालाश्चच्छुरिकांध्वजदंडकौ ॥ १२ ॥ वज्रकुंतास्थिदंष्ट्राश्चक्रकचंभिंडिवालकम् ॥ पंचविंशतिभिर्हस्तैर्दधानोदक्षिणैश्शुभैः ॥ १३ ॥ वरचापौमृगंशंखंखेटपाशपरश्वधान् ॥ मुद्गरंडमरुंघंटांरुद्रवीणांचपुस्तकम् ॥ १४ ॥ कपालमुंडखट्वांगभुशुंडीपरिघानपि ॥ फलकंपट्टसंवेत्रंकमंडलुहुताशनौ ॥ १५ ॥ कर्तरींमुसलंपिंछंबिभ्रद्वामैस्तथाकरैः ॥ महान्सदाशिवस्सोयंराजतेतत्रपर्वते ॥ १६ ॥ श्वेतवर्णः ॥ १ ॥

४ अथ द्वात्रिंशद्भुजाऽघोरमूर्तिध्यानम्-( शिवतत्त्वरत्नाकरे )

एकवक्त्रंसदानंदंद्वात्रिंशद्भुजसंयुतम् ॥ जटामकुटसंयुक्तंत्रिणेत्रंचंद्रशेखरम् ॥ १ ॥ अभयंखड्गशूलंचचक्रंडमरुगंतथा ॥ दधानमस्थिबाणौचगदांपद्मंकपालकम् ॥ २ ॥ ज्ञानमुद्रांकुंतहस्तमंकुशंचाक्षमालिकाम् ॥ खट्वांगपरशुंचैवदधानंदक्षिणैःकरैः ॥ ३ ॥ वरंचफलकंचैवटंकंपाशंचमुद्गरम् ॥ नागमग्निंमृगंघंटांधनुश्चकटिहस्तकम् ॥ ४ ॥ रत्नंचकुमुदंकुंभंमुसलंपुस्तकंतथा ॥ एतदायुधसंयुक्तंरुंडमालाविभूषितम् ॥ ५ ॥ कालमुंडस्यशिरासिस्थितंसर्वाभयप्रदम् ॥ नीलवर्णः ॥ १ ॥

५ अथ दशभुजाऽघोरमूर्तिध्यानम्–( पांचरात्रे )

परशुंडमरुंखड्गखेटौबाणशरासने ॥ शूलंकपालमभयवरौदधतमिष्टदम् ॥ १ ॥ त्रिलोचनंभीषणास्यंनीलांगंरक्तवाससम् ॥ अहिभूषितसर्वांगंतमघोरमुपास्महे ॥ २ ॥ नीलवर्णः ॥ १ ॥

६ अथ महाकालीसमेतमहाकालध्यानम्–( ललितोपाख्याने )

महाकालोघनश्यामःकाल्यालिंगितविग्रहः॥ श्यामकंचुकधारीचमदारुणविलोचनः ॥ १ ॥ ब्रंह्मांडचषकेपूर्णंपिबन्विश्वरसासवम् ॥ महाकालींघनश्यामामनंगार्द्रामपांगयन् ॥ २ ॥ सिंहासनेसमासीनःकल्याणकलनात्मके ॥ कालमृत्युमुखैर्युक्तस्सर्वलोकैकभक्षकः ॥ ३ ॥ ललिताध्यानसंपन्नोललितापूजनोत्सुकः ॥ वितन्वँल्ललिताभक्तेष्वायुषोदीर्घदीर्घताम् ॥ ४ ॥ नीलवर्णः ॥ १ ॥

७ अथ अमृतमृत्युंजयध्यानम्–(कारणागमे )

चंद्रोपरिष्टात्संबद्धपद्मासनविराजितम् ॥ चंद्रवर्णस्रवद्दिव्यामृतचंद्रकलाधरम् ॥ १ ॥ योगमुद्रैकसंबद्धाधरहस्तद्वयान्वितम् ॥ अमृतापूर्णकनककलशात्तकरद्वयम् ॥ २ ॥ सोमसूर्याग्निनेत्रंचबद्धपिंगजटाधरम्॥ नागाभरणसंभूषंनागयज्ञोपवीतिनम् ॥ ३ ॥ व्याघ्रचर्मांबरधरंदेवंभक्तानुकंपिनम् ॥ भस्मानुलेपिनंरुद्रंमृत्युंजयमिमंस्मरेत् ॥ ४ ॥ शुभ्रवर्णः ॥ १ ॥

८ अथ नीलकंठध्यानम्–( पांचरात्रे )

जटाबद्धकलानाथंभोगिभूषणभूषितम् ॥ अक्षमालांचशूलंचकपालंदधतंकरैः ॥ १ ॥ खट्वांगमपिपंचास्यंवसानंव्याघ्रचर्मच ॥ त्रिणेत्रमब्जनिलयंबालार्कसदृशप्रभम्॥साधकाभीष्टदातारंनीलकंठमहंभजे ॥ २॥ अरुणवर्णः ॥ १ ॥

९ अथ रुद्रमूर्तिध्यानम्–( पांचरात्रे )

कैलासाभंपंचवक्त्रंदेव्यायुक्तंत्रिलोचनम् ॥ नीलकंठंसर्पभूषंव्याघ्रच-

र्मांबरावृतम् ॥ १ ॥ अक्षमालावराभीतिकमंडलुलसत्करम् ॥ चंद्रगं-
गाजटाजूटंरुद्रंतंप्रणमाम्यहम् ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

१० अथ सपरिवारोमामहेश्वरध्यानम्-( कारणागमे )

वामेशैलसुतापुरस्तुवृषभःपश्चात्सुरेंद्रादयोदैत्यारिश्वविधिश्वपार्श्वदल-
योर्वाग्वादिकोणेषुच ॥ भृंगीनारदबाणभैरवगजास्यस्कंदवीरेश्वरामध्येशुभ्र
सरोजकोमलरुचंशंभुंभजेपांडुरम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

---

११ अथ सभापतिध्यानम्-( कारणागमे )

कैलासशैलशिखरेत्रिजगज्जनित्रींगौरींनिवेश्यकनकांचितरत्नपीठे ॥
नृत्यंतमादिपुरुषंशशिशेखरंतंदेवाःप्रदोषसमयेनुभजंतिसर्वे ॥ १ ॥
ब्रह्मातालधरोहरिस्सपटहोवीणाकराभारतींवंशद्वंद्वयुतौसुभास्वरकरौमा-
र्तंडसोमौशुभौ ॥ गाकौतुंबुरुनारदौसमुरजौनंदीकुमारस्तथारुद्रोनृत्तकर
स्स्वभावजनितंनाट्यंसदापातुनः ॥ १ ॥ गौरवर्णः ॥ १ ॥

अथ सद्योजातादिपंचमूर्तिध्यानम्-( शैवेकारणगमे )

१२ तत्रादौ सद्योजातध्यानम्-

कुंदेंदुशंखस्फटिकावभासोवेदाक्षमालावरदाभयांकः ॥ त्र्यक्षश्चतुर्व
क्त्रउरुप्रभावस्सद्योधिजातोवतुमांप्रतीच्याम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१३ अथ वामदेवध्यानम्-

वराक्षमालाभयटंकहस्तस्सरोजकिंजल्कसमानवर्णः ॥ त्रिलोचन-
श्चारुचतुर्मुखोमांपायादुदीच्यांदिशिवामदेवः ॥ १ ॥ कनकवर्णः ॥ १ ॥

१४ अथ अघोरध्यानम्-

कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः ॥ चतुर्मुखोनी-
लरुचिस्त्रिणेत्रःपायादघोरोदिशिदक्षिणस्याम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

१५ अथ तत्पुरुषध्यानम्-

प्रदीप्तविद्युत्कनकावभासोविद्यावराभीतिकुठारपाणिः ॥ चतुर्मुख-
स्तत्पुरुषस्त्रिणेत्रःप्राच्यांस्थितोरक्षतुमामजस्रम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

## १६ अथ ईशानध्यानम्—

वेदाभयेष्टांकुशपाशटंककपालढक्काक्षकशूलपाणिः ॥ सितद्युतिःपंचमुखोवतान्मामीशानऊर्ध्वंपरमप्रकाशः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥ ५ ॥

---

## अथ सप्ततांडवमूर्तिस्वरूपाणि—( शैवेकारणागमे )

## १७ तत्रादौआनंदतांडवध्यानम्—

चतुर्भुजंत्रिणेत्रंचप्रसारितजटान्वितम् ॥ गौरवर्णसमायुक्तंबर्हिपिंछसमन्वितम् ॥ १ ॥ मौलौदक्षिणधुत्तूरमर्धचंद्रसमन्वितम् ॥ दक्षिणेस्वजटाग्रेतुजाह्नव्यापरिमंडितम् ॥ २ ॥ वामकर्णेपत्रभूतंदक्षिणेनक्रकुंडलम् ॥ सर्वाभरणसंयुक्तमुपवीतसमन्वितम् ॥ ३ ॥ व्याघ्राजिनांबरोपेतंपादकिंकिणिकायुतम् ॥ प्रसारितभुजंवामेदक्षिणेऽभयहस्तकम् ॥ ४ ॥ डमरुंसव्यहस्तेतुवह्निंवैवामकेदधम् ॥ वक्रंतुदक्षिणंपादमपस्मारोपरिस्थितम् ॥ ५ ॥ ऊर्ध्वगंवामपादंतुपादाग्रंदक्षिणानुगम् ॥ आनंदतांडवंप्रोक्तम् ॥ गौरवर्णः ॥ १ ॥

## १८ अथ संध्यातांडवध्यानम्—

चतुर्भुजंत्रिणेत्रंचजटामुकुटिनं दधम् ॥ अभयंडमरुंसव्येवामेपिंछंसविस्मयम् ॥ १ ॥ अपस्मारंविनापीठेवामांघ्र्या कुंचितंस्थितम् ॥ ऊर्ध्वेतुदक्षिणंपादमपसव्यानुगंदधम् ॥ २ ॥ तत्पादंकुंचितंवाथसर्पकंकणभूषितम् ॥ संध्यातांडवमेवंस्याद् ॥ वर्णादिकंपूर्ववत् ॥ १ ॥

## १९ अथोमातांडवध्यानम्—

एकवक्रंत्रिनयनंजटामंडलभूषितम् ॥ गौरांगंषड्भुजोपेतमभयंडमरुंतथा ॥ १ ॥ शूलंदक्षिणपार्श्वेतुकपालंविस्मयंतथा ॥ गजहस्तोपमंहस्तंसव्यपार्श्वानुगंदधम् ॥ २ ॥ तमेववामपादंचह्यपस्मारोपरिस्थितम् ॥ उद्धृतंदक्षिणंपादंवामपादानुगंतथा ॥ ३ ॥ वामपार्श्वेह्युमादेवीसहितंजाह्नवीयुतम् ॥ सर्वाभरणसंयुक्तंव्याघ्रचर्मोत्तरीयकम् ॥ ४ ॥ उमातांडवमत्रोम् ॥ शिष्टंपूर्ववत् ॥ १ ॥

## २० अथ गौरीतांडवध्यानम्-

शांतंचतुर्भुजोपेतंरक्तवर्णस्मिताननम् ॥ करोटिंबकपुष्पंचधुत्तूरंचार्कपुष्पकम् ॥ १ ॥ बालचंद्रजटाजूटंसुविकीर्णजटान्वितम् ॥ सर्पकंकणसंयुक्तमपस्मारोपरिस्थितम् ॥ २ ॥ दक्षिणंकुंचितंपादंवामपादंतदूर्ध्वगम् ॥ सव्येदधानमभयमन्यस्मिन्डमरुंकरे ॥ ३ ॥ अन्यस्मिन् पूर्वतोव्यालमपरेवह्निपात्रकम् ॥ वामेगौरीसमायुक्तमवामेनंदिकेशिनम् ॥ ॥ ४ ॥ सुविकीर्णजटाभारंजटामकुटसंयुतम् ॥ वाममौलिसमायुक्तंशेषंप्रथमनृत्तवत् ॥ ५ ॥ गौरीतांडवमित्युक्तम् ॥ रक्तवर्णः ॥ १ ॥

## २१ अथ कालिकातांडवध्यानम्-

एकवक्त्रंद्विनयनंजटासंकीर्णमस्तकम् ॥ भुजाष्टकसमायुक्तंसव्यपादंसमुद्धृतम् ॥ १ ॥ सवक्रंवामपादंतमपस्मारोपरिस्थितम् ॥ अभयंशूलपाशंचडमरुंदक्षिणेकरे ॥२॥ कपालंचाग्निपात्रंचघंटांवामकरेवरम् ॥ गजहस्तोपमंहस्तंप्रसृतंदक्षिणानुगम् ॥ ३ ॥ दधंलक्षणसंयुक्तंशेषंप्रथमनृत्तवत् ॥कालिकातांडवंप्रोक्तम् ॥ गौरवर्णः ॥ १ ॥

## २२ अथ त्रिपुरतांडवध्यानम्-

दोर्भिः षोडशभिर्युक्तंवामेगौरीसमाश्रितम् ॥ स्कंदंदक्षिणपार्श्वेतुसव्यहस्तेधृतांजलिम् ॥ १ ॥ अभयंडमरुंचैववज्रंशूलंचबिभ्रतम् ॥ पाशंटंकंतथादंडंनागंचैवदक्षिणेकरे ॥ २ ॥ सव्यानुगंकरंचैववामेपूर्वंकरंतथा॥ अनलंपुस्तकंचैववरदंकेतुखेटकम् ॥ ३ ॥ घटांचैवकपालंचवामपार्श्वेष्टभिःकरैः ॥ सर्वलक्षणसंयुक्तंशेषंप्रथमनृत्तवत् ॥ ४ ॥ त्रैपुरंतांडवंप्रोक्तम् ॥ गौरवर्णः ॥ १ ॥

## २३ अथ संहारतांडवध्यानम्-

त्रिणेत्रंचाष्टहस्तंचसुविकीर्णजटान्वितम् ॥ कुंचितंवामपादंतमपस्मारोपरिस्थितम् ॥ १ ॥ उद्धृतंदक्षिणंपादंव्याघ्रचर्मोत्तरीयकम् ॥ अभयंशूलपाशौचडमरुंदक्षिणेकरे ॥ २ ॥ कपालंचाग्निपात्रंचदधंवि-

स्मयहस्तकम् ॥ गजहस्तोपमंवामेचतुर्दोर्भिस्समन्वितम् ॥ ३ ॥ गजहस्तोपमंसव्यमपसव्यानुगंतथा ॥ नंदीशंसव्यभागेतुवामेगौरीसमन्वितम् ॥ ४ ॥ सप्तमंनृत्तमाख्यातंजगद्वृद्धिकरंभवेत् ॥ शिष्टंप्रथमनृत्तवत् ॥ गौरवर्णः ॥ १ ॥ ७ ॥

---

### अथ एतेषांसप्ततांडवानांनामानि—( शैवेकारणागमे )

आनंदतांडवंपूर्वंसंध्यातांडवमुत्तरम् ॥ उमातांडवमेवंस्याद्गौरीतांडवमप्यथो ॥ १ ॥ कालिकातांडवंचैवषष्ठंत्रिपुरतांडवम् ॥ संहारतांडवंसप्तममित्थंसप्ततांडवाः ॥ २ ॥ ७ ॥

---

### २४ अथ भवाद्यष्टमूर्तिध्यानम्—( शैवागमेशेखरे )

भवःशर्वस्तथेशानःपशुपत्युग्रकौतथा ॥ रुद्रोभीमोमहादेवःकीर्तितास्त्वष्टमूर्तयः ॥ १ ॥—॥ चतुर्भुजास्त्रिणेत्राश्चजटामकुटधारिणः॥ वराभयकराश्चैवटंककृष्णधरास्तथा ॥ १ ॥ सर्वाभरणसंयुक्तारक्तक्षौमधराइमे॥—॥एतेषांवर्णाः ॥—॥ शुक्लश्यामश्चरक्तश्चकृष्णोगोक्षीरसंनिभः ॥ केसरोविद्रुमोनीलोभवादीनांचवर्णकः ॥ १ ॥ ८ ॥

### अथैकादशरुद्राणांनामादि—( शैवागमे )

शंभुःपिनाकीगिरिशःस्थाणुर्भर्गस्सदाशिवः ॥ शिवोहरस्तथाशर्वः कपालीभवएवच ॥ १ ॥ एकादशैतेकथिताःरुद्रालोकहितेरताः॥ ११ ॥

### २५ तत्रादौशंभुध्यानम्—

ब्रह्मविष्णुमहेशानदेवदानवराक्षसाः ॥ यस्मात्प्रजज्ञिरेदेवास्तंशंभुंप्रणमाम्यहम् ॥ १ ॥ शोणवर्णः ॥ १ ॥

### २६ अथ पिनाकिध्यानम्—

क्षमारथसमारूढंब्रह्मसूत्रसमन्वितम् ॥ चतुर्वेदैश्चसहितंपिनाकिनमहंभजे ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

## २७ अथ गिरिशध्यानम्-

कैलासशिखरप्रोद्यन्मणिमंटपमध्यगः ॥ गिरिशोगिरिजाप्राणवल्लभो-स्तुसदामुदे ॥ १ ॥ नीलवर्णः ॥ १ ॥

## २८ अथ स्थाणुध्यानम्-

वामांगकृतसंवेशगिरिकन्यासुखावहम् ॥ स्थाणुंनमामिशिरसासर्व-देवनमस्कृतम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## २९ अथ भर्गध्यानम्-

चंद्रावतंसोजटिलस्त्रिणेत्रोभस्मपांडरः ॥ हृदयस्थःसदाभूयाद्भर्गोभय-विनाशनः ॥ १ ॥ श्यामवर्णः ॥ १ ॥

## ३० अथ सदाशिवध्यानम्-

ब्रह्माभूत्वासृजल्लोकंविष्णुर्भूत्वाथपालयन् ॥ रुद्रोभूत्वाहरन्नंतेगतिर्मे स्तुसदाशिवः ॥ १ ॥ श्यामलवर्णः ॥ १ ॥

## ३१ अथ शिवध्यानम्-

गायत्रीप्रतिपाद्यायाप्योंकारकृतसद्मने ॥ कल्याणगुणधाम्नेस्तुशिवा-यविहितानतिः ॥ १ ॥ पीतवर्णः ॥ १ ॥

## ३२ अथ हरध्यानम्-

आशीविषाहारकृतेदेवौघप्रणतांघ्रये ॥ पिनाकांकितहस्तायहराया-स्तुनमस्कृतिः ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

## ३३ अथ शर्वध्यानम्-

तिसृणांचपुरांहंताकृतांतमदभंजनः ॥ खड्गपाणिस्तीक्ष्णदंष्ट्रश्शर्वा-ख्योस्तुमुदेमम ॥ १ ॥ बभ्रुवर्णः ॥ १ ॥

## ३४ अथ कपालिध्यानम्-

दक्षाध्वरध्वंसकरःकोपयुक्तमुखांबुजः ॥ शूलपाणिस्सुखायास्तुकपा-लीमेह्यहर्निशम् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

३५ अथ भवध्यानम्—

योगींद्रनुतपादाब्जंद्वंद्वातीतंजनाश्रयम् ॥ वेदांतकृतसंचारंभवंतंशरणं भजे ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

---

अथवा एतेषांस्वरूपाणि—( पद्मपुराणे )

त्रिणेत्रारुद्रसद्दशाजटामकुटधारिणः ॥ रुद्रंत्रिणेत्रमरुणंजटामंडल-धारिणम् ॥ १॥ चतुर्भुजंनीलकंठमिंदुरेखाविभूषितम् ॥ वैय्याघ्रचर्मवस-नंसर्वाभरणभूषितम् ॥ २॥ कराभ्यामपिमुख्याभ्यांवरदाभयदंस्थिरम् ॥ अपराभ्यांचहस्ताभ्यांबिभ्राणंपरशुंमृगम् ॥ ३ ॥—॥ एतेषांवर्णाः॥शोण-श्चहरितोनीलःश्वेतःश्यामलमेचकौ ॥ पीतःकालस्तथाबभ्रुवर्णकःपाटल-स्सितः ॥ १ ॥ एकादशानांरुद्राणांवर्णोयंसमुदाहृतः ॥ ११ ॥

---

अथ पंचविंशतिलीलामूर्तीनांध्यानम्—( शैवेकारणागमे )

३६ तत्रादौ चंद्रशेखरध्यानम्—

अभयवरदहस्तंसौम्यशृंगारभावंविपुलवदननेत्रंचंद्रबिंबांशमौलिम् ॥ ऋजुतनुसमपादस्थानकंविद्रुमाभंहरिणपरशुपाणिंपद्मपीठोपरिष्ठम् ॥ १ ॥ प्रवालवर्णः ॥ १ ॥

३७ अथैतत्पार्श्वस्थगौरीध्यानम्—

श्यामांत्रिणेत्रांद्विभुजांत्रिभंगींसव्यापसव्यास्थितकुंचितांघ्रिम् ॥ सव्ये तुनीलोत्पलचारुहस्तांदेवस्यवामस्थितपद्मपीठाम्॥ १ ॥श्यामवर्णः ॥ १ ॥

३८ अथ उमामहेश्वरध्यानम्—

धवलाब्जसुखासनसन्निहितंमृगडिम्भकटंकवराभयिनम् ॥ सुमुखंपरमु त्पलदृग्वरदंह्युमयासहनौमिसरूपमिदम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

३९ अथ वृषभारूढध्यानम्—

सव्येस्याद्वक्रतुंडान्वितकटककरंगोपतेःपृष्ठसंस्थंवामस्यार्धंसदक्षंवर-करयुगलेटंककृष्णंदधानम् ॥ फालस्थाक्षंप्रसन्नंत्रिनयनलसितंबद्धवेणी-

किरीटंवामेगौर्यासमेतंनमतशुभकरंतंवृषारूढमीशम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ४० अथ नाट्यमूर्तिध्यानम्-

शय्यापस्मारकोर्ध्वस्थितपदविलसन्वाममुद्धृत्यपादंज्वालामालासुमध्ये नटफणिशिरसिस्थूलमासेदिवान्यः ॥–॥ भस्मोद्धूलितमंगविद्रुमनिभं हस्ताग्रपादाग्रयोरग्निंदोलवराभयंडमरुकंधृत्वानटेशंभजे ॥ रक्तवर्णः ॥ शिवकामवल्ली चंद्रशेखरसमीपस्थांबावत्कार्या ॥ १ ॥

---

## ४१ अथ वैवाहिकमूर्तिध्यानम्—अथवा कल्याण-सुन्दरमूर्तिध्यानम्-

सिंदूराभंत्रिणेत्रंयुगभुजसहितंहारकेयूरभूषंदिव्यैर्वस्त्रैर्वृतांगंवरकटक-लसद्धेमकल्हारभूषम् ॥–॥ शंभुंदक्षिणपार्वतीकरतलंसव्येनसंगृह्णतंटंकं-कृष्णमृगंधरंवरकरंचूडेंदुबद्धादरम् ॥ १ ॥ जटामकुटसंयुक्तंचंद्रार्धकृतभू-षणम् ॥ त्र्यक्षंचतुर्भुजंनंस्येनवयौवनगर्वितम् ॥ २ ॥–॥ समभंगयुतंदेव-स्थानकंसंप्रकीर्तितम् ॥ कुंचितंसव्यपादेनस्थितसव्येतरांघ्रिकम् ॥ १ ॥ सिंदूरवर्णः ॥ १ ॥

---

## अथ वैवाहिकेशांगमूर्तयः-

## ४२ तत्रादौ गिरिजाध्यानम्-

पीनोरुंपीनगंडांचपीनहस्तसमन्विताम् ॥ द्विबाहुकांद्विनेत्रांचसर्वा-भरणभूषिताम् ॥ १ ॥ दुकूलवसनांदेवींकुर्याद्देवस्यवामके ॥ श्याम-वर्णः ॥ १ ॥

## ४३ अथ ब्रह्मध्यानम्-

चतुर्मुखंचतुर्बाहुंकमंडल्वक्षधारिणम् ॥ यज्ञसूत्रोत्तरीयंचजटामकु-टसंयुतम् ॥ १ ॥ सव्यहस्तेक्षमालांचवामहस्तेकमंडलुम् ॥ स्रुवंदक्षि-णहस्तेतुपुस्तकंवामकेदधम् ॥ २ ॥ अंबुजासनआसीनंब्रह्माणंहसनोन्मु-खम् ॥ कुंडंतुचतुरश्रंवैमेखलात्रयसंयुतम् ॥ ३ ॥ नाभियोनिसमायु-

क्तमुक्तलक्षणलक्षितम् ॥ कुर्यान्मध्येहव्यवाहंज्वालापंचकसंवृतम् ॥ ४ ॥ ब्रह्मणःपुरतोभागेन्यस्ताग्निंसम्यगर्चयेत् ॥ पाटलवर्णः ॥ १ ॥

४४ अथ मेनकाध्यानम्—

देव्यास्तुदक्षिणेपार्श्वेमेनकांसुस्मिताननाम् ॥५॥ सर्वाभरणसंयुक्तां-सर्वालंकारशोभिताम् ॥ काञ्चनवर्णः ॥ १ ॥

४५ अथ हिमवद्ध्यानम्—

हस्तद्वयेहेमकुंभजलंधरकृतिंभजेत् ॥ ६ ॥ पद्मपीठस्थितांचैवतत्पार्श्वे-हिमवान् स्थितः ॥—॥ तन्मध्येवृषभेस्थितयाजलयानाकृतिस्तदा ॥ देवस्यवामपार्श्वेतुसनकश्चसनंदनः ॥ ७ ॥ स्थितौ कृतांजलिपुटौजटाव-द्धौसदाप्रियौ ॥ विष्णवाद्यमरमुख्याश्चविवाहेसेवयायुताः ॥ ८ ॥ कल्या-णसुंदरंप्रोक्तम् ॥ हिमवान् श्वेतवर्णः ॥ सनकसनन्दनौपाटलवर्णौ ॥ विष्णवादीनांतत्तद्वर्णाः ॥ ५ ॥

---

४६ अथ भिक्षाटनमूर्तिध्यानम्—

चतुर्भुजंत्रिणेत्रंचनग्नंचैवास्मिताननम् ॥ भस्मदिग्धंविद्रुमाभंकटयांप-न्नगसंवृतम् ॥ १ ॥ आवृत्तालंकृतंभृंगीपादपादुकसंयुतम् ॥ दक्षिणंत-त्करायंतुहरिणास्यानुगंभवेत् ॥ २ ॥ दक्षिणेपरहस्तेतुडमरुंचैवकार-येत् ॥ वामेत्वपरहस्तेतुत्रिशूलंपिंछधारिणम् ॥ ३ ॥ कुंचितंदक्षिणं-पादंवामपादंतुसुस्थितम् । समभंगस्थानकंचगमनोन्मुखरूपकम् ॥ ४ ॥ कपालोपेतहस्तंचवृषनाभिसमंभवेत् ॥ एवंभिक्षाटनंप्रोक्तम् ॥—॥ गुंडोदर-मथोश्रृणु ॥ ५ ॥ देवस्यवामपार्श्वेतुगुंडोदरमधस्थितम् ॥ हस्तद्वयसमायुक्तं कपालंशिरसिन्यसेत् ॥ ६ ॥ भूताकारसमायुक्तंकुंडलेकर्णयोर्न्यसेत् ॥ दंष्ट्राकरालवक्त्रंचपूर्वोक्तलक्षणान्वितम् ॥ ७ ॥ देवोविद्रुमवर्णः ॥ गुंडोदरःश्यामवर्णः ॥ २ ॥

४७ अथ कामदहनमूर्तिध्यानम्—

उग्ररूपंतुकामारिंचतुर्भुजसमन्वितम् ॥ कृष्णटंकसमायुक्तमभयंवर-

दान्वितम् ॥ १ ॥ कामनिग्रहरूपंतुपद्मपीठोपरिस्थितम् ॥ दक्षिणेलंवितंपादंवामपादंतुशायितम् ॥ २ ॥ कार्यःकामरिपुस्त्वेवंवक्ष्येहंकालनाशनम् ॥ रक्तवर्णः॥ १ ॥

### ४८ अथ कालहरमूर्तिध्यानम्-

बंधूकाभममुंत्रिणेत्रभुजिनंशूलाब्जहस्तोज्ज्वलंटंकंसूत्रवरंसुपाशसहितंदंष्ट्राकरालास्यकम् ॥ वामेकुंचितपादमुद्धृततलंकालस्यवक्षस्थलेछिन्नाभिन्नजटाधरंगिरिजयायुक्तंजगद्दैवतम् ॥ १ ॥ उद्धृतंवामपादंतुकालवक्षस्थलेस्थितम् ॥ सव्यपादंलिंगमूर्न्धिस्थितंरौद्रमुखंभजेत् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

### अथांगमूर्तयः-

### ४९ अथ मार्कण्डेयध्यानम्-

मार्कंडेयस्थितोदक्षेलिंगमूलंतुसंस्पृशन् ॥ द्विभुजश्चद्विनेत्रश्चभस्मरुद्राक्षसंयुतः॥ ३ ॥ शिवार्चनपरश्शांतःशिवध्यानपरोभवेत् ॥ श्वेतवर्णः १ ॥

### ५० अथ मृत्युध्यानम्-

देवस्यवामपार्श्वेतुकालंमृत्युस्वरूपकम् ॥ ४ ॥ किरीटकुंडलोपेतंसुदंष्ट्रंघोररूपकम् ॥ हस्तद्वयेदंडपाशकर्षणाकृतिरूपकम् ॥ ५ ॥ तन्मध्येमहिषस्थित्याकालरूपमिहोच्यते ॥ श्यामवर्णः ॥ १ ॥

### ५१ अथ त्रिपुरारिमूर्तिध्यानम्-

चतुर्भुजंत्रिणेत्रंचमृगंपरशुधारिणम् ॥ धनुर्बाणसमायुक्तमुमयासाहितं तथा ॥ १ ॥ सर्वाभरणसंयुक्तंद्विव्यांबरसमावृतम् ॥ पत्रंदधंवामकर्णे दक्षिणेकुंडलान्वितम् ॥ २ ॥ उपवीतसमायुक्तंसमभंगयुतंशिवम् ॥ जटामकुटसंयुक्तंविलसद्विद्रुमांगकम् ॥ ३ ॥ एवंत्रिपुरसंहारम् ॥ विद्रुमवर्णः ॥ १ ॥

### ५२ अथ जलंधरहरमूर्तिध्यानम्-

रक्ताभमुग्रनयनंद्विभुजंचत्रिणेत्रकम् ॥ उपवीतसमायुक्तंसर्वालंकार-

शोभितम् ॥ १ ॥ पादयोःपादुकायुक्तंकिंचिद्वैगमनोन्मुखम् ॥ दक्षह-स्तेस्थितंछत्रंवामेपूर्णकमंडलुम् ॥ २॥सुविकीर्णजटाभारंगंगाचंद्रसमन्वितम् ॥ कर्णकुंडलसंयुक्तंहारनूपुरसंयुतम् ॥ ३ ॥—॥ द्विभुजंचद्विनेत्रंचकिरीटकटकान्वितम् ॥ सर्वालंकारसंयुक्तंकक्षेखड्गसमन्वितम् ॥ १ ॥ कृतांजलिपुटोपेतंहस्तेचक्रंदधंपरम् ॥ जलंधरमथप्रोक्तम् ॥ देवोरक्तवर्णः ॥ जलंधरःपीतवर्णः ॥ २ ॥

### ५३ अथ ब्रह्मशिरश्छेतृमूर्तिध्यानम्—

गौरवर्णंत्रिणेत्रंचजटामौलिविराजितम् ॥ ताटंकंकुंडलंसव्यवामश्रुत्योश्चबिभ्रतम् ॥ १ ॥ व्याघ्रचर्मांबरधरंचतुर्भुजसमन्वितम् ॥ वज्रंपरशुपूर्वांसंवामेब्रह्मकरोटिकम् ॥ २ ॥ अपरेशूलहस्तंचशेषंपुर्वोक्तवत्कुरु ॥ गौरवर्णः ॥ १ ॥

### ५४ अथ गजासुरसंहारमूर्तिध्यानम्—

स्थित्वाहस्तिशिरस्यदक्षचरणंवामांगदक्षोद्धृतंपुच्छोर्ध्वावृतचार्ममुद्धृतकरेशूलासिशृंगोज्ज्वलम् ॥ टंकंकृष्णमृगंधरंपरकरेभीष्माननेंदुप्रभंवामोमातिभयोन्मुखीसुतयुतंसूच्याढ्यहस्तंहरम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### ५५ अथ वीरभद्रमूर्तिध्यानम्—

चतुर्भुजंत्रिणेत्रंचजटामकुटसंयुतम् ॥ दक्षिणेखड्गबाणौचवामेचापंगदांधरम् ॥ १ ॥दंष्ट्राकरालवदनंभीमंभैरवगर्जितम् ॥ रुंडमालासमायुक्तंपादुकोपरिसुस्थितम् ॥ २ ॥ भद्रकालीसमायुक्तंकरालंहृदिविन्यसेत् ॥ नीलवर्णः ॥ १ ॥—॥ दक्षब्रह्मस्वरूपम् ॥ वीरस्यदक्षभागेतुदक्षब्रह्माणमास्थितम् ॥ अजवक्त्रंद्विनयनंश्रृंगद्वयविभूषितम् ॥ १ ॥ नमस्कारांजलिंबिभ्रंशिवध्यानपरायणम् ॥ श्यामवर्णः ॥ १ ॥ २ ॥

### ५६ अथ हरिहरध्यानम्—

संव्यांगेविद्रुमाभंशशधरमकुटंभस्मरुद्राक्षभूषंवामांगेश्यामलाभंमणिमकुटयुतंपीतवस्त्रातिशोभम् ॥ सव्येटंकाभयंस्यादितरकरयुगेशंखकौमोदकिस्यात्किंचिल्लालाटनेत्रंविलसतुपुरतःश्रीहरेरर्धदेहम् ॥ १ ॥ सव्येटंकंपर-

स्मिन्कटकसुजलजंसिंधुवेणीसुनद्धंवामार्धेसत्किरीटंरुधिरजलनिभंव्या-
घ्रचर्मांबराढ्यम् ॥ फालार्धेलोचनार्धाकलितसमपदंशुभ्रयज्ञोपवीतंहर्य-
र्धंनौमिशंभुंसकलशुभकरंसर्वसंपत्कराढ्यम् ॥ २ ॥ रक्तवर्ण ईश्वर-
भागः ॥ विष्णुभागःश्यामवर्णः ॥ १ ॥

## ८७ अथ अर्धनारीश्वरमूर्तिध्यानम्-

चतुर्भुजंत्रिणेत्रंचशिवांशंदक्षपार्श्वके ॥ वामार्धंवामभागेतुसीमंततिल-
कालकम् ॥ १ ॥ नेत्रार्धंतुललाटेतुसंयुक्तंदक्षिणांशके ॥ दक्षिणेकुंड-
लंकर्णेदधंवामेतुपत्रकम् ॥ २॥ कट्यांवाकलितंवामेऽभयटंकौचदक्षिणे॥
वरदोत्पलकेवामेकेयूरकटकान्वितम् ॥ ३ ॥ उमांशेतुस्तनंकुर्यात्स्वाहा-
कारयुतंतुवा ॥ श्रोण्यर्धंदक्षिणेशंभोर्व्याघ्रचर्मकृतांबरम् ॥ ४ ॥ उमार्धक
टिसूत्रंतुचित्रवस्त्रपरिच्छदम् ॥ नूपुरालंकृतंवामेसव्यपादंतुकुंचितम् ॥ ५ ॥
स्वयंप्रवालवर्णःस्यात्सुकृष्णंवामभागकम् ॥ अर्धनारीश्वरंप्रोक्तम् ॥
ईश्वरभागोरक्तवर्णः ॥ देवीभागश्श्यामवर्णः ॥ १ ॥

## ८८ अथ किरातार्जुनमूर्तिध्यानम्-

चतुर्भुजंत्रिणेत्रंचजटामकुटसंयुतम् ॥ सर्वाभरणसंयुक्तंदिव्यांबरस-
मावृतम् ॥ १ ॥ धनुर्बाणयुतंरक्तंकृष्णापरशुसंयुतम् ॥ उपवीतसमायुक्तं
समभंगतनुंकुरु ॥ २ ॥ वामेगौरीसमायुक्तंदक्षिणेत्वर्जुनंस्थितम् ॥
-॥ अर्जुनस्वरूपम् ॥ एकवक्त्रंद्विनयनंजटामकुटसंयुतम् ॥ सर्वाभरणसं
युक्तंकृतांजलिपुटंस्थितम् ॥ १ ॥ एवंकिरातमाख्यातम् ॥ देवोरक्तवर्णः ॥
अर्जुनःश्यामवर्णः ॥ २ ॥

## ८९ अथ कंकालमूर्तिध्यानम्-

भस्मालेपत्रिपुंड्ररुचिरमणिलसत्पिछकंकालदक्षंटंकंवामेकराब्जेदध-
तमभिलसत्सांद्रसिंदूरशोभम् ॥-॥ शूलंकृष्णमृगास्यलंबितकरंबद्धेंदुचू-
डंहरंवंदेदेवऋषीश्वरैःपरिवृतंवैय्याघ्रचर्मांबरम् ॥ १ ॥ चतुर्भुजंत्रिणेत्रं-
चजटामकुटसंयुतम् ॥ पादयोःपादुकायुक्तंकिंचिद्वैगमनोन्मुखम् ॥ २ ॥

सर्वाभरणसंयुक्तंयज्ञसूत्रोत्तरीयकम् ॥ शंखंतुवामकर्णेतुपाक्षिणेनक्रकुंडलम् ॥ ३ ॥ किंचित्प्रहसितास्यंचनानालीलासमावृतम् ॥ छुरिकांदक्षकट्यांतुदधानंभूतसंयुतम् ॥ ४ ॥ भिक्षान्नमोचनायातमृगपक्ष्यादिसंयुतम् ॥ देवस्यवामपार्श्वेतुमहाभूतंप्रकल्पयेत् ॥ ५ ॥ द्विभुजंचद्विनेत्रंचकरालवदनान्वितम् ॥ कपालंशिरसिन्यस्यदेववामेतुसंस्थितम् ॥ ६ ॥ एवंकंकालमाख्यातम् ॥ देवोरक्तवर्णः ॥ भूतःकृष्णवर्णः ॥ २ ॥

## ६० अथ चंडेशानुग्रहमूर्तिध्यानम्-

चंडेशंपीतवर्णयुगकरसहितंदक्षहस्तेचटंकं वामेकृष्णंदधानंवरकरसहितंपार्वतीवामभागम् ॥ चंडेशस्योत्तमांगेप्रतिनिहितकरंदक्षभागेत्रिणेत्रं सर्वालंकारयुक्तंशशिशकलधरंगंगयायुक्तमीडे ॥ १ ॥—॥ देवस्यदक्षभागेतुचंडेशंतुप्रकल्पयेत् ॥ देवस्यबाहुमात्रेणचंडेशायामउच्यते ॥ २ ॥ न्यस्तव्योमत्प्रसादेनचंडेशोभक्तिसंयुतः ॥ चंडेश्वरंस्वर्णवर्णबालभूषणभूषितम् ॥ ३ ॥ देवंशिरसिचंडस्यलीलयापरिशोभितम् ॥ चंडेशानुग्रहंप्रोक्तम् ॥ ४ ॥ देवःचंडेशश्चपीतवर्णः ॥ २ ॥

## ६१ अथ विषापहरमूर्तिध्यानम्-

एकवक्त्रंत्रिनयनंजटामकुटसंयुतम् ॥ चतुर्बाहुंसुरक्तंसमृगंपरशुधारिणम् ॥ १ ॥ दक्षहस्तेगरंधृत्वापानोन्मुखमदेक्षणम् ॥ वरदंवामहस्तेतुसर्वालंकारसंयुतम् ॥ २ ॥ देवस्यवामपार्श्वेतुदेवींचैवतुकारयेत् ॥ श्यामांद्विनेत्रांद्विभुजांत्रिभंगींसव्यापसव्यस्थितकुंचितांघ्रिम् ॥ कंठेनिपीडचास्थितसव्यलंबांचिताकुलामीश्वरतुष्टिदात्रीम् ॥ १ ॥ पीतवस्त्रांद्विनयनांवांछितार्थफलप्रदाम् ॥ देवोरक्तवर्णः ॥ देवीश्यामवर्णा ॥ २ ॥

## ६२ अथ चक्रदानमूर्तिध्यानम्-

विष्णुस्त्वीशपुरस्थितोंजलिकरोदेवस्यपादाब्जयोस्संस्थाप्याक्षिलसत्सुमाल्यमनिशंपीतांबरंकौस्तुभम् ॥ यस्तस्मैदययापरंपशुपतिंपद्माक्ष इत्याख्ययाटंकंकृष्णमृगंवरंचदधतंचक्रप्रदंतंभजे ॥ १ ॥ एकवक्त्रं-

त्रिणेत्रंचजटामकुटसंयुतम् ॥ दधमेणंचपरशुंवरंचचैववामके ॥ २ ॥ दक्षिणेचक्रसंयुक्तंदातृरूपमिहोच्यते ॥ देवस्यवामभागेतुश्यामरूपंसुसंस्थितम् ॥ ३ ॥ सर्वाभरणसंयुक्तंपीतवस्त्रोत्तरीयकम् ॥ शंखचक्रसमायुक्तमुत्तरेचांजलिंन्यसेत् ॥ ४ ॥ एवंलक्षणसंयुक्तंविष्णुरूपमिहोच्यते ॥ देवःश्वेतवर्णः ॥ विष्णुःश्यामवर्णः ॥ २ ॥

## ६३ अथ विघ्नेश्वरवरप्रसन्नमूर्तिध्यानम्-

चतुर्भुजंत्रिणेत्रंचजटामकुटसंयुतम् ॥ अभयंशिरसिन्यस्यवरंदवामहस्तके ॥ १ ॥ कृष्णापरशुसंयुक्तंविघ्नेशोदक्षिणेस्थितः ॥ शयानंदक्षिणंपादंदधंवामंतुलंबितम् ॥ २ ॥ सर्वाभरणसंयुक्तंश्यामवर्णसुशोभितम् ॥ देवस्यवामपार्श्वेतुदेवींप्रहसिताननाम् ॥ ३ ॥ सर्वालंकारसंयुक्तांसव्येतूत्पलधारिणीम् ॥ वामेवरदसंयुक्तांद्विभुजांचत्रिणेत्रकाम् ॥ ४ ॥ दक्षिणेशयितंपादंदधंवामेतुलंबितम् ॥ एकपीठस्थितांदेवीमुमांस्कंदोक्तिवत्कुरु ॥ ५ ॥ विघ्नेशंरक्तवर्णचकिरीटमकुटान्वितम् ॥ नमस्कारांजलिकरंपशांकुशसमन्वितम् ॥ ६ ॥ सर्वलक्षणसंयुक्तंसर्वाभीष्टफलप्रदम् ॥ विघ्नप्रसादमित्युक्तम् ॥ देवोदेवीचश्यामवर्णौ ॥ विघ्नेशो रक्तवर्णः ॥ ३ ॥

## ६४ अथ सोमास्कन्दमूर्तिध्यानम्-

उद्यद्भानुनिभंचतुष्करयुतंकेयूरहारादिभिर्दिव्यंवस्त्रधरंजटामकुटिनंसंशोभिनेत्रत्रयम् ॥ वामेगौरियुतंसुखासमुभयोर्मध्येकुमारस्थितिंसोमास्कंदविभुंमृगाभयवरान्टंकंदधानंभजे ॥ १ ॥ सोमास्कंदेश्वरंप्रोक्तंभोगशक्तिसमन्वितम् ॥ चतुर्भुजंत्रिणेत्रंचजटामुकुटमण्डितम् ॥ २ ॥ सर्वाभरणसंयुक्तंवरदाभयहस्तकम् ॥ कृष्णटंकंदधानंचदक्षिणेवामकेपिच ॥ ३ ॥ पत्रंतुवामकर्णेतुदक्षिणेनक्रकुंडलम् ॥ उपवीतधरंचैवशयानंवामपादकम् ॥ ४ ॥ लंबितंदक्षिणंपादंवामेगौरीसमन्वितम् ॥ तयोर्मध्यगतंस्कंदंसर्वलक्षणसंयुतम् ॥ ५ ॥ सोमास्कंदमितिप्रोक्तंगंगाचंद्रसमन्वितम् ॥ सोमास्कंद-

स्यपार्श्वेतुभोगशक्तिश्चवामके ॥ ६ ॥ वीरंतुदक्षिणेपार्श्वेचासीनंवास्थितंतुवा ॥ पंचविंशतिमूर्तीनांसोमास्कंदोमहान्मतः ॥ ७ ॥ उत्सवारंभकालेतुसोमास्कंदोविशेषतः ॥ धरांतुकुमुदंदेवींवामेवरदसंयुताम् ॥ ८ ॥ शयानंदक्षिणंपादंवामपादंतुलंबितम् ॥–॥ स्कंदध्यानम् ॥ बालरूपं स्थितंस्कंदंद्विनेत्रंद्विभुजान्वितम् ॥ सरलाब्जधरंहस्तेसर्वाभरणभूषितम् ॥ १ ॥ सोमास्कंदमितिप्रोक्तम् ॥ देवोरक्तवर्णः ॥ देवीश्यामवर्णा ॥ स्कंदोनीलवर्णः ॥ ३ ॥

## ६५ अथ एकपादमूर्तिध्यानम्–

ध्यायेत्कोटिरविप्रभंत्रिनयनंशीतांशुगंगाधरंहस्तेटंकमृगंवराभयकरंपादैकयुक्तंविभुम् ॥ शंभोर्दक्षिणवामकक्षभुजयोर्ब्रह्माच्युताभ्यांस्थितंतत्तल्लक्षणमायुधैःपरिवृतंहस्तद्वयाढ्यांजलिम् ॥ १ ॥ ब्रह्मांडप्रलयेसुसंस्थितपदंब्रह्मांडमध्यस्थितंह्येवंलक्षणसंयुतंपुरहरंपादैकमूर्तीकृतम् ॥–॥ एकपादमितिख्यातंसुखासीनम् ॥ रक्तवर्णः ॥ पक्षांतरेश्वेतवर्णोपिप्रसिद्धः ॥ १ ॥

## ६६ अथ सुखासीनमूर्तिध्यानम्–

अरुणाभसुभस्मविलेपनधृद्धरणीवरटंकवराभयदम् ॥ अरुणांबरशोभिलसच्छुभदंगुणनेत्रसुखासनरूपमिदम् ॥ १ ॥ चतुर्भुजंत्रिणेत्रंचजटामकुटसंयुतम् ॥ अभयंदक्षिणेहस्तेवरदंवामहस्तके ॥ २ ॥ कृष्णापरशुसंयुक्तंवामदक्षिणहस्तयोः ॥ शयानंदक्षिणंपादंदधंवामंतुकुंचितम् ॥ ३ ॥ उमासहितवत्सर्वंस्कंदगौरीविवर्जितम् ॥ सुखासीनमितिप्रोक्तम् ॥ ॥ रक्तवर्णः ॥ १ ॥

## ६७ अथ दक्षिणामूर्तिध्यानम्–अथवा व्याख्यानमूर्तिध्यानम्–

भूतिव्यापांडुरांगश्शशिशकलधरोज्ञानमुद्राक्षमालावीणापुस्तैर्विराजत्करतलकमलोयोगपट्टाभिरामः ॥ व्याख्यापीठेनिषण्णस्सकलमुनिवरैस्सेवितःसुप्रसन्नस्सव्यालःकृत्तिवासास्सततमवतुनोदक्षिणामूर्तिरीशः ॥ १ ॥

नारदोजमदग्निश्चवसिष्ठभृगुदक्षिणे ॥ भरद्वाजश्शौनकश्चाप्यगस्त्योभार्गवस्तथा ॥ २ ॥ वामभागेविधातव्याःकिन्नराद्यैस्सुसेविते ॥ कैलासपर्वतेतस्मिन्वटवृक्षस्यमूलके ॥ ३ ॥ आसीनंसकलेशंतुशांतरूपंमहेश्वरम् ॥ दक्षिणामूर्तिमित्युक्तम्॥अधोऽपस्मारंशाययेत् ॥ शुभ्रवर्णः॥ १ ॥

### ६८ अथ लिंगोद्भवमूर्तिध्यानम्-

लिंगाकारस्यमध्येतुचंद्रशेखरवत्स्थितम्॥नालकाधस्थितंपादौलिंगोद्भवसमन्वितम् ॥ १ ॥ विरिंचिर्हंसरूपेणचोर्ध्वगोवामपार्श्वके ॥ दक्षेवराहरूपस्यरूपेणाधोगतोहरिः ॥ २ ॥ वामदक्षिणमार्श्वस्थौकृतांजलिसमन्वितौ॥स्वरूपेणद्विपादस्थावजविष्णूविभोःपरे ॥ ३ ॥ एवंलिंगावतारंतुसर्वशांतिकरंसदा ॥-॥ तुंगांगविस्तृतिनतांसकलंबमानैस्संपन्नचिह्नभुजभूषणवर्णभेदैः ॥ शोभान्वितंशुभकरंसकलप्रजानामैश्वर्यसंघपरिवृद्धिकरंविदध्यात् ॥ १ ॥ पक्षांतरेशुभ्रवर्णोपिप्रसिद्धः ॥ १ ॥

### ६९ अथ शरभमूर्तिध्यानम्-

महामेरुसमाकारमष्टपादंरविप्रभम् ॥ द्वात्रिंशद्बाहुसंयुक्तंसूर्यसोमाग्निलोचनम् ॥ १॥ दुर्गाकालद्विपक्षंचसुतीक्ष्णघनगर्जितम् ॥ ऊर्ध्वकेशंमहाबाहुंनानालंकारभूषितम् ॥ २ ॥ वज्रमुष्ट्यभयंचक्रंशक्तिदंडांकुशौतथा ॥ खड्गखट्वांगपरशूनक्षमालास्थिशूलकम् ॥ ३ ॥ धनुश्चमुसलंचाग्निंदधानंदक्षिणैःकरैः ॥ वरदंपाशहस्तंचगदांबाणध्वजौतथा ॥ ४ ॥ क्रकचंक्रोडशंखौचखेटंनागंचपंकजम् ॥ कपालंपुस्तकंकुंतंदुर्गाश्लिष्टकरांबुजम् ॥ ५ ॥ हलंवामेदधानंचभीषणंकरपंकजैः ॥ दंष्ट्रोल्लासंमहासिंहच्छटाच्छटनिपीडितम् ॥ ६ ॥ रक्तवर्णः ॥ १ ॥

### अथ द्वात्रिंशद्गणपतिनामानि-( मुद्गलपुराणे )

बालस्तरुणभक्तौचवीरश्शक्तिर्द्विजस्तथा ॥ सिद्धउच्छिष्टविघ्नेशौक्षिप्रोहेरंबनामकः ॥ १ ॥ लक्ष्मीगणपतिश्चैवमहाविघ्नेश्वरस्तथा ॥ विजयःकल्पनृत्तश्चाप्यूर्ध्वविघ्नेशउच्यते ॥ २॥ एकाक्षरोवरश्चैवत्र्यक्षरः-

क्षिप्रदायकः ॥ हरिद्राख्यश्चैकदंतस्सृष्टिरुद्दंडनामकः ॥ ३ ॥ ऋणमोचनकोढुंढिर्द्विमुखस्त्रिमुखस्तथा ॥ सिंहोयोगश्चदुर्गाचदेवस्संकटहारकः ॥ ४ ॥ द्वात्रिंशद्विघ्नराजाख्यास्तेषांध्यानमथोच्यते ॥

७० तत्रादौ बालगणपतिध्यानम्—

करस्थकदलीचूतपनसेक्षुकमोदकम् ॥ बालसूर्यमिमंवंदेदेवंबालगणाधिपम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७१ अथ तरुणगणपतिध्यानम्—

पाशांकुशापूपकपित्थजंबूस्वदंतशालीक्षुमपिस्वहस्तैः ॥ धत्तेसदायस्तरुणारुणाभःपायात्सयुष्मांस्तरुणोगणेशः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७२ अथ भक्तगणपतिध्यानम्—

नालिकेराम्रकदलीगुडपायसधारिणम् ॥ शरच्चन्द्राभवपुषंभजेभक्तगणाधिपम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

७३ अथ वीरगणपतिध्यानम्—

बेतालशक्तिशरकार्मुकचक्रखड्गखट्वांगमुद्गरगदांकुशनागपाशान् ॥ शूलंचकुंतपरशुध्वजमुद्वहंतंवीरंगणेशमरुणंसततंस्मरामि ॥ १ ॥ रक्तवर्णः १

७४ अथ शक्तिगणपतिध्यानम्—

आलिंग्यदेवींहरितांगयष्टिंपरस्परश्लिष्टकटिप्रदेशम् ॥ संध्यारुणंपाशसृणीवहंतंभयापहंशक्तिगणेशमींडे ॥ १ ॥ सिंदूरवर्णः ॥ १ ॥

७५ अथ द्विजगणपतिध्यानम्—

यंपुस्तकाक्षगुणदंडकमंडलुश्रीविद्योतमानकरभूषणमिंदुवर्णम् ॥ स्तंबेरमाननचतुष्टयशोममानंत्वांयःस्मरेद्द्विजगणाधिपतेसधन्यः ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

७६ अथ सिद्धगणपतिध्यानम्—

पक्वचूतफलपुष्पमंजरीरिक्षुदंडतिलमोदकैस्सह ॥ उद्वहन्परशुमस्तुतेनमश्रीसमृद्धियुतहेमपिंगल ॥ १ ॥ पिंगलवर्णः ॥ १ ॥

## ७७ अथ उच्छिष्टगणपतिध्यानम्-

नीलाब्जदाडिमीवीणाशालिगुंजाक्षसूत्रकम् ॥ दधदुच्छिष्टनामायं गणेशःपातुमेचकः ॥ १ ॥ प्रकारांतरेण-नारीयोनिरसास्वादलोलुपं काममोहितम् ॥ नीलवर्णः ॥ १ ॥

## ७८ अथ विघ्नगणपतिध्यानम्-

शंखेक्षुचापकुसुमेषुकुठारपाशचक्रस्वदंतसृणिमंजरिकाशराद्यैः॥ पाणिश्रितैःपरिसमीहितभूषणश्रीर्विघ्नेश्वरोविजयतेतपनीयगौरः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

## ७९ अथ क्षिप्रगणपतिध्यानम्-

दंतकल्पलतापाशरत्नकुंभांकुशोज्ज्वलम् ॥ बंधूककमनीयाभंध्यायेत्क्षिप्रगणाधिपम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८० अथ हेरंबगणपतिध्यानम्-

अभयवरदहस्तःपाशदंताक्षमालासृणिपरशुदधानोमुद्गरंमोदकंच॥ फलमधिगतसिंहःपंचमातंगवक्रोगणपतिरतिगौरःपातुहेरंबनामा ॥ १ ॥ गौरवर्णः ॥ १ ॥

## ८१ अथ लक्ष्मीगणपतिध्यानम्-

बिभ्राणश्शुकबीजपूरकमिलन्माणिक्यकुंभांकुशान्पाशंकल्पलतांचखड्गविलसज्ज्योतिस्सुधानिर्झरः ॥ श्यामेनात्तसरोरुहेणसहितंदेवीद्वयंचांतिकेगोरांगौवरदानहस्तसहितोलक्ष्मीगणेशोवतात् ॥ १ ॥ गौरवर्णः ॥ १

## ८२ अथ महागणपतिध्यानम्-

हस्तींद्राननमिंदुचूडमरुणच्छायंत्रिणेत्रंरसादाश्लिष्टंप्रिययासपद्मकरयास्वांकस्थयासंततम् ॥ बीजापूरगदेक्षुकार्मुकलसच्चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहंतंभजे ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८३ अथ विजयगणपतिध्यानम्-

पाशांकुशस्वदंताम्रफलवानाखुवाहनः ॥ विघ्नंनिहंतुनस्सर्वंरक्तवर्णोविनायकः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८४ अथ नृत्तगणपतिध्यानम्-

पाशांकुशापूपकूठारदंतचंचत्कराक्लृप्तवरांगुलीकम् ॥ पीतप्रभंकल्पतरोरधस्थंभजामिनृत्तोपपदंगणेशम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८५ अथ ऊर्ध्वगणपतिध्यानम्-

कल्हारशालिकमलेक्षुकचापबाणदंतप्ररोहकगदीकनकोज्ज्वलांगः ॥ आलिंगनोद्यतकरोहरितांगयष्ट्यादेव्याकरोतुशुभमूर्ध्वगणाधिपोमे ॥ १ ॥ कनकवर्णः ॥ १ ॥

## ८६ अथ एकाक्षरगणपतिध्यानम्-

रक्तोरक्तांगरागांशुककुसुमयुतस्तुंदिलश्चंद्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणोबीजपूरंदधानः ॥ हस्ताग्राक्लृप्तपाशांकुशरदवरदोनागवक्त्रोहिभूषोदेवःपद्मासनस्थोभवतुसुखकरोभूतयेविघ्नराजः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८७ अथ वरगणपतिध्यानम्-

सिंदूराभमिभाननंत्रिनयनंहस्तेचपाशांकुशौबिभ्राणंमधुमत्कपालमनिशंसाब्धिंदुमौलिंभजे ॥ पुष्ट्याश्लिष्टतनुंध्वजाग्रकरयापद्मोल्लसद्धस्तयातद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८८ अथ त्र्यक्षरगणपतिध्यानम्-

गजेंद्रवदनंसाक्षाच्चलत्कर्णसुचामरम् ॥ हेमवर्णंचतुर्बाहुंपाशांकुशधरंवरम् ॥ १ ॥ स्वदंतंदक्षिणेहस्तेसव्येत्वाम्रफलंतथा ॥ पुष्करेमोदकंचैवधारयंतमनुस्मरेत् ॥ २ ॥ स्वर्णवर्णः ॥ १ ॥

## ८९ अथ क्षिप्रप्रसादगणपतिध्यानम्-

धृतपाशांकुशकल्पलतास्वरदश्चबीजपूरयुतः ॥ शशिशकलकलितमौलिस्त्रिलोचनोरुणश्चगजवदनः ॥ १ ॥ भासुरभूषणदीप्तोबृहदुदरःपद्मविष्टरोल्लसितः ॥ विघ्नपयोधरपवनःकरधृतकमलस्सदास्तुमेभूत्यै ॥ २ ॥ रक्तवर्णः ॥ १ ॥

९० अथ हरिद्रागणपतिध्यानम्-

हरिद्राभंचतुर्बाहुंहरिद्रावदनंप्रभुम् ॥ पाशांकुशौधरंदेवंमोदकंदंतमेवच ॥ १ ॥ भक्ताभयप्रदातारंवंदेविघ्नविनाशनम् ॥ हरिद्रावर्णः ॥ १ ॥

९१ अथ एकदंतगणपतिध्यानम्-

लंबोदरंश्यामतनुंगणेशंकुठारमक्षस्रजमूर्ध्वगात्रम् ॥ सलड्डुकंदंतमधःकराभ्यांवामेतराभ्यांचदधानमीडे ॥ १ ॥ श्यामवर्णः ॥ १ ॥

९२ अथ सृष्टिगणपतिध्यानम्-

पाशांकुशस्वदंताम्रफलवानाखुवाहनः ॥ विघ्नंनिहंतुनश्शोणःसृष्टिदक्षोविनायकः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९३ अथ उद्दंडगणपतिध्यानम्-

कल्हारांबुजबीजपूरकगदादंतेक्षुचापंसुमंबिभ्राणोमणिकुंभशालिकलशौपाशंसृणिंचाब्जकम् ॥ गौरांग्यारुचिरारविंदकरयादेव्यासमालिंगितश्शोणांगश्शुभमातनोतुभजतामुद्दंडविघ्नेश्वरः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९४ अथ ऋणमोचकगणपतिध्यानम्-

पाशांकुशौदंतजंबुदधानस्स्फटिकप्रभः ॥ रक्तांशुकोगणपतिर्मुदेस्यादृणमोचकः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

९५ अथ ढुंढिगणपतिध्यानम्-

अक्षमालांकुठारंचरत्नपात्रंस्वदंतकम् ॥ धत्तेकरैर्विघ्नराजोढुंढिनामामुदेस्तुनः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९६ अथ द्विमुखगणपतिध्यानम्-

स्वदंतपाशांकुशरत्नपात्रं करैर्दधानोहरिनीलगात्रः ॥ रक्तांशुकोरत्नकिरीटमालीभूत्यैसदामेद्विमुखो .णेशः ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

९७ अथ त्रिमुखगणपतिध्यानम्-

श्रीमत्तीक्ष्णशिखांकुशाक्षवरदान्दक्षेदधानः करैः पाशंचामृतपूर्णकुं-

भमभयंवामेदधानोमुदा ॥ पीठेस्वर्णमयारविंदविलसत्सत्कर्णिकाभासुरे स्वासीनस्त्रिमुखःपलाशरुचिरोनागाननःपातुनः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### ९८ अथ सिंहगणपतिध्यानम्—

वीणांकल्पलतामरिंचवरदंदक्षेविधत्तेकरैर्वामेतामरसंचरत्नकलशंसन्मं-जरींचाभयम् ॥ शुंडादंडलसन्मृगेंद्रवदनःशंखेंदुगौरःशुभोदीव्यद्रत्ननिभां-शुकोगणपतिःपायादपायात्सनः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### ९९ अथ योगगणपतिध्यानम्—

योगारूढोयोगपट्टाभिरामोवालार्काभश्चेंद्रनीलांशुकाढ्यः ॥ पाशेक्षव-क्षान्योगदंडंदधानोपायान्नित्यंयोगविघ्नेश्वरोनः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### १०० अथ दुर्गागणपतिध्यानम्—

तप्तकांचनसंकाशश्चाष्टहस्तोमहत्तनुः ॥ दीप्तांकुशंशरंचाक्षंदंतंदक्षे वहन्करैः ॥ १ ॥ वामेपाशंकार्मुकंचलतांजंबुदधत्करैः ॥ रक्तांशुकस्स-दाभूयाद्दुर्गागणपतिर्मुदे ॥ २ ॥ कनकवर्णः ॥ १ ॥

### १०१ अथ संकष्टहरगणपतिध्यानम्—

बालार्कारुणकांतिर्वामेबालांवहन्नंके ॥ लसदिंदीवरहस्तांगौरांगींर-त्नशोभाढ्याम् ॥ १ ॥ दक्षेंकुशवरदानंवामेपाशंचपायसंपात्रम् ॥ नीलांशुकलसमानः पीठेपद्मारुणेतिष्ठन् ॥ २ ॥ संकटहरणःपायात्सं-कटपूगाद्गजाननोनित्यम् ॥ रक्तवर्णः ॥ १ ॥

---

### अथ सप्तदशसुब्रह्मण्यानांध्यानम्—( शैवागमेशेखरे )

### १०२ तत्रादौज्ञानशक्तिसुब्रह्मण्यध्यानम्—

एकवक्त्रंद्विनेत्रंचजटामकुटसंयुतम् ॥ श्वेतार्कपुष्पमालंचहेमरत्नकि-रीटिनम् ॥ १ ॥ चतुर्भुजेर्वज्रशक्तिकुक्कुटाभयधारिणम् ॥ दिव्यगंधानुलिप्तां-गंशुक्लयज्ञोपवीतिनम् ॥ २ ॥ शिवशक्तिज्ञानयोगंज्ञानशक्तिस्वरूपकम् ॥ श्वेतवर्णः ॥ १ ॥

१०३ अथ स्कंदसुब्रह्मण्यध्यानम्-

चतुर्भुजंद्विनेत्रंचश्वेतपद्मासनस्थितम् ॥ कुक्कुटाभयवज्राणिदधतंवरदंकरे ॥ १ ॥ किंचित्केशशिखाबद्धपुष्पमालाभिरावृतम् ॥ मेखलांबरसंवीतंरत्नभूषणभूषितम् ॥ २ ॥ धूम्रवर्णप्रभंस्कंदंप्रभामण्डलमंडितम् ॥स्कंदरूपमिदंप्रोक्तम् ॥ धूम्रवर्णः ॥ १ ॥

१०४ अथ अग्निजातसुब्रह्मण्यध्यानम्-

द्विमुखंचाष्टबाहुंचश्वेतंवाश्यामकंदधम् ॥ स्रुवाक्षमालांखड्गंचस्वस्तिकंदक्षिणेकरे ॥ १ ॥ कुक्कुटंखेटकंवज्रमाज्यपात्रंतुवामके ॥ अग्निहोत्रविधिंदेवमग्निजातस्वरूपकम् ॥ २ ॥ नीलवर्णः ॥ १ ॥

१०५ अथ सौरभेयसुब्रह्मण्यध्यानम्-

चतुर्वक्त्राष्टनयनंभुजाष्टकमलासनम् ॥ कुंचितंवामपादंचसुस्थितंदक्षिणंपदम् ॥ १ ॥ शक्त्युत्पलेपुष्पबाणमभयंदक्षिणेकरे ॥ वज्रंचेक्षुधनुश्शूलंवरदंवामकेदधम् ॥ २ ॥ पद्मपुष्पनिभंचैवसौरभेयस्वरूपकम् ॥ पाटलवर्णः ॥ १ ॥

१०६ अथ गांगेयसुब्रह्मण्यध्यानम्-

एकवक्त्रंत्रिनयनंदाडिमीकुसुमप्रभम् ॥ करंडमुकुटोपेतंकुक्कुटध्वजधारिणम् ॥ १ ॥ नीलोत्पलधरंवन्देमकरारूढमव्ययम् ॥ परशुंपूर्णकुंभंचसव्यहस्तेतुधारिणम् ॥ २ ॥ अरणिंकुक्कुटंवामेगांगेयसमरूपकम् ॥ पाटलवर्णः ॥ १ ॥

१०७ अथ शरवणोद्भवसुब्रह्मण्यध्यानम्-

षड्भुजंचैकवदनंबालसूर्यसमप्रभम् ॥ सर्वाभरणसंयुक्तंसिंहस्थंदधतंभजे ॥ १ ॥ त्रिणेत्रंभसितोद्धूलंपुष्पबाणेक्षुकार्मुकम् ॥ खड्गंखेटंचवज्रंचकुक्कुटध्वजधारिणम्॥ २॥शरजन्मसमाख्यातम्॥ रक्तवर्णः ॥ १ ॥

१०८ अथ कार्तिकेयसुब्रह्मण्यध्यानम्-

त्रिणेत्रंदशहस्तंचमस्तकेबिल्वधारिणम् ॥ शक्तिंशूलंतथाचक्रमंकु-

शाभयमन्यके ॥ १ ॥ वरदंतोमरंपाशंशंखंवज्रंचवामके ॥ मयूरवाहनारूढंसर्वाभरणभूषितम् ॥ २ ॥ बालसूर्यप्रतीकाशंकार्तिकेयंशिवात्मजम् ॥ रक्तवर्णः ॥ १ ॥

### १०९ अथ कुमारसुब्रह्मण्यध्यानम्-

चतुर्भुजंचैकवक्त्रंकरंडमुकुटान्वितम् ॥ शक्तिंचाभयदंदक्षेसव्येवरदवज्रके ॥ १ ॥ पद्मपुष्पंधरंकंठेदेवंबालस्वरूपकम् ॥ रक्तवर्णः ॥ १ ॥

### ११० अथ षण्मुखसुब्रह्मण्यध्यानम्-

शक्तिंशरंचखड्गंचचक्रंपाशाभयौतथा ॥ कुक्कुटंचधनुःखेटंशंखंधत्तेहलंवरम् ॥ १ ॥ मयूरवाहनोपेतंसर्वलक्षणसंयुतम् ॥ जयाचविजयाचैववामदक्षिणपार्श्वयोः ॥ २ ॥ सर्वालंकारसंयुक्तंसर्वाभरणभूषितम् ॥ षण्मुखंचेतिविख्यातम् ॥ रक्तवर्णः ॥

### १११ अथ तारकादिसुब्रह्मण्यध्यानम्-

एकवक्त्रंत्रिनयनंगजपृष्ठोपरिस्थितम् ॥ षण्मुखंचाभयंखड्गंशक्तिंवामेतरेदधम् ॥१॥ खेटकंचाक्षमालांचकुक्कुटंवामहस्तके ॥ तारकारिंभजेख्यातम् ॥ रक्तवर्णः ॥ १ ॥

### ११२ अथ सेनानीसुब्रह्मण्यध्यानम्-

एकवक्त्रंद्विनयनंशंखचक्रवराभयान् ॥ सर्वावरणसंयुक्तंदिव्यगंधानुलेपनम् ॥ १ ॥ श्यामवर्णप्रभुंचैवशुक्लयज्ञोपवीतिनम् ॥ सुस्मितंचारुवदनंदेवसेनापतिंभजे ॥ २ ॥ श्यामवर्णः ॥ १ ॥

### ११३ अथ गुहसुब्रह्मण्यध्यानम्-

चतुर्भुजंत्रिणेत्रंचहेमरत्नकिरीटिनम् ॥ शूलंवज्रंधरंसव्येवराभयकमन्यके॥ १ ॥श्वेतवस्त्रधरंदेवंसर्वेषांरक्षणोन्मुखम्॥ जाययावामपार्श्वेतुकल्याणोत्सवविग्रहम्॥ २॥ पादांबुजंहृदिध्यात्वागुहरूपंसमाश्रये॥ श्यामवर्णः १

### ११४ अथ ब्रह्मचारिसुब्रह्मण्यध्यानम्-

द्विनेत्रंद्विभुजंचैवबालसूर्यधरंप्रभुम् ॥ दक्षभागेदंडहस्तंवज्रवामोरुह-

स्तकम् ॥ १ ॥ सव्यापसव्यपादंतुस्थितंवाकुंचितंतुवा ॥ शिखायज्ञो-
पवीताढ्यंमौंजीकौपीनसंयुतम् ॥ २ ॥ मेखलोपरिवज्र्याणंरक्तपद्मोपरि
स्थितम् ॥ दिव्यरूपधरंदेवंब्रह्मचारिणमाश्रये ॥ ३ ॥ रक्तवर्णः ॥ १ ॥

११५ अथ देशिकसुब्रह्मण्यध्यानम्-

षड्भुजंचैकवदनंकरंडमकुटान्वितम् ॥ शक्तिहस्तद्वयंचैवजपमाला-
धरंशुभम् ॥ १ ॥ मयूरवाहनारूढंवराभयकरांबुजम् ॥ इत्येवंविधि-
वद्ध्यायेच्छिवदेवस्यदेशिकम् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

११६ अथ क्रौंचभेदनसुब्रह्मण्यध्यानम्-

चतुर्भुजंत्रिणेत्रंचास्थितंसिंहासनोपरि ॥ वरदाभयसंयुक्तपुष्पबा
णेक्षुकार्मुकम् ॥ १ ॥ मयूरवाहनारूढंनमस्येरक्षणोन्मुखम् ॥ क्रौंचभेदकर
द्वंद्वंक्रौंचभेदिस्वरूपकम् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

११७ अथ शिखिवाहनसुब्रह्मण्यध्यानम्-

चतुर्भुजंचैकवक्त्रंत्रिणेत्रमभयंवरम् ॥ पाशांकुशंदधंचैवज्वलाकेश
शिखंडकम् ॥ १ ॥ इन्द्रनीलरथारूढंरक्तोत्पलसमप्रभम् ॥ चतुर्दशादि
भवनंशिखिवाहनमाचरेत् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

११८ अथ वेलायुधसुब्रह्मण्यध्यानम्-

कल्पद्रुमंप्रणमतांकमलारुणाभंस्कंदंभुजद्विकमनामयमेकवक्त्रम् ॥
कात्यायनीसुतमहंकटिबद्धवामहस्तंचदंडधरदक्षिणहस्तमीडे ॥ १ ॥
रक्तवर्णः ॥ १ ॥

---

११९ अथ वीरभद्रध्यानम्-( पांचरात्रे )

नीलवर्णंत्रिणेत्रंचखड्ग बाणधनुर्गदाः ॥ दधतंरुंडमालांचपादुकाद्वय-
संयुतम् ॥ १ ॥ दक्षिणंपीतवसनंवीरभद्रमुपास्महे ॥ नीलवर्णः ॥ १ ॥

१२० अथ स्वर्णाकर्षणभैरवध्यानम्-( तत्कल्पे )

पीतवर्णंचतुर्बाहुंत्रिणेत्रंपीतवाससम् ॥ अक्षयस्वर्णमाणिक्यगणपूरि

तपात्रकम् ॥ १ ॥ अंसाहितमहाशूलचामरंतोमरोद्वहम् ॥ सततंचिंतयेद्भ
क्त्याभैरवंसर्वसिद्धिदम् ॥ २ ॥ नानाभरणशोभाढ्यमानंदसुखरूपिणम् ॥
मदोन्मत्तं सदानंदंसर्वदेवनमस्कृतम् ॥ ३ ॥ एवंध्यायेच्चमंत्रज्ञःस्वर्णाकर्षण
भैरवम् ॥ पीतवर्णः ॥ १ ॥

## १२१ अथ वटुकभैरवध्यानम्–( तत्कल्पे )

विकीर्णलोहितजटंत्रिणेत्रंरक्तविग्रहम् ॥ शूलंकपालंपाशंचडमुरुंदध-
तंकरैः ॥ १ ॥ नानारूपैःपिशाचैश्चनानारूपगणैर्वृतम् ॥ श्वानारूढंचनिर्वाणं
वटुकंभैरवंभजे ॥ २ ॥ रक्तवर्णः ॥ १ ॥

## १२२ अथ मल्लारिशिवध्यानम्–( मल्लारिमाहात्म्ये )

मुकुटमणिमयूखप्रोज्झिताशेषरत्नंविमलशशिकलांकंसुंदरेंदीवराक्षम् ॥
अनुकृतशशितेजःकुंडलंचारुहासंप्रकटदशनशोभानिर्जितानेकहीरम् ॥
॥ १ ॥ अभिनवमणिमुक्ताहारचांपेयमालाविविधकुसुमगुच्छैःशोभि-
वक्षस्थलाढ्यम् ॥ सफणपवनभुग्दोर्दंडभूषाभिरामंकरडमरुनिनादैःपूरि-
तद्योखगर्भम् ॥ २ ॥ त्रिभुवनभवनेशंपीतकौशेयवासंदनुजदहनदक्षंप्रस्फु
रत्खड्गहस्तम् ॥ भुजगफणसुगुप्तैर्भूषणैर्न्यस्तभूषंप्रणतसुरकिरीटव्याप्तपा
दारविंदम् ॥ ३ ॥ सितहयवरपत्रंहारसंभूषितांगंपरिवृतमतिघोरैःसप्त
भिःसारमेयैः ॥ कनकगिरिसमाभंनैशचूर्णाभिरामंसकलनिगमगुह्यंनौमिम
ल्लारिदेवम् ॥ ४ ॥ रक्तवर्णः ॥ १ ॥

## १२३ अथ चंडेशध्यानम्–( कारणागमे )

कृष्णंसुभद्रचतुराननमिंदुचूडंशार्दूलचर्मवसनंजटिलंत्रिणेत्रम् ॥ टंकंच
शूलमभयंजपमालिकांचबिभ्राणमेकमनसासततंस्मरामि ॥ १ ॥ रक्तवर्णः १

## १२४ अथ पाशुपतास्त्रध्यानम्–( शैवागमे )

चतुर्वक्त्रंचतुर्बाहुंसूर्यकोटिसमप्रभम् ॥ संहाराभंसुमूर्धानंप्रतिवक्त्रंत्रि-
लोचनम् ॥ १ ॥ दीप्तदंताग्रकेशभ्रूश्मश्रुभीमंमहाबलम् ॥ शक्तिमुद्ग
रशंखासीन्दधानंसोमसूत्रिणम् ॥ २ ॥ सांगंपाशुपतंशस्त्रंभजेपद्मा-
सनेस्थितम् ॥ रक्तवर्णः ॥ १ ॥

१२५ अथ खड्गरावणध्यानम्–(पांचरात्रे)

लोहितांगंचंद्रमौलिंपंचवक्त्रंत्रिलोचनम् ॥ घंटांकपालंचसृणिमुंडंचापिकृपाणकम् ॥ १ ॥ खेटखट्वांगशूलानिडमरुंचतथाभयम् ॥ दधानंरक्तवसनंभजेहंखड्गरावणम् ॥ २ ॥ रक्तवर्णः ॥ १ ॥

---

अथ भैरवाष्टाष्टकध्यानम्–(रुद्रयामले)

इतःपरंप्रवक्ष्यामिशृणुराजन्नशेषतः ॥ अष्टाष्टकमिदंपुण्यंभैरवाणामभीष्टदम् ॥ १ ॥ पूर्ववद्वर्णतोध्यानेध्येयंसर्वैःपृथक्पृथक् ॥ ६४ ॥

१२६ तत्रादौ प्रथमाष्टकध्यानम्–

अघाष्टकंसुवर्णाभंत्रिशूलंडमरुंतथा ॥ पाशंचासिंदधानंचध्यायेत्सर्वाङ्गसुंदरम् ॥ १ ॥ कनकवर्णम् ॥ ८ ॥

१२७ अथ द्वितीयाष्टकध्यानम्–

अथद्वितीयकंध्यायेदक्षमालामथांकुशम् ॥ दधानंपुस्तकंवीणांसुश्वेतमणिभूषणम् ॥ १ ॥ श्वेतवर्णम् ॥ ८ ॥

१२८ अथ तृतीयाष्टकध्यानम्–

ज्वालांशक्तिंगदांकुंतंदधानंनीलवर्णकम् ॥ ध्यायेत्तृतीयंशुभदमष्टकंशुभलक्षणम् ॥ १ ॥ नीलवर्णम् ॥ ८ ॥

१२९ अथ चतुर्थाष्टकध्यानम्–

खड्गंखेटंपट्टसंचदधानंपरशुंतथा ॥ धूम्रवर्णमभिप्रेतंध्यायेदष्टकमादरात् ॥ १ ॥ कुंतंखेटंचपरिघंभिंडिवालंतथैवच ॥ धूम्रवर्णम् ॥ ८ ॥

१३० अथ पंचमाष्टकध्यानम्–

पंचमाष्टकमेतद्धिश्वेतंस्यात्सुमनोहरम् ॥ श्वेतवर्णम् ॥ १ ॥ ८ ॥

१३१ अथ षष्ठसप्तमाष्टमाष्टकानांध्यानम्–

पीतष्षष्ठमृषीरक्तमष्टमंचतडित्प्रभम् ॥ पंचमाष्टकमेतद्धिश्वेतंस्यात्सुमनोहरम् ॥ १ ॥ कुन्तादिकंसमंप्रोक्तंषडारभ्याष्टमांतकम् ॥ क्रमेण पीतरक्ततडिद्वर्णाः ॥ २४ ॥

---

## अथ चतुष्षष्टिभैरवाणांनामानि–

असितांगोविशालाक्षोमार्तांडोमोदकप्रियः ॥ स्वच्छंदोविघ्नसंतुष्टः-
खेचरःसचराचरः॥ १॥ रुरुश्चक्रोडदंष्ट्रश्चतथैवचजटाधरः ॥ विश्वरूपो-
विरूपाक्षोनानारूपधरःपरः॥ २॥ वज्रहस्तोमहाकायो चंडश्चप्रलयांतकः॥
भूमिकंपोनीलकंठोविष्णुश्चकुलपालकः ॥ ३॥ मुंडपालःकामपालःक्रोधो
वैपिंगलेक्षणः॥ अभ्ररूपोधरापालःकुटिलोमंत्रनायकः ॥ ४ ॥ रुद्रःपि-
तामहाख्यश्चाप्युन्मत्तोवटुनायकः ॥ शंकरोभूतवेतालोत्रिणेत्रस्त्रिपुरां-
तकः ॥ ५॥ वरदःपर्वतावासःकपालःशशिभूषणः॥ हस्तिचर्मांबरधरो-
योगीशोब्रह्मराक्षसः ॥ ६ ॥ सर्वज्ञःसर्वदेवेशःसर्वभूतहृदिस्थितः ॥ भी-
षणाख्योभयहरस्सर्वज्ञाख्यस्तथैवच ॥ ७ ॥ कालाग्निश्चमहारौद्रो
दक्षिणोमुखरोऽस्थिरः ॥ संहारश्चातिरिक्तांगोकालाग्निश्चप्रियंकरः ॥८॥
घोरनादोविशालाक्षोयोगीशोदक्षसंस्थितः ॥ ६४ ॥

---

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्नाटकजनपदसंपदधिष्ठानभूत-
श्रीमन्महीशूरमहासंस्थानमध्येदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपा-
लप्रमुखनिखिलराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्रीम-
द्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेतेंबरगंडलोकैकवीरयदुकु-
लपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडधर-
णीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितमहीशूरपुरवराधीशश्रीकृष्ण-
राजमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेमहाकैलासमूर्त्यादिशि-
वमूर्तिस्वरूपनिरूपणंनामतृतीयश्शिवनिधिस्संपूर्णः ॥ ३ ॥

---

इति श्रीतत्त्वनिध्याख्यग्रन्थेमहाकैलासमूर्त्यादिस्वरूप-
निरूपणं नामशिवनिधिस्सम्पूर्णः ॥

इति

श्री तत्त्वनिध्याख्यग्रन्थे महाकैलासमूर्त्यादिस्व-
रूपनिरूपणं नामशिवनिधिस्संपूर्णः ॥



श्रीः ।

अथ

# श्रीतत्त्वनिधौ–

## चतुर्थो ब्रह्मनिधिः ।

### १ अथ चतुर्मुखध्यानम्–( शैवागमे )

चतुर्मुखंचतुर्बाहुंकमंडल्वक्षधारिणम् ॥ यज्ञसूत्रोत्तरीयंचजटामकुटसंयुतम् ॥ १ ॥ सव्यहस्तेक्षमालांचवामहस्तेकमंडलुम् ॥ स्रुवंदक्षिणहस्तेचपुस्तकंवामहस्तके ॥ २॥ अंबुजासनमासीनंध्यानसंमीलितेक्षणम् ॥ पद्मपत्रदलाग्राभंध्यायेदेवंचतुर्मुखम् ॥ ३ ॥ पाटलवर्णः ॥ १ ॥

### २ अथ सरस्वतीध्यानम्–( नृसिंहप्रासादे )

देवीसरस्वतीकार्यासर्वाभरणभूषिता ॥ चतुर्भुजासाकर्तव्यातथैवचसमस्थिता ॥ १ ॥ पुस्तकंचाक्षमालांचतस्यादक्षिणहस्तयोः ॥ वामयोश्चतथाकार्येवैणवीचकमंडलुः ॥ २ ॥ समपादाप्रतिष्ठाप्याकार्यासौम्यमुखीसिता ॥ श्वेतवर्णा ॥ १ ॥

---

### अथ पंचब्रह्मणांध्यानम्–( नृसिंहप्रासादे )

### ३ तत्रादौ आद्यब्रह्मध्यानम्–

ब्रह्माणंकारयेद्विद्वान्देवंसौम्यंचतुर्मुखम् ॥ बद्धपद्मासनंतुष्टंतथाकृष्णाजिनांबरम् ॥ १ ॥ जटाधरंचतुर्बाहुंसप्तहंसरथस्थितम् ॥ वामन्यस्तेतरकरंतस्यैकंदोर्युगंभवेत् ॥ २ ॥ एकस्मिन्दक्षिणेपाणावक्षमालांतु बिभ्रतम् ॥ कमंडलुंद्वितीयेचसर्वाभरणधारिणम् ॥ ३ ॥ सर्वलक्षणसं-

युक्तंशांतरूपंचपार्थिव ॥ पद्मपत्रदलाग्राभंध्यानसंमीलितेक्षणम् ॥ ४ ॥ आचार्यःकारयेदेवंचित्रेवावास्तुकर्मणि ॥ पाटलवर्णः ॥ १ ॥

## ४ अथ लोकपालब्रह्मध्यानम्-

पद्मपत्रासनस्थश्चब्रह्माकार्यश्चतुर्मुखः ॥ आदित्यवर्णोधर्मज्ञस्साक्षसूत्रधरस्तथा ॥ १ ॥ रूपंपूर्वोदितंकार्यंसर्वमन्यज्जगत्पतेः ॥ पाटलवर्णः ॥ १ ॥

## ५ अथ प्रजापतिब्रह्मध्यानम्-

हंसयानेनकर्तव्योनचकार्यश्चतुर्मुखः ॥ सावित्रीतस्यकर्तव्यावामोत्संगगताशुभा ॥ १ ॥ ब्रह्मोक्तंपरमंरूपंसर्वंकार्यंप्रजापतेः ॥ पाटलवर्णः ॥ १ ॥

## ६ अथ विधिब्रह्मध्यानम्-

विश्वकर्मातुकर्तव्यस्सूर्यरूपधरःप्रभुः ॥ द्विभुजोदशपाणिश्चतेजोमूर्तिधरोमहान् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

## ७ अथ विश्वकर्मब्रह्मध्यानम्-

चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुःसितांबरः ॥ सर्वाभरणवाञ्छांतोधर्मकार्यविदव्ययः ॥ १ ॥ दक्षिणेचाक्षमालांदधानंवामेतुपुस्तकम् ॥ मूर्तिमान्व्यवसायस्तुकार्योदक्षिणभागतः ॥ २ ॥ वामभागगतंकार्यंमुखंपरमरूपवत् ॥ कार्यौपद्मकरौमूर्ध्निविन्यस्तौचतथातयोः ३ पाटलवर्णः ॥ २ ॥ ५ ॥

---

अथ नवप्रजेश्वराणांनामानि-( स्कांदे लक्ष्मीनारायणसंहितायाम् )

मरीचिस्त्वंगिराश्चात्रिःपुलस्त्यःपुलहःक्रतुः ॥ कर्दमःकश्यपोदक्षोनवैतेब्रह्मसूनवः ॥ १ ॥ ९ ॥

## ८ तत्रादौ मरीचिध्यानम्-

आद्यंप्रजेश्वरंनौमिब्रह्ममानससंभवम् ॥ अक्षस्रक्कुंडिकापाणिंजटावल्कलभूषितम् ॥ १ ॥ कनकाचलसंकाशंजपंतंप्रणवंपरम् ॥ कनकवर्णः ॥ १ ॥

## ९ अथ अंगिरोध्यानम्-

ऋषिमांगिरसंवंदेत्रिपुंड्रांकितमस्तकम् ॥ अक्षस्रक्कुंडिकाहस्तंप्रजेशंकनकप्रभम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

१० अथ अत्रिध्यानम्—

अत्रिंमरीचितनयंसाक्षसूत्रकमंडलुम् ॥ जटिलंश्मश्रुलंशांतंश्यामलांगंभजेऽनिशम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

११ अथ पुलस्त्यध्यानम्—

पुलस्त्यंशिरसानौमिब्रह्मणोमानसंसुतम् ॥ शांतंजितारिषड्वर्गमक्षस्रग्दंडहस्तकम् ॥ १ ॥ कृष्णाजिनोत्तरीयंचजटिलंपिंगलप्रभम् ॥ पिंगलवर्णः १

१२ अथ पुलहध्यानम्—

तपोनिधिमहंशांतंपुलहंनौमिसंततम् ॥ अक्षमालांकुंडिकांचदधतंघनमेचकम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

१३ अथ क्रतुध्यानम्—

क्रतुंक्रतुवरोयुक्तंब्रह्मर्षिगणसंस्तुतम् ॥ जटिलंश्मश्रुलंदंडकमंलुकरोज्ज्वलम् ॥ १ ॥ सप्तार्चिरिवभास्वंतंध्यायेहंतपसांनिधिम् ॥ रक्तवर्णः ॥ १ ॥

१४ अथ कर्दमध्यानम्—

कर्दमंनौमिशिरसापापकर्दमशोषणम् ॥ जटामकुटशोभाढ्यंसंध्याभारुणविग्रहम् ॥ १ ॥ अक्षस्रक्कुंडिकाहस्तंचीरकृष्णाजिनांबरम् ॥ सिंदूरवर्णः ॥ १ ॥

१५ अथ कश्यपध्यानम्—

कश्यपंनौमिशिरसामरीचितनयंशुचिम् ॥ प्रणवब्रह्मसंसक्तचित्तंसत्कांचनप्रभम् ॥ १ ॥ चीरवल्कलसंवीतंजटामंडलभासुरम् ॥ प्रजासंसर्जनोद्युक्तमक्षस्रक्कुंडिकाधरम् ॥ २ ॥ कांचनवर्णः ॥ १ ॥

१६ अथ दक्षध्यानम्—

अजवक्त्रंद्विनयनंश्रृंगद्वयविभूषितम् ॥ नमस्कारांजलिंवंदेशिवध्यानपरायणम् ॥ १ ॥ स्वायंभुवंघनश्यामंदक्षमध्वरदीक्षितम् ॥ श्यामवर्णः ॥ १ ॥ ९

---

१७ अथ सप्तऋषीणांध्यानम्—( नृसिंहप्रासादे )

उदासीनास्सोपवीताः कमंडल्वक्षसूत्रिणः ॥ जटिलाश्श्मश्रुलाश्शां-

ताआसीनाध्यानतत्पराः ॥ १ ॥ सप्तर्षयोवसिष्ठस्तुकार्योभार्यासमन्वि-तः ॥-॥ तेषां नामानि ॥ गौतमश्चभरद्वाजोविश्वामित्रोथकाश्यपः ॥ जमदग्निर्वसिष्ठोत्रिस्सप्तवैवस्वतेंतरे ॥ १ ॥ ७ ॥

## १८ तत्रादौ गौतमध्यानम्-

रहूगणात्मजंशांतंत्रिपुंड्रांकितमस्तकम् ॥ अक्षस्रक्कुंडिकादंडान्द-धानंगौतमंभजे ॥ १ ॥ कनकवर्णः ॥ १ ॥

## १९ अथ भरद्वाजध्यानम्-

भरद्वाजंमहाशांतंसुशीलापतिमूर्जितम् ॥ अक्षस्रग्दंडहस्तंचमुनिमां-गिरसंभजे ॥ १ ॥ श्यामवर्णः ॥ १ ॥

## २० अथ विश्वामित्रध्यानम्-

हिरण्यगर्भसदृशंजटामकुटधारिणम् ॥ कुमुद्वतीपतिंशांतंविश्वा-मित्रंभजाम्यहम् ॥ १ ॥ पीतवर्णः ॥ १ ॥

## २१ अथ काश्यपध्यानम्-

ध्यायेन्मरीचितनयंजटावल्कलधारिणम् ॥ जपाक्षस्रग्धरंपत्नीसहितं मुनिपुंगवम् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

## २२ अथ जमदग्निध्यानम्-

शांतंजितारिषड्वर्गंभृगुपुत्रंमहाद्युतिम् ॥ दंडाक्षसूत्रपाणिंचजमदग्निं नमाम्यहम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## २३ अथ वसिष्ठध्यानम्-

तपोनिधिंदयासिंधुंमित्रावरुणसंभवम् ॥ स्रग्दंडपाणिंवरदंवसिष्ठंप्रण-माम्यहम् ॥ १ ॥ सितवर्णः ॥ १ ॥

## २४ अथ अत्रिध्यानम्-

विरिंचितनयंदेवंसाक्षसूत्रकमंडलुम् ॥ अनसूयापतिंशांतमत्रिंनिष्क-ल्मषंभजे ॥ १ ॥ असितवर्णः ॥ १ ॥ ७ ॥

२५ अथ धर्मादिचतुष्टयध्यानम्–( नृसिंहप्रासादे )

धर्मोज्ञानंचवैराग्यमैश्वर्यंचतथैवहि ॥ सितारुणंपीतकृष्णंसिंहरूपाः प्रकीर्तिताः ॥ १ ॥ ४ ॥

२६अथधर्मादिचतुष्टयाभिमानिदेवताचतुष्टयध्यानम्–(पांचरात्रे)

यमवायुशिवेंद्राश्वज्ञेयाधर्मादिदेवताः ॥ ( एतेषांलक्षणानिदिक्पालेषु द्रष्टव्या ४ निधौ ) ॥ ४ ॥

२७ अथ अधर्मादिचतुष्टयध्यानम्–( पांचरात्रे पाद्मसंहितायाम् )

आशासुतावतीष्वेवपुरुषाकृतयस्थिताः ॥ चतुर्भुजास्सिंहवक्त्रास्सित पूर्वारुणाःपरे ॥ १ ॥ हस्ताभ्यामाभिमुख्याभ्यांरचितांजलिसंपुटाः ॥ अपराभ्यांचबिभ्राणाःकराभ्यांयोगपीठकौ ॥ २ ॥ मुखेश्वेतवर्णाः ॥ शरीरेरुणवर्णाः ॥ ४ ॥

२८ अथ अधर्मादिचतुष्टयाभिमानिदेवताचतुष्टयध्यानम्–
( पांचरात्रे पाद्मसंहितायाम् )

अधर्माधिपतिर्निर्ऋतिः ॥ अज्ञानाधिपतिर्दुर्गा ॥ अवैराग्याधिपतिः कामः॥ अनैश्वर्याधिपतिःरुद्रः॥ अपूजिताअधर्माद्यादातारस्तेतथाविधाः॥ निर्ऋतिश्चैवदुर्गाचकामोरुद्रस्तथैवच॥ १ ॥( एतेषांस्वरूपाणितत्तन्मूर्तिल-क्षणे पूर्वमुक्तानिवक्ष्यंतेचक्रमेण ४–५–२–५ निधौ ) ॥ ( रुद्रःआर्द्रा-नक्षत्रदेवतावत् ) दुर्गारौद्रिवत्सरदेवतावत् ) ॥ ४ ॥

२९ अथ पुण्यपुरुषलक्षणम्–( कारणागमे )

सिंहासनेसमासीनंस्वर्णवर्णंकिरीटिनम् ॥ गीर्वाणनुतपादाब्जंपुण्यं हृदिविभावये ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

३० अथ पापपुरुषध्यानम्–( पांचरात्रे )

ब्रह्महत्याशिरस्कंचस्वर्णस्तेयभुजद्वयम् ॥ सुरापानहृदायुक्तंगुरुतल्पक टिद्वयम्॥ १ ॥ तत्संयोगिपदद्वद्वमंगप्रत्यंगपातकम्॥ उपपातकरोमाणंपिंगभ्रू श्मश्रुलोचनम्॥ २॥ खड्ग चर्मधरंकृष्णंकुक्षौपापंविचिंतयेत्॥ कृष्णवर्णः १

३१ अथ ब्रह्मास्त्रध्यानम्-( तत्कल्पे )

सव्येनारीन्पीडयंतंगदयाचोत्तरेणतु ॥ दीर्घजिह्वंपीतवस्त्रंस्मरामिबग-लामुखम् ॥ १ ॥ पीतवर्णः प्रसिद्धः ॥ १ ॥

अथ वेदचतुष्टयस्वरूपम्-( नृसिंहप्रासादे )

३२ तत्रादौ ऋग्वेदस्वरूपम्-

ऋग्वेदश्श्वेतवर्णस्स्याद्द्विभुजोरासभाननः ॥ अक्षमालाधरःसौम्यः प्रीतोव्याख्यापनोद्यतः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

३३ अथ यजुर्वेदस्वरूपम्-

अजास्यःपीतवर्णस्स्याद्यजुर्वेदोक्षसूत्रधृत् ॥ वामेकुलिशपाणिस्तुभू-तिदोमंगलप्रदः ॥ १ ॥ पीतवर्णः ॥ १ ॥

३४ अथ सामवेदस्वरूपम्-

नीलोत्पलदलाभासःसामवेदोहयाननः ॥ अक्षमालान्वितोदक्षेवामेकुं-भधरस्स्मृतः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

३५ अथ अथर्वणवेदस्वरूपम्-

अथर्वणाभिधोवेदोधवलोमर्कटाननः ॥ अक्षमालान्वितोवामेदक्षेकुं-भधरस्स्मृतः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

अथ ऋगादिवेदपत्नीनांस्वरूपाणि-(स्कांदेलक्ष्मीनारायणसंहितायाम्)

३६ तत्रादौ ऋग्वेदपत्नीसामिधेनोस्वरूपम्-

मयूरास्याशुभ्रवर्णाकटकद्वयभूषिता ॥ हस्ताभ्यांदधतीपद्मंपीतवस्त्र-मनूपमम् ॥ १ ॥ सामिधेनीसमाख्याता ॥ शुभ्रवर्णा ॥ १ ॥

३७ अथ यजुर्वेदपत्नीसृगास्वरूपम्-

सृगायालक्षणंश्रृणु ॥ रक्तवर्णाविशालाक्षीपद्महस्ताकृशोदरी ॥ १ ॥ रक्तवर्णा ॥ १ ॥

३८ अथ सामवेदपत्नीकुहूस्वरूपम्-

पूर्णेंदुवदनाशुभ्राभुजद्वयविभूषिता ॥ सव्येशुकंतथादक्षेधान्यमंजरि कांतथा ॥ १ ॥ दधानासाकहूर्देवी ॥ श्वेतवर्णा ॥ १ ॥

३९ अथ अथर्वणवेदपत्नीसमित्स्वरूपम्–

समिल्लक्षणमुच्यते ॥ सूकरास्याचकोराक्षीचंपकाभासितांशुका ॥ १ ॥ भुजैश्चतुर्भिस्संधत्तेस्रुक्स्रुवौकमलंघटम् ॥ कनकवर्णा ॥ १ ॥

४० अथ चतुर्वेदाभिमानिनांगोत्राधिदैवतानांस्वरूपाणि-( हेमाद्रौदानकांडे )

ऋग्वेदस्यात्रेयंगोत्रंसोमंदैवंविदुर्बुधाः ॥ काश्यपंचयजुर्वेदंरुद्रदैवंतुतंविदुः ॥ १ ॥ सामवेदोपिगोत्रेणभरद्वाजःपुरंदरः ॥ अधिदैवंविजानीयाद्वैतानंस्यादथर्वणे ॥ २ ॥ब्रह्मदैवंविजानीयाद्रूपाण्यस्यशृणुष्वभो ॥ (ऋग्वेदाभिमानीसोमःनवग्रहस्थचंद्रवत् ५नि० ) ॥ (यजुर्वेदाभिमानीरुद्रःसूर्यप्रत्यधिदेवतावत् ५नि०) ॥ (सामवेदाभिमानींद्रःबृहस्पत्यधिदेवतावत् ५नि० ) ॥ ( अथर्वणवेदाभिमानीब्रह्माब्रहस्पतिप्रत्यधिदेवतावत् ४ नि० ) ॥ १ ॥

४१ अथ आयुर्वेदस्वरूपम्–( नृसिंहप्रासादे )

आयुर्वेदोहरिद्राभोवानरास्योविशालदृक् ॥ अक्षसूत्रंसुधाकुंभंबिभ्रदारोग्यदोभृशम् ॥ १ ॥ पीतवर्णः ॥ १ ॥

४२ अथ आयुर्वेदाभिमानिधन्वंतरिध्यानम्–( भागवते )

अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराजपुरुषःपरमाद्भुतः ॥ १ ॥ दीर्घपीवरदोर्दंडःकंबुग्रीवोरुणेक्षणः ॥ श्यामलस्तरुणःस्रग्वीसर्वाभरणभूषितः ॥ २ ॥ पीतवासामहोरस्कास्सुमृष्टमणिकुंडलः ॥ नीलकुंचितकेशांतसुभगस्सिंहविक्रमः ॥ ३ ॥ अमृताऽऽपूर्णकलशंबिभ्रद्वलयसंयुतः ॥ सवैभगवतस्साक्षाद्विष्णोरंशांशसंभवः ॥ ४ ॥ धन्वंतरिस्स्याद्विख्यातआयुर्वेददृगिज्यया ॥ श्यामवर्णः ॥ १ ॥–॥ प्रकारांतरम्–( आयुर्वेदतंत्रे ) ॥ अरिजलजजलूकारत्नपीयूषकुंभप्रकटितकरकांतःकांतपीतांबराढ्यः ॥ सितवसनविराजन्मौलिरारोग्यदायीशतमखमणिवर्णःपातुधन्वंतरिर्नः ॥ १ ॥ नीलवर्णः ॥ १ ॥–॥ प्रकारान्तरम्–( मंत्रागमे ) शंखं चक्रंजलूकांदधदमृतघटं चापिदोर्भिश्चतुर्भिस्सूक्ष्मंस्वच्छंदहृद्यंकुशपरिविलसन्मौलिमंभोजनेत्रम् ॥ कालांभोदोज्ज्वलांगं

कटितटविलसच्चारुपीतांबराढ्यंवेदेधन्वंतरिंतंनिखिलगदवनव्रातदावाग्नि-लीलम् ॥ १ ॥-॥ प्रकारान्तेणध्यानम्-( वैद्यशास्त्रे )॥ शंखंचक्रमुपर्यधस्थकरयोर्दिव्यौषधिंदक्षिणे वामेनान्यकरेणनिर्मलसुधाकुंडंजलूकावलिम् ॥ बिभ्राणःकरुणाकरश्शुभकरस्सर्वामयध्वंसकस्सर्वेतेदुरितंछिनत्तुभगवान्धन्वंतरिस्संततम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ४३ अथ धनुर्वेदस्वरूपम्-( नृसिंहप्रासादे )

पीतवर्णोधनुर्वेदःपिकवक्त्रोमहत्तनुः ॥ धनुर्बाणधरोरौद्रोमस्तकेकपिलाजटाः ॥ १ ॥ पीतवर्णः ॥ १ ॥

### ४४ अथ धनुर्वेदाभिमानींद्रदेवताध्यानम्-(नृसिंहप्रासादेमयूखेच)

श्वेतहस्तिसमारूढंवज्रांकुशलसत्करम् ॥ सहस्रनेत्रंपीताभमिंद्रंहृदिविभावये ॥ १ ॥ पीतवर्णः ॥ ( शुक्रप्रत्यधिदेवतावत् ५ नि० ) ॥ १ ॥

---

### अथ वेदषडंगस्वरूपाभिमानिदेवतास्वरूपाणि-( नृसिंहप्रासादे )

### ४५ तत्र शिक्षास्वरूपम्-

शिक्षाशुभ्राऽभयकराज्ञानमुद्रासमन्विता ॥ त्र्यक्षसूत्रासकुंडाचषड्भुजादंडपंकजा ॥ १ ॥ शुभ्रवर्णा ॥ १ ॥

### ४६ अथ शिक्षाभिमानिदेवताप्रजापतिध्यानम्-

हंसयानेनकर्तव्योनचकार्यश्चतुर्मुखः॥ सावित्रीतस्यकर्तव्यावामोत्संगगताशुभा ॥ १ ॥ ब्रह्मोक्तंपरमंरूपंसर्वंकार्यंप्रजापतेः॥पाटलवर्णः॥ १ ॥ ( पंचब्रह्मसुप्रजापतिब्रह्मवत् ४ नि० ) ॥ १ ॥

### ४७ अथ कल्पस्वरूपम्-

कल्पस्तुकुमुदाभस्स्याद्वायसास्योमहोदरः ॥ कुठारदंडाब्जहस्तोमेखलाकुंडलान्वितः ॥ १ ॥ कुमुदवर्णः ॥ १ ॥

### ४८ अथ कल्पाभिमानिब्रह्मध्यानम्-( शैवागमे )

चतुर्मुखंचतुर्बाहुंकमंडल्वक्षधारिणम् ॥ यज्ञसूत्रोत्तरीयंचजटामकुटसंयुतम्॥ १ ॥ सव्यहस्तेक्षमालांचदधंवामेकमंडलुम् ॥ स्रुवंदक्षिणहस्तेच

पुस्तकंवामहस्तके ॥ २ ॥ अंबुजासनआसीनंब्रह्माणंहसनोन्मुखम् ॥
॥ पाटलवर्णः ॥ ( त्रिमूर्त्यंतर्गतब्रह्मवत् ४ नि० ) ॥ १ ॥

४९ अथ व्याकरणस्वरूपम्–

सितंव्याकरणंज्ञेयंमयूराभसटोदरम् ॥ वीणाकरान्वितंदिव्यंदिव्यवस्त्रविभूषितम् ॥ १ ॥ शुभ्रवर्णम् ॥ १ ॥

५० अथ व्याकरणाभिमानिसरस्वतीध्यानम्–( हेमाद्रौ )

दोर्भिर्युक्ताचतुर्भिस्स्फटिकमणिमयीमक्षमालांदधानाहस्तेनैकेनपद्मंसितमपिचशुकंपुस्तकंचापरेण ॥ भासाकुंदेंदुशंखस्फटिकमणिनिभाभासमानासमानासाभेवाग्देवतेयंनिवसतुवदनेसर्वदासुप्रसन्ना ॥ १ ॥ श्वेतवर्णा ॥ १ ॥

५१ अथ निरुक्तस्वरूपम्–

इंदुवन्निर्मलंशांतंबकवक्त्रंकृशोदरम् ॥ पाशपंकजसंयुक्तंसाक्षसूत्रंसपुस्तकम् ॥ १ ॥ निरुक्तमितिनिर्णीतम् ॥ शुभ्रवर्णम् ॥ १ ॥

५२ अथ निरुक्ताधिदेवतावरुणस्वरूपम्–( मयूखे )

नागपाशधरोरत्नभूषणःपद्मिनीप्रियः ॥ वरुणोंबुपतिस्स्वर्णवर्णोमकरवाहनः ॥ १ ॥ कनकवर्णः ॥ ( दिक्पालान्तर्गतवरुणवत् ४ नि० ) ॥ १ ॥

५३ अथ छंदस्स्वरूपम्–

जपाकुसुमसंकाशंछंदोज्ञेयंविचक्षणैः ॥ चकोरास्यंजपापुष्पंशक्तिंबिभ्रच्छिखान्वितम् ॥ १ ॥ लोहकुंडलकोपेतंप्रवालकृतभूषणम् ॥ रक्तवर्णन् ॥ १ ॥

५४ अथ च्छंदोभिमान्यदितिदेवतास्वरूपम्–( शैवागमे )

अदितिःपीतवर्णाचस्रुक्स्रुवाक्षकमंडलून् ॥ दधानाशुभदामेस्याद्देवमातायशस्विनी ॥ १ ॥ पीतवर्णा ॥ ( पुनर्वस्वधिदेवतावत् ५ नि० ) ॥ १ ॥

५५ अथ ज्योतिषस्वरूपम्–

ज्योतिषंचबिडालास्यमिंद्रगोपनिभंशुभम् ॥ अक्षसूत्रंजपांबिभ्रद्धस्तयोर्दक्षवामयोः ॥ १ ॥ रक्तवर्णम् ॥ १ ॥

५६ अथ ज्योतिषाभिमानिहरिस्वरूपम्-( पांचरात्रे )

हरिःकनकवर्णःस्याच्छंखचक्रगदाब्जभृत् ॥ कनकवर्णः ॥ ( चतुर्विंशतिमूर्तिस्थहरिवत् २ नि० ) ॥ १ ॥

५७ अथमीमांसाशास्त्रस्वरूपम्-( नृसिंहप्रासादे )

सोमकीर्तिसमाभासंमीमांसाशास्त्रमुत्तमम् ॥ अक्षसूत्रंदधद्दक्षेसुधापूर्णं घटंपरे ॥ १ ॥ श्वेतवर्णम् ॥ १ ॥

५८ अथ मीमांसाधिदेवतासोमस्वरूपम्-( शैवागमे )

श्वेतःश्वेतांबरधरोदशाश्वःश्वेतभूषणः ॥ गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी ॥ १ ॥ श्वेतवर्णः ॥ ( नवग्रहस्थचंद्रवत् ५ नि० ) ॥ १ ॥

५९ अथ न्यायशास्त्रस्वरूपम्-( नृसिंहप्रासादे )

अतसीपुष्पसंकाशोन्यायोज्ञेयोविपश्चिता ॥ सिंहास्योदक्षिणेसूत्रंध्वजंवामकरेदधत् ॥ १ ॥ नीलवर्णम् ॥ १ ॥

६० अथ न्यायशास्त्राभिमानिवायुस्वरूपम्-( शैवागमे )

धावद्धरिणमारूढंद्विभुजंध्वजधारिणम् ॥ वरदानकरंधूम्रवर्णवायुमहं भजे ॥ १ ॥ धूम्रवर्णः ॥ ( पंचभूतस्थवायुवत् ४ नि० ) ॥ १ ॥

६१ अथ धर्मशास्त्रस्वरूपम्-( नृसिंहप्रासादे )

धर्मशास्त्रंसितंशांतंचारुवक्रंकुशासनम् ॥ मुक्ताजपाक्षधृक्दक्षेतुला हस्तंतुवामतः ॥ १ ॥ श्वेतवर्णम् ॥ १ ॥

६२ अथ धर्मशास्त्राभिमानिधर्मपुरुषस्वरूपम्-(हेमाद्रौदानकांडे)

चतुर्वक्त्रश्चतुर्बाहुश्चतुष्पाच्चसितांबरः ॥ सर्वाभरणवान्श्वेतोधर्मः कार्यो विजानता ॥ १ ॥ दक्षिणेचाक्षमालास्यात्तस्यवामेतुपुस्तकम् ॥ वराभययुतःकार्यः ॥ श्वेतवर्णः ॥ १ ॥

६३ अथ पुराणस्वरूपम्-( नृसिंहप्रासादे )

पुराणंचंपकाभासंशुकवक्त्रंचतुर्दिलम् ॥ अक्षसूत्राभयंज्ञेयंनानाभरणभूषितम् ॥ १ ॥ चंपकवर्णम् ॥ १ ॥

६४ अथ पुराणाधिदेवतास्वायंभुवमनुस्वरूपम्–(शैवागमेसिद्धा०)

आद्यःस्वायंभुवोब्रह्मपुत्रोमनुरितिस्मृतः ॥ श्वेतवर्णः॥(अन्यत्सर्व १४ मनुषुद्रष्टव्यम् ४ नि० ) ॥ १ ॥

६५ अथ इतिहासस्वरूपम्–( नृसिंहप्रासादे )

इतिहासःकुशाभासःसूकरास्योमहोदरः ॥ अक्षसूत्रंघटंबिभ्रत्पंकजावरणान्वितः ॥१॥ दूर्वाश्यामवर्णः ॥ १ ॥

६६ अथ इतिहासाधिदेवताप्रजापतिस्वरूपम्–( नृसिंहप्रासादे )

हंसयानेनकर्तव्योनचकार्यश्चतुर्मुखः ॥ सावित्रीतस्यकर्तव्यावामोत्संगगताशुभा ॥ १ ॥ ब्रह्मोक्तंपरमंरूपंसर्वंकार्यंप्रजापतेः ॥ पाटलवर्णः ॥ ( पंचब्रह्मस्थप्रजापतिब्रह्मवत् ४ नि० ) ॥ १ ॥

६७ अथ भरतशास्त्रस्वरूपम्–( नृसिंहप्रासादे )

नृत्तशास्त्रमिदंरम्यंमृगवक्त्रंजटाधरम् ॥ अक्षसूत्रंत्रिशूलंचबिभ्राणंचत्रिलोचनम्॥ १ ॥ श्वेतवर्णम् ॥ १ ॥

६८ अथ भरतशास्त्राभिमान्युमामहेश्वरस्वरूपम्–(कारणागमे)

धवलाभसुखासनदेवियुतंमृगशिशुटंकवराभयहस्तम् ॥ सुमुखीकृतमुत्पलद्वयवरदमुमयासहदेवसरूपमिदम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

६९ अथ पांचरात्रशास्त्रस्वरूपम्–( नृसिंहप्रासादे )

पांचरात्राभिधंशास्त्रंलावण्यवृषवाहनम् ॥ अक्षसूत्रंहलंबिभ्रद्वनमालाविभूषितम् ॥ १ ॥ श्वेतवर्णम् ॥ १ ॥

७० अथ पांचरात्रशास्त्राभिमानिसंकर्षणस्वरूपम्-(भट्टभास्करीये)

वासुदेवस्वरूपेणकार्यःसंकर्षणःप्रभुः ॥ सतुशुक्लवपुःकार्योनीलवासायदूत्तमः ॥ १ ॥ गदास्थानेचमुसलंचक्रस्थानेचलांगलम् ॥ दक्षोर्ध्वकरेशंखःदक्षाधःकरेमुसलं वामाधःकरेशार्ङ्गंवामोर्ध्वकरेलांगलम् ॥ १ ॥ श्वेतवर्णः ॥ व्यूहमूर्तिवत् २ नि० )॥ १ ॥

७१ अथ पाशुपतशास्त्रस्वरूपम्–( नृसिंहप्रासादे )

शास्त्रंपाशुपतंशुभ्रंव्यालवक्त्रंकृशोदरम् ॥ सूत्रपात्रधरंभीमंव्याघ्रचर्मांबरावृतम् ॥ १ ॥ श्वेतवर्णम् ॥ १ ॥

७२ अथ पाशुपतशास्त्राभिमानिरुद्रस्वरूपम्–( मयूखे )

पंचवक्त्रोवृषारूढःप्रतिवक्त्रंत्रिलोचनः ॥ वरदाभयशूलाक्षसूत्रधृक्परमेश्वरः ॥ १ ॥ श्वेतवर्णः ॥ ( सूर्यप्रत्यधिदेवतावत् ५ नि० ) ॥ १ ॥

७३ अथ पातंजलशास्त्रस्वरूपम्–( नृसिंहप्रासादे )

पातंजलाभिधंरक्तंसर्पवक्त्रंसुतेजसम् ॥ अक्षसूत्रंपाताकांचदधतंकुंडलान्वितम् ॥ १ ॥ रक्तवर्णम् ॥ १ ॥

७४ अथ पातंजलाधिदेवताऽनंतस्वरूपम्--( अनंतव्रतकल्पे )

नवाम्रपल्लवाभासंपिंगभ्रूश्मश्रुलोचनम् ॥ दक्षिणोर्ध्वकरेपद्मंशंखंतस्याप्यधःकरे ॥ १ ॥ चक्रमूर्ध्वकरेवामेगदांतस्याप्यधःकरे ॥ बिभ्रतंपुंडरीकाक्षंफणासप्तान्वितंभजे ॥ २ ॥ गोमूत्रवर्णः ॥ १ ॥

७५ अथ सांख्यशास्त्रस्वरूपम्--( नृसिंहप्रासादे )

सांख्यंतत्कापिलंबभ्रुवक्त्रमुज्ज्वलकुंडलम् ॥ जाप्यदंडधरंदीर्घनखलोमजटाधरम् ॥ १ ॥ कपिलवर्णम् ॥ १ ॥

७६ अथ सांख्यशास्त्राभिमानिकपिलस्वरूपम्--
( पांचरात्रेमंत्राध्याये )

प्रोद्यद्दिवाकरसमानतनुंसहस्रसूर्योरुदीधितिभिरातसमस्तलोकम् ॥ ज्ञानाभयांकितकरंकपिलंचदत्तंध्यायेदजादिसमितिंप्रतिबोधयंतम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७७ अथ चतुष्षष्टिकलानांनामानि–( शिवतत्त्वरत्नाकरे )

वेदास्सर्वेसवेदांगाइतिहासस्तथागमः ॥ न्यायशास्त्रंतथाकाव्यमलंकारश्चनाटकम् ॥ १ ॥ कवित्वंकामशास्त्रंचद्यूतनैपुण्यमित्यपि ॥ देशभाषापरिज्ञानंलिपिज्ञानंलिपिक्रिया ॥ २ ॥ तथासमस्तावधानंस्वरशास्त्रं-

चवाचकम् ॥ सामुद्रिकंचशकुनंपरीक्षारत्नसंततेः ॥ ३ ॥ तथास्वर्णपरीक्षाचतथातुरगलक्षणम् ॥ गजशास्त्रंमल्लविद्यापाककर्मततःपरम् ॥ ४ ॥ दशदोहलविद्याश्ववादोगंधकसंभवः ॥ धातुवादःखनीवादोरसवादस्ततःपरः ॥ ५ ॥ अग्निस्तंभोजलस्तंभोप्यसिस्तंभनमेवच ॥ वायुस्तंभस्तथावश्यंमोहनाकर्षणेतथा ॥ ६ ॥ उच्चाटनंचविद्वेषोमारणंकालवंचनम् ॥ वाणिज्यंपाशुपाल्यंचकृषिरासवकर्मच ॥ ७ ॥ लावुकायोधनप्रौढिर्मेषयुद्धेषुकौशलम् ॥ रतिकौशलमाखेटोप्यदृश्यकरणीतथा ॥८॥ चित्रलोहाश्ममृद्दारुवेणुचर्मांबरक्रियाः ॥ तथैवद्यूतकरणीचोरकर्मांजनंतथा ॥ ९ ॥ मंत्रौषध्योस्तथासिद्धिस्स्वरदृष्टयोस्तुवंचने ॥ जलप्लुवनवाक्सिद्धिघुटिकासिद्धयस्तथा ॥ १० ॥ तथैवपादुकासिद्धिरिंद्रजालंततःपरम् ॥ विद्यामहेंद्रजालेनचतुष्षष्टिर्मताइमाः ॥ ११ ॥ (श्रीविष्णुभागवते १० स्कं० पूर्वा० ४५ ध्या० ३६ श्लो० व्या० श्रीधरीये, शुक्रनीतौ ४ ध्याये च प्रकारान्तरेणापिदृश्यन्ते )

---

## अथ पंचभूतस्वरूपाणि–( शैवागमे )

### ७८ तत्रादौपृथ्वीदेवतास्वरूपम्–

ध्यायेन्महींशुक्लवर्णांदिव्याभरणभूषिताम् ॥ चतुर्भुजांसौम्यतनुंचंडांशुसदृशांबराम् ॥ १ ॥ अधश्चोर्ध्वंरत्नपात्रंकराभ्यांसस्यभाजनम् ॥ दक्षिणाभ्यांतथावामकराभ्यांसरसीरुहम् ॥ २ ॥ ओषधीपूरितंपात्रंदधानांसुमुखांबुजाम् ॥ दिङ्नागानांचतुर्णांचपृष्ठारूढांचतुर्भुजाम् ॥ ३ ॥ सर्वसस्यालयांशुभ्रांभूदेवींशरणंभजे ॥ शुभ्रवर्णा ॥ १ ॥

### ७९ अथ अब्देवतास्वरूपम्–

आदर्शतलसंकाशालोकसंजीविनीश्शुभाः ॥ माधुर्यगुणसंयुक्ताःसर्वालंकारशोभिताः ॥ १ ॥ स्त्रीरूपधारिणीःशुभ्राःभुजद्वयविराजिताः ॥ दधानाःपाशकलशौसदामकरवाहनाः ॥ २ ॥ मुक्ताभूषितसर्वांगीरपः संचिंतयेन्मुदा ॥ शुभ्रवर्णाः ॥ १ ॥

८० अथ तेजोदेवतास्वरूपम्-

अग्निंसुवर्णवर्णांगंसप्तार्चिषमनामयम् ॥ मेषारूढंसप्तहस्तंस्वाहादेवी-समन्वितम् ॥ १ ॥ शक्त्याद्यायुधसंपन्नहस्तंध्यायेद्विभावसुम् ॥ कनकवर्णः ॥ १ ॥

८१ अथ वायुदेवतास्वरूपम्-

धावद्धरिणमारूढंद्विभुजंध्वजधारिणम् ॥ वरदानकरंधूम्रवर्णंवायुमहं-भजे ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

८२ अथ आकाशदेवतास्वरूपम्-

ध्यायामिगगनंनीलंनीलांबरधरंविभुम् ॥ चंद्रार्कहस्तंद्विभुजंसर्वाभर-णभूषितम् ॥ १ ॥ नीलवर्णम् ॥ १ ॥

---

अथ दशदिक्स्वरूपम्-( नृसिंहप्रासादे )

८३ तत्रादौपूर्वदिक्स्वरूपम्-

पूर्वागजगताबालारक्तवर्णाहिदिग्भवेत् ॥ रक्तवर्णा ॥ १ ॥

८४ अथ आग्नेयदिक्स्वरूपम्-

कारंडगाबृहत्कायापद्माभापूर्वदक्षिणा ॥ पद्मवर्णा ॥ १ ॥

८५ अथ दक्षिणदिक्स्वरूपम्-

गृध्रस्थादक्षिणापीतागृध्रास्याप्राप्तयौवना ॥ पीतवर्णा ॥ १ ॥

८६ अथ निर्ऋतिदिक्स्वरूपम्-

उष्ट्रगाकृष्णपीताचतरुणीयाम्यपश्चिमा ॥ हरिद्वर्णा ॥ १ ॥

८७ अथ पश्चिमदिक्स्वरूपम्-

युवतिःद्विभुजाकृष्णापश्चिमातुरगस्थिता ॥ कृष्णवर्णा ॥ १ ॥

८८ अथ वायव्यदिक्स्वरूपम्-

आसन्नपतिकानीलाधनुर्वादनतत्परा ॥ नीलवर्णा ॥ १ ॥

८९ अथ उत्तरदिक्स्वरूपम्-

श्वेताननातथारक्ताक्रुद्धाभवतिचोत्तरा ॥ रक्तवर्णा ॥ १ ॥

९० अथ ईशानदिक्स्वरूपम्–

अतिवृद्धावृषस्थाचशुक्लापूर्वोत्तराभवेत् ॥ श्वेतवर्णा ॥ १ ॥

९१ अथ ऊर्ध्वदिक्स्वरूपम्–

ऊर्ध्वागगनसन्निभा ॥ नीलवर्णा ॥ १ ॥

९२ अथ अधोदिक्स्वरूपम्–

अधस्थापृथिवीतुल्या ॥ श्वेतवर्णा ॥ १ ॥

---

९३ अथ अष्टनागस्वरूपाणि--( नृसिंहप्रासादे )

अनंतोवासुकिश्चैवतक्षककर्कोटपद्मकाः ॥ महापद्मश्चशंखश्चकुलिकोष्टौकुलानिहि ॥ १ ॥ अनंतकुलिकौविप्रौश्वेतवर्णावुदाहृतौ ॥ प्रत्येकंतुसहस्राष्टफणैस्तौसमलंकृतौ ॥ २ ॥ वासुकिश्शंखपालश्चक्षत्रियौरक्तवर्णकौ ॥ प्रत्येकंतुफणासप्तशतसंख्याविराजितौ ॥ ३ ॥ तक्षकश्चमहापद्मोवैश्यजातावुदाहृतौ ॥ पीतवर्णौफणैःपंचशततुंगोत्तमांगकौ ॥ ४ ॥ पद्मककर्कोटकौशूद्रौनीलवर्णावुदाहृतौ ॥ फणात्रिशतकौज्ञेयौविख्याताविति-तत्त्वतः ॥ ५ ॥ ८ ॥

९४ अथ अष्टदिग्गजस्वरूपाणि--( मयूखेआग्नेयपुराणेच )

शुभ्राभश्चचतुर्दंतःश्रीमानैरावतोगजः ॥ पुष्पदंतोबृहच्छचामोषड्दंतःपुष्पदंतवान् ॥ १ ॥ सामान्यगजरूपेणशेषादिक्करिणःस्मृताः ॥–॥ (आग्नेयपुराणेनामानि–॥ ऐरावतःपुंडरीकोवामनःकुमुदोंजनः ॥ पुष्पदंतस्सार्वभौमस्सुप्रतीकोष्टदिग्गजाः ॥ १ ॥ ८ ॥

९५ अथ अष्टदिग्गजपत्नीनांनामानि--( आग्नेयपुराणे )

करिण्योभ्रमुःकपिलापिंगलानुपमाक्रमात् ॥ ताम्रपर्णीसुदंतीस्यादंजनाचांजनावती ॥ १ ॥ ८ ॥

---

अथ अष्टदिक्पालानांध्यानम्

९६ तत्रादौइंद्रध्यानम्–( भट्टभास्करीये )

इंद्रंसहस्रनेत्रंचपीतवर्णंचतुर्भुजम् ॥ अभयंदक्षिणेहस्तेवरदंवामहस्तके ॥ १ ॥ कुलिशंदक्षिणेहस्तेह्यंकुशंतुतथेतरे ॥ रत्नकौ-

स्तुभमणिक्यदिव्याभरणभूषितम् ॥ २ ॥ कुंडलंयज्ञसूत्रंचदधानंदि-
व्यतेजसम् ॥ ऐरावतगजारूढंशचीकांतंनमाम्यहम् ॥ ३ ॥ हेमवर्णः ॥ १ ॥

९७ अथ अग्निध्यानम्-( सिंगाभट्टीयेपूर्वप्रयोगे )

सप्तहस्तश्चतुश्शृंगस्सप्तजिह्वोद्विशीर्षकः ॥ त्रिपात्प्रसन्नवदनस्सु-
खासीनश्शुचिस्मितः ॥ १ ॥ स्वाहांतुदक्षिणेपार्श्वेदेवींवामे स्वधांतथा ॥
बिभ्रद्दक्षिणहस्तेतुशक्तिमन्नंस्रुचंस्रुवम् ॥ २ ॥ तोमरंव्यजनंवामेघृतपा-
त्रंचधारयन् ॥ मेषारूढंजटाबद्धंगोरवर्णंमहोदरम् ॥ ३ ॥ धूमध्वजंरो-
हिताक्षंसप्तार्चिषमनामयम् ॥ आत्माभिमुखमासीनमेवंध्यायेद्धुताश-
नम् ॥ ४ ॥ रक्तवर्णः ॥ १ ॥

९८ अथ यमध्यानम्-( शैवागमेनृसिंहप्रासादेच )

करालमहिषारूढंकालदंडधरंपुनः ॥ श्यामवर्णपाशहस्तंकृतांतंप्रणमा-
म्यहम् ॥ १ ॥ इलाप्रियोदंडधरोयमोमहिषवाहनः ॥ रक्तवर्णोहिलोका-
नांस्वस्वकर्मफलप्रदः ॥ २ ॥ श्यामवर्णः ॥ १ ॥

९९ अथ निर्ऋतिध्यानम्-( मयूखेदानखंडे )

खड्गचर्मधरोनीलोनिर्ऋतिर्नरवाहनः ॥ ऊर्ध्वकेशोविरूपाक्षःकरालः
कालिकाप्रियः ॥ १ ॥ नीलवर्णः ॥ १ ॥

१०० अथ वरुणध्यानम्-( मयूखेभट्टभास्करीये )

नागपाशधरोरक्तभूषणःपद्मिनीप्रियः ॥ वरुणोंबुपतिःस्वर्णवर्णोमकर-
वाहनः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

१०१ अथ वायुध्यानम्-( मयूखेभट्टभास्करीये )

प्राणबंधुर्हिजगतोवायुःकृष्णमृगासनः ॥ हेमदंडध्वजःश्यामोवर्णतो
मोहिनीप्रियः ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१०२ अथ कुबेरध्यानम्-( मयूखेभट्टभास्करीये )

अश्वारूढःकुंतपाणिःकुबेरश्चित्रिणीप्रियः ॥ निधीश्वरःस्वर्णवर्णोध-
नदोरूपवान्प्रभुः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

१०३ अथ ईशानध्यानम्-( मयूखेदानखंडे )

शुद्धस्फटिकसंकाशोगौरीशोवृषवाहनः ॥ वरदाभयशूलाक्षसूत्रधृत्परमेश्वरः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

---

अथ अष्टवसूनांध्यानम्-( शैवागमे )

( वर्णस्तुकारणागमे )

१०४ तत्रादौ ध्रुववसुस्वरूपम्-

अक्षमालाधरंब्रह्मसूत्रोज्ज्वलभुजांतरम् ॥ ध्रुवंध्रुवाययशसेचिंतयामिसदामुदा ॥ १ ॥ पीतवर्णः ॥ १ ॥

१०५ अथ अध्वरवसुस्वरूपम्-

स्रुक्स्रुवांचत्करंव्याघ्रचर्मांबरधरंशुचिम् ॥ अग्निशुश्रूषणरतमध्वरं प्रणमेन्वहम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१०६ अथ सोमवसुस्वरूपम्-

जगदानंदजनकममृतस्राविचक्षुषम् ॥ रत्नसिंहासनगतं सोमंहृदिविभावये ॥ १ ॥ सितवर्णः ॥ १ ॥

१०७ अथ अब्वसुस्वरूपम्-

सर्वपापविनाशिन्यःसामुद्राहेमपूरिताः ॥ आपःशुभप्रदास्संतुमत्स्यवाहनसंगताः ॥ १ ॥ श्वेतवर्णाः ॥ १ ॥

१०८ अथ अनिलवसुस्वरूपम्-

शुभायमेसदाभूयादनिलोलोकपावनः ॥ समस्तदेवनिवहवंद्यमानपदांबुजः ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

१०९ अथ अनलवसुस्वरूपम्-

अजाधिरूढंशुभदंस्वाहादेवीसमन्वितम् ॥ किरीटोज्ज्वलमूर्धानमनलंभावयाम्यहम् ॥ १ ॥ लोहितवर्णः ॥ १ ॥

११० अथ प्रत्यूषवसुस्वरूपम्-

श्वेतवस्त्रधरंश्वेतचंदनालिप्तदेहकम् ॥ प्रत्यूषंचिंतयेभूयःप्रत्यूहोन्मूलकारणम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १११ अथ प्रभासवसुस्वरूपम्-

प्रभासंपूर्णवपुषंप्रभासंभावयाम्यहम् ॥ अक्षसूत्रोज्ज्वलकरंव्याघ्राजिननिवासिनम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## अथ अष्टवसूनांवर्णलक्षणानि-( कारणागमे )

ध्रुवःपीतोध्वरःश्यामःसितःसोमोनिलोहरित् ॥ आपःसिताइतिप्रोक्ताह्यनलोलोहितःस्मृतः ॥ १ ॥ प्रत्यूषःश्वेतभास्तद्वत्प्रभासःश्वेतवर्णकः ॥ प्रसन्नवदनाःसौम्यावरदाःशक्तिपाणयः ॥ २ ॥ पद्मासनस्थाद्विभुजाः कर्तव्यावसवस्सदा ॥ ८ ॥

---

## अथ सप्तमरुतांस्वरूपाणि-( शैवागमे )

( वर्णस्तुपाद्मेकारणागमेच )

## ११२ तत्रादौ आवहमरुत्स्वरूपम्-

आवहोमरुतांश्रेष्ठोसुखायास्तुसदामम ॥ आसमंतात्संचरिष्णुःसुतीव्रगरुडस्थितः ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

## ११३ अथ विवहमरुत्स्वरूपम्-

जगतांभंजनंकुर्वन्विपरीतप्रधावनैः ॥ नभोमध्यगतोवायुःविवहोभूतिदोस्तुमे ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ११४ अथ उद्वहमरुत्स्वरूपम्-

उद्वेलयन्पयोराशीन्गिरीनुन्मूलयंस्तरून् ॥ जगतींक्षोभयन्नित्यमुद्वहःसेव्यतेमया ॥ १ ॥ पीतवर्णः ॥ १ ॥

## ११५ अथ संवहमरुत्स्वरूपम्-

जगदानंदजनकोगंधहारीशनैश्शनैः ॥ शीतांबुकणसंवाहःसंवहःसुखदोस्तुमे ॥ १ ॥ श्यामवर्णः ॥ १ ॥

## ११६ अथ निवहमरुत्स्वरूपम्-

प्रचंडगतिभिर्धूतप्रपलायितपर्वतम् ॥ निवहंपवनश्रेष्ठंशिरसाप्रणमाम्यहम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ११७ अथ अनुवहमरुत्स्वरूपम्-

प्रातिकूल्येनधावंतंभ्रामयंतंजगत्त्रयम् ॥ मरुतांप्रवहंनित्यमाश्रयेनुवहाभिधम् ॥ १ ॥ असितवर्णः ॥ १ ॥

## ११८ अथ व्यवहमरुत्स्वरूपम्-

प्राणापानादिरूपेणजगतींव्याप्यजीवयन् ॥ सेव्यतांप्राणिनिवहैःमरुद्व्यवहसंज्ञकः ॥ १ ॥ अरुणवर्णः ॥ १ ॥

---

## ११९ अथ सप्त मरुतांनामानि-( शैवागमे )

आवहोविवहश्चैवाप्युद्वहस्संवहस्तथा ॥ निवहोनुवहश्चैवव्यवहश्चेति नामभिः ॥ १ ॥ सप्तैतेमरुतःप्रोक्ताःसप्तसप्तप्रभेदिनः ॥-॥ एतेषांवर्णाः ( पाद्मेकारणागमेच ) धूम्रोरक्तस्तथापीतश्श्यामःश्वेतोसितोरुणः ॥ वर्णोयंमरुतामुक्तस्सप्तानामानुपूर्व्यशः ॥ १ ॥ ७ ॥

## १२० अथ एकोनपंचाशन्मरुन्नामानि-( कारणागमे )

प्राणः[१] । अपानः[२] । व्यानः[३] । उदानः[४] । समानः । नागः[६] । कृकरः[७] । कूर्मः[८] । देवदत्तः[९] । धनंजयः[१०] । प्रवहः[११] । विवहः[१२] । शंभुः[१३] । संवहः[१४] । परिवहः[१५] । उद्वहः[१६] । आवहः[१७] । शंकुः[१८] । कालः[१९] । प्रावहः[२०] । शासः[२१] । अनिलः[२२] । अनलः[२३] । प्रतिभः[२४] । कुमुदः[२५] । कांतः[२६] । शिबिः[२७] । श्वेतः[२८] । रक्तः[२९] । कृष्णः[३०] । जितः[३१] । अजितः[३२] । जंझाघातः[३३] । क्रतुः[३४] । सिद्धः[३५] । पिंगः[३६] । शुचिः[३७] । सौम्यः[३८] । काम्यः[३९] । मारुतः[४०] । हनुः[४१] । कंपनः[४२] । मंडूकः[४३] । भीमः[४४] । कपिः[४५] । संवर्तकः[४६] । जडः[४७] । अतिजडः[४८] । संततः[४९] ॥ ४९ ॥

## अथ एतेषांस्वरूपाणि-( मयूखे )

भ्रातरःपुरुहूतस्यमरुतःसूर्यवर्चसः ॥ किरीटहारकेयूरकटकादिविभूषिताः ॥ १ ॥ खड्गचर्मधरानित्यंशक्रस्यानुचरास्सदा ॥ एतेषांवर्णरूपाणिमुख्यानांमरुतांयथा ॥ २ ॥ ४९ ॥

---

## १२१ अथ दशानांविश्वेषांदेवानांस्वरूपम्-( भट्टभास्करीये )

विश्वेदेवाश्चसर्वेपिदक्षिणेबाणपाणयः ॥ कर्तव्यावामपाणौतुशरास-

नधरास्सिताः॥ १ ॥-॥ एतेषांनामानि ॥ क्रतुर्दक्षोवसुस्सत्योकालकामौ-धुरिलोचनौ॥ पुरूरवार्द्रवौचेतिविश्वेदेवादशस्मृताः॥ १ ॥ श्वेतवर्णाः॥ १०

---

## अथ सप्तसमुद्रस्वरूपाणि-( नृसिंहप्रासादे )

### १२२ तत्र लवणसमुद्रस्वरूपम्-

लवणोदःप्रकर्तव्योद्विभुजोरत्नभूषणः ॥ दक्षेक्षमालिकांवामेपात्रंच-बहुरत्नभृत्॥ १ ॥सोत्तरीयोपवीती चपाटलाभःसुखासनः ॥ पाटलवर्णः १

### १२३ अथ इक्षुसमुद्रस्वरूपम्-

समुद्रमिक्षुकांडंचगोमूत्रसदृशच्छविम् ॥ घटंदंडंचबिभ्राणंदेवंहृदिवि-भावये ॥ १ ॥ गोमूत्रवर्णः ॥ १ ॥

### १२४ अथ सुरासमुद्रस्वरूपम्-

सुरोदंगंडकारुस्थंगोमेदसदृशच्छविम् ॥ मुद्गरंकुंडिकांचैवबिभ्राणं-हृदिभावये ॥ १ ॥ गोमेदवर्णः ॥ १ ॥

### १२५ अथ सर्पिस्समुद्रस्वरूपम्-

घृतोदःकपिलोज्ञेयःकुलीरस्थोजटाधरः ॥ कशेरुपूरितंपात्रंघटंबिभ्र-द्विदूरथः ॥ १ ॥ कपिलवर्णः ॥ १ ॥

### १२६ अथ दधिसमुद्रस्वरूपम्-

दधिमंडोदआस्तेवैशुभ्रोयंवारिदासनः ॥ दंडंशक्तिंचबिभ्राणोद्विभुजो-सौजटायुतः ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

### १२७ अथ क्षीरसमुद्रस्वरूपम्-

क्षीरोदश्श्वेतवर्णश्चद्विभुजोरत्नकुंडलः ॥ मकरस्थोंबुजंदक्षेवामेकल-शमादधत् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### १२८ अथ शुद्धोदकसमुद्रस्वरूपम्-

स्वादूदोमौक्तिकाभासोद्विभुजोरक्तकुंडलः ॥ मकरस्थोंबुजंदक्षेवामे-कलशमादधत् ॥ १ ॥ मौक्तिकवर्णः ॥ १ ॥ ७ ॥

---

## १२९ अथ अष्टनदीस्वरूपाणि–( शैवागमे )

दक्षिणेतुकरेकुंभंवामेवरुणपाशकम् ॥ दधानाद्विभुजाःपूज्यानद्यो मकरवाहनाः ॥ १ ॥ ८ ॥

## १३० तत्रादौगंगानदीस्वरूपम्–

त्रिविक्रमपदोद्भूतांभगीरथपथानुगाम् ॥ भागीरथींनमस्यामिगंगांत्रिपथगांनदीम् ॥ १ ॥ शुभ्रवर्णा ॥ १ ॥–॥ प्रकारान्तरम्–( धर्माब्धिसारेपशपापहराकल्पे )॥ सितमकरनिषण्णांशुभ्रवर्णांत्रिणेत्रांकरधृतकलशोद्यत्सोत्पलामत्यभीष्टाम् ॥ विधिहरिहररूपांसेंदुकोटीरजुष्टांकलितसितदुकूलांजाह्नवींतांनमामि ॥ १ ॥ श्वेतवर्णा ॥ १ ॥–॥ प्रकारांतरम्–( काशीखंडेपूर्वार्धेसप्तविंशाध्याये ) ॥ चतुर्भुजांत्रिणेत्रांचनदीनदनिषेविताम् ॥ लावण्यामृतनिष्यंदसंश्लिषद्गात्रयष्टिकाम् ॥ १ ॥ पूर्णकुंभसितांभोजवरदाभयसत्कराम् ॥ एवंध्यायेत्सुसौम्यांचचंद्रायुतसमप्रभाम् ॥ २ ॥ चामरैर्वीज्यमानांचश्वेतच्छत्रोपशोभिताम् ॥ सुधाप्लावितभूपृष्ठांदिव्यगंधानुलेपनाम् ॥ ३ ॥ त्रैलोक्यपूजितपदांदेवर्षिभिरभिष्टुताम् ॥ श्वेतवर्णा ॥ १ ॥

## १३१ अथ यमुनानदीस्वरूपम्–

कालिंदींशिरसानौमिनीलांरामहलाश्रिताम् ॥ कृष्णपादरजःपूतांयमुनांहृदिभावयेत् ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

## १३२ अथ गोदावरीनदीस्वरूपम्–

गोदांमहानदींवंदेपाटलामृषिसेविताम् ॥ पावनींसर्वलोकस्यस्वर्गद्वारस्यकुंचिकाम् ॥ १ ॥ पाटलवर्णा ॥ १ ॥

## १३३ अथ कृष्णानदीस्वरूपम्–

कृष्णवेणिनमस्तुभ्यंकृष्णवर्णेसुलक्षणे ॥ कृष्णांगरजसाधूतकल्मषेतेनमोनमः ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

### १३४ अथ रेवानदीस्वरूपम्-

विंध्यपर्वतसंभूतांरेवांरैवतसेविताम् ॥ कल्याणजननींलोकेनमामिकनकप्रभाम् ॥ १ ॥ कनकवर्णा ॥ १ ॥

### १३५ अथ तापीनदीस्वरूपम्-

तापींतपस्विसंसेव्यांरक्तांपापौघतापिनीम् ॥ अंतस्तापप्रशमनींप्रणमामिमहानदीम् ॥ १ ॥ रक्तवर्णा ॥ १ ॥

### १३६ अथ वेणीनदीस्वरूपम्-

भवसंतापसंदोहशांतिकृच्छीतलोदकाम् ॥ वेणींप्रवालसंकाशामुपासेसुखसिद्धये ॥ १ ॥ रक्तवर्णा ॥ १ ॥

### १३७ अथ सरस्वतीनदीस्वरूपम्-

प्रवेणींसलिलावर्तांमुक्ताभांगूढवाहिनीम् ॥ नमामिमंगलानंदसंधात्रींबहुधामुदा ॥ १ ॥ मौक्तिकवर्णा ॥ १ ॥

---

### १३८ अथ पर्जन्यस्वरूपम्-( शैवागमे )

पर्जन्यनामाविज्ञेयोगजवक्त्रत्रयान्वितः ॥ योधत्तेसर्वजीवानांवरंजीवंचशोषकम् ॥ १ ॥ कुठारंचपयोजंचचिंतारत्नंमहाशुचि ॥ पाशंचकंकिसलयंकुंडिकांदशभिःकरैः ॥ २ ॥ श्वेतवर्णा ॥ १ ॥

### १३९ अथ अश्विनीदेवतयोःस्वरूपम्-( शैवागमे)

उभौचसोपवीतौतौचूडामकुटधारिणौ ॥ फुल्लरक्तोत्पलाक्षौचपीतस्रग्वस्त्रवर्णकौ ॥ १ ॥ नासत्यदस्रनामानावश्विनौभिषजौस्मृतौ ॥ श्वेतवर्णौ ॥ २ ॥—॥ प्रकारान्तरम्—( वैद्यशास्त्रेआयुर्वेदतंत्रे ) ॥ अश्विनोराकृतीवक्ष्येसर्वलक्षणमंडिते ॥ पादादिकंठपर्यंतमश्वरूपंप्रकल्पयेत् ॥ ॥ १ ॥ वक्त्रेनराकृतीप्राक्तेद्विनेत्रेमकुटान्विते ॥ श्रोत्रद्वयौस्थूलकंठौचतुर्बाहुसमन्वितौ ॥ २ ॥ अश्वपादद्वयोपेतौसव्येचाभयमोषधिम् ॥ करंडंचामृतघटंवामहस्तेचबिभ्रतः ॥ ३ ॥ नवतालेनकर्तव्यावश्विनौभिषजौस्मृतौ ॥ देवानांदस्रनासत्यौनाम्नोक्तौश्वेतरूपिणौ ॥ ४ ॥ श्वेतवर्णौ ॥ २ ॥

## १४० अथ कामधेनुस्वरूपम्–( नृसिंहप्रासादे )

सुरभिर्गोमुखीगौरीस्त्रीरूपासर्वभूषणा ॥ घासमुष्टिंतथाकुंडींबिभ्राणा-भूतपुष्टिदा ॥ १ ॥ गौरवर्णा ॥ १ ॥–॥ प्रकारान्तरम् ( महाभारते आदिपर्वणि १७६ अध्याये ) ॥ षडुन्नतांसुपार्श्वोरुंत्रिपृथुंपंचसंवृताम् ॥ मण्डूकनेत्रांसन्नासांकामधेनुमनिन्दिताम् ॥ १ ॥ सुवालधिंशङ्कुकर्णां-चारुशृङ्गांमनोरमाम् ॥अत्यायतशिरोग्रीवांविस्मितास्याभिवीक्षिताम् ॥ ॥ २ ॥ गौरवर्णा ॥ १ ॥

## १४१ अथ द्वादशायुधानांस्वरूपम्–( शैवागमे )

वज्रंशक्तिश्चदंडश्चखड्गंपाशस्तथांकुशम् ॥ गदात्रिशूलचक्रेचपद्मंचे-तिदशायुधम् ॥ १ ॥ द्विभुजाश्चद्विनेत्राश्चसर्वाभरणभूषिताः ॥ कृतांज-लिपुटोपेताःकरंडमुकुटान्विताः ॥ २ ॥ तत्तद्वक्त्रप्रमाणेनत्वस्त्रमूर्तिसम-न्विताः ॥ नानावर्णमहाविद्युन्नीलजीमूतवर्णकम् ॥ ३ ॥ पावकंपद्मरा-गंचतुषारंचेंद्रनीलकम् ॥ शारदाभ्रंचरक्तंचवज्रादीनांचवर्णकम् ॥ ४ ॥ स्त्रियंशक्तिंगदांविद्यात्पाशपद्मेनपुंसके ॥ शेषाःपुंस्त्वेनविख्याताःकीर्तिता-स्त्वस्त्रमूर्तयः ॥५॥–॥ ( नृसिंहप्रासादे )तु–शरःस्यात्पुरुषोदिव्योरक्तां-गोदिव्यलोचनः ॥ धनुःस्त्रीरक्तपद्माभामूर्ध्निभूषितचापभृत् ॥ १ ॥ एवमस्त्राणिमूर्तानिजानीयात्परमेश्वरि ॥ उक्तानांचैवसर्वेषांमूर्ध्निस्वायु-धलांछनम् ॥ २ ॥ भुजौद्वौतुप्रकर्तव्यौस्कंधलग्नतदायुधौ ॥ २ ॥

---

## अथ शक्तित्रयस्वरूपाणि–( कारणागमे )

## १४२ तत्रादौप्रभुशक्तिस्वरूपम्–

प्रभुशक्तिःप्रभावाख्यादेवीक्षात्रगुणानुगा ॥ स्त्रीरूपिणीपाटलाभाश्वे-ताश्ववरवाहना ॥ १ ॥ करंडमकुटेचक्रशक्तिखड्ग वरांकुशान् ॥ दक्षे-वामेशंखघंटाखेटाभयगदास्तथा ॥ २ ॥ दशभिर्बिभ्रतीहस्तैश्शत्रुविध्वं-सकारिणी॥कौसुंभवस्त्रसंवीतापूजिताचेष्टदानृणाम्॥ ३ ॥पाटलवर्णा॥ १

## १४३ अथ मंत्रशक्तिस्वरूपम्-

मंत्रशक्तिस्स्वर्णमुखीकुंकुमाभाकिरीटिनी ॥ खड्गचापौभृशुंडींचशूलंशक्तिंवरंहलम् ॥ १ ॥ आवापबाणदंडासिपुत्रीपाशाभयांकुशान् ॥ चतुर्दशभुजैर्द्धत्तेदक्षेवामेपृथक्पृथक् ॥ २ ॥ मत्तेभवाहनाहारिकवचामणिमेखला ॥ रक्तवर्णा ॥ १ ॥

## १४४ अथ उत्साहशक्तिस्वरूपम्-

शक्तिरुत्साहरूपातुसिंदूरवदनाशुभा ॥ जांबूनदरुचिर्नृत्यन्मयूरवरवाहना ॥ १ ॥ षड्भिर्भुजैश्शक्तिचापवरपाशशराभयान् ॥ दधानाक्रमशश्चित्रवसनामकुटोज्ज्वला ॥ २ ॥ उपायैर्वशयेच्छत्रून्देवीचेयंशुचिस्मिता ॥ रक्तवर्णा ॥ १ ॥

---

## अथ उपायचतुष्टयदेवतास्वरूपम्-( कारणागम )

## १४५ तत्रादौसामोपायदेवतालक्षणम्-

गजारूढास्मितमुखीकनकाभासितांशुका ॥ षड्भिर्भुजैश्चक्रशंखवराभयधनुश्शरान् ॥ १ ॥ दधतीसार्चितानित्यंवशयेच्छत्रुमंडलम् ॥ कनकवर्णा ॥ १ ॥

## १४६ अथ दानोपायस्वरूपम्-

दानोपायाख्यदेवस्तुशिबिकावरवाहनः ॥ संध्यारुणोष्टभिर्हस्तैश्चक्रंपद्मंनिधिंवरम् ॥ १ ॥ धनुर्दक्षेतरेशंखंदक्षेकुंदशराभयौ ॥ दधानः पीतवसनःकिरीटांगदशोभितः ॥ २ ॥ पूजितश्चशुभंदद्याद्वशयेद्रिपुमंडलम् ॥ रक्तवर्णः ॥ १ ॥

## १४७ अथ भेदोपायस्वरूपम्-

भेदोपायाख्यदेवस्तुतरक्षुवरवाहनः ॥ मेघवर्णःकरालास्यःक्रूरदंष्ट्रश्चदिग्भुजैः ॥ १ ॥ चक्रशूलधनुःपाशवरान्दक्षेथवामके ॥ शंखंदंडंशरंखट्वाभयौबिभ्रदरीन्वशे ॥ २ ॥ कलयेन्मर्दयेद्वापिकिरीटकवचोज्ज्वलः ॥ मेघवर्णः ॥ १ ॥

### १४८ अथ दंडोपायस्वरूपम्–

दंडोपायोरक्तवर्णःसिंहास्यश्शववाहनः ॥ चक्रशूलगदादंडखड्गघं-टावरंधनुः ॥ १ ॥ कशांकुशौशरंवह्निंखेटपाशाभयंदरम् ॥ दधानो-द्व्यष्टभिर्हस्तैर्नीलशुक्लचितांशुकः ॥ २ ॥ पूजितोमर्दयेच्छत्रून्रणेरण-विमर्दकः ॥ रक्तवर्णः ॥ १ ॥

---

अथ चतुर्दशमनूनांस्वरूपाणि–( शैवागमे सिद्धांतशेखरे )

### १४९ तत्रादौस्वायंभवमनुध्यानम्–

आद्यस्स्वायंभवोब्रह्मपुत्रोमनुरितिस्मृतः ॥ शतरूपातस्यभार्याक्षत्र-धर्ममनुव्रतः ॥ १ ॥ प्रियव्रतोत्तानपादौतस्यकन्यात्रयंतथा ॥ आकू-तिर्देवहूतिश्चप्रसूतिःश्वेतवर्णवान् ॥ २ ॥ क्षात्रयोग्यास्त्रधारीतुसर्वेषां जगतांपतिः ॥ यत्रधर्माश्चविविधाःचतुर्वर्ण्यश्रिताश्शुभाः ॥ ३ ॥ श्वेतवर्णः ॥ १ ॥

### १५० अथ स्वारोचिषमनुध्यानम्–

स्वारोचिषोद्वितीयस्तुमनुरग्नेस्सुतोभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्र-मुखास्तस्यचात्मजाः ॥ १ ॥ ऊर्जातुतस्यभार्यासीद्ब्राह्मंधर्ममनुव्रतः ॥ तप्तकार्तस्वराभासस्सर्वेषांजगतांपतिः ॥ २ ॥ हेमवर्णः ॥ १ ॥

### १५१ अथ उत्तममनुध्यानम्–

तृतीयउत्तमोनामप्रियव्रतसुतोमनुः ॥ भार्योषासृंजयजयहोत्राद्यास्त-स्यचात्मजाः ॥ १ ॥ रक्तवर्णोस्त्रधारीतुक्षात्रंधर्ममनुव्रतः ॥ चतुर्णामेक सप्तत्यायुगानांपतिरीश्वरः ॥ २ ॥ रक्तवर्णः ॥ १ ॥

### १५२ अथ तामसमनुध्यानम्–

चतुर्थउत्तमभ्रातामनुर्नाम्नाचतामसः ॥ ख्यातिःपत्नीकेतुमंतइत्याद्या-स्तत्सुतामताः ॥ १ ॥ प्रियव्रतसुतस्त्वेषक्षात्रंधर्ममनुव्रतः ॥ हरिद्वर्णोस्त्र धारीतुसर्वेषांजगतांप्रभुः ॥ २ ॥ हरिद्वर्णः ॥ १ ॥

## १६३ अथ रैवतमनुध्यानम्-

पंचमोरैवतोनामपूर्वयोरनुजस्स्मृतः ॥ पत्नीविंध्यावलिःपुत्रादत्तका-र्जुनपूर्वकाः ॥ १ ॥ क्षत्रप्रियव्रतसुतोवर्णश्यामंसमाश्रितः ॥ सदाखड्गा-द्यस्त्रधारीसर्वेषांजगतांप्रभुः ॥ २ ॥ श्यामवर्णः ॥ १ ॥

## १६४ अथ चाक्षुषमनुध्यानम्-

षष्ठस्तुचक्षुषः पुत्रश्चाक्षुषोनामविश्रुतः ॥ आदित्यपौत्रस्तत्पत्नीकांति स्तस्यात्मजाञ्छृणु ॥ १ ॥ तथापुरुश्चसुद्युम्नप्रमुखास्ताम्रवर्णवान् ॥ ब्राह्मव्रतधरोदेवःसर्वेषांजगतांप्रभुः ॥ २ ॥ रक्तवर्णः ॥ १ ॥

## १६५ अथ वैवस्वतमनुध्यानम्-

वैवस्वतोमनुर्नामपुत्रस्सूर्यस्यसत्तमः ॥ इक्ष्वाकुप्रमुखाःपुत्राःपत्नीरि-ष्टिरितीरिता ॥ १ ॥ क्षात्रंब्राह्मंश्रितोधर्मंस्मृतिकर्ताभुवःपतिः ॥ सौवर्णवर्णःपद्माक्षोजगतांप्रभुरीरितः ॥ २ ॥ स्वर्णवर्णः ॥ १ ॥

## १६६ अथ सूर्यसावर्णिमनुध्यानम्-

अष्टमःसूर्यपुत्रस्तुसावर्णिर्भवितामनुः ॥ निर्मोहविराजस्काद्याःपुत्राः पत्नीतुदेविका ॥ १ ॥ क्षत्रियोलोकविख्यातोवर्णंश्यामंसमाश्रितः ॥ चतुर्णामेकसप्तत्यायुगानांप्रभुरीरितः ॥ २ ॥ श्यामवर्णः ॥ १ ॥

## १६७ अथ दक्षसावर्णिमनुध्यानम्-

नवमोदक्षसावर्णिर्मनुर्वरुणसंभवः ॥ पत्नीपराधृष्टकेतुरित्याद्यास्तत्सु-तास्स्मृताः ॥ १ ॥ क्षत्रियोलोकविख्यातोवर्णंश्यामंसमाश्रितः ॥ चतुर्णा-मेकसप्तत्यायुगानांप्रभुरीरितः ॥ २ ॥ रक्तवर्णः ॥ १ ॥

## १६८ अथ ब्रह्मसावर्णिमनुध्यानम्-

दशमोब्राह्मसावर्णिरुपश्लोकमुनेस्सुतः ॥ तत्सुताभूरिषेणाद्यास्तत्पत्नी बृहतीमता ॥ १ ॥ ब्राह्मणोलोकविख्यातोवर्णंश्वेतंसमाश्रितः ॥ सर्वेषां-जगतांभर्तापूर्वोक्तामनवोयथा ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

## १५९ अथ धर्मसावर्णिमनुध्यानम्-

मनुर्वैधर्मसावर्णिरेकादशइतीरितः ॥ धर्मपुत्रस्तत्सुतास्तुसत्यधर्मादयोमताः ॥ १ ॥ दीक्षापत्नीरक्तवर्णःक्षात्रंधर्ममनुव्रतः ॥ चतुर्णामेकसप्तत्यायुगानांप्रभुरीरितः ॥ २ ॥ रक्तवर्णः ॥ १ ॥

## १६० अथ रुद्रसावर्णिमनुध्यानम्-

भवितारुद्रसावर्णीरौद्रोद्वादशकस्तथा ॥ देवानुदेवास्तत्पुत्राःपत्नीत्वार्यानृभिःस्मृताः ॥ १ ॥ समाश्रितः क्षत्रधर्मंश्यामवर्णःप्रतापवान् ॥ चंडप्रशासनस्त्वासीत्सर्वेषांजगतांप्रभुः ॥ २ ॥ श्यामवर्णः ॥ १ ॥

## १६१ अथ वेदसावर्णिमनुध्यानम्-

मनुस्त्रयोदशोभाव्योवेदसावर्णिरात्मवान् ॥ आसीद्वेदशिराःपुत्रो ब्राह्मंधर्ममनुव्रतः ॥ १ ॥ चित्रसेनादयःपुत्रास्त्रयीपत्नीसुसंमता ॥ चतुर्णामेकसप्तत्यायुगानांपतिरीश्वरः ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

## १६२ अथ इंद्रसावर्णिमनुध्यानम्-

मनुस्स्यादिंद्रसावर्णिश्चतुर्दशइतीरितः ॥ इंद्रपुत्रस्तत्सुताश्चाप्युरुगंभीरकादयः ॥ १ ॥ नीलवर्णोधनुर्धारीक्षात्रंधर्ममनुव्रतः ॥ अभूत्पत्नीमतिस्तस्यसर्वेषांजगतांप्रभुः ॥ २ ॥ नीलवर्णः ॥ १ ॥ १४ ॥

---

## अथ नवचिरंजीविनांस्वरूपाणि-( शैवागमे वर्णस्तुपाद्मे )

## १६३ तत्रादौअश्वत्थामध्यानम्-

ब्रह्मसूत्रोज्ज्वलभुजोराजत्कृष्णाजिनांबरः ॥ अश्वत्थामाचिरंजीवी दीर्घमायुर्ददातुमे ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १६४ अथ बलिध्यानम्-

बलिःपातलनिलयोधनुर्बाणधरोनृपः ॥ विष्णुपादांकितशिराश्चिरंजीवीप्रसीदतु ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

१६५ अथ व्यासध्यानम्-

व्यासस्समस्तधर्माणांवक्तामुनिवरेडितः ॥ चिरंजीवीदीर्घमायुर्ददातु जटिलोमम ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

१६६ अथ हनूमद्ध्यानम्-

हनूमान्रामपादाब्जसंगीवर्णिवरःशुचिः ॥ संजीवनापहर्तामेदीर्घमायुर्ददात्विह ॥ १ ॥ स्फटिकवर्णः ॥ १ ॥

१६७ अथ बिभीषणध्यानम्-

बिभीषणोधर्मपरोरामार्चनपरायणः॥ ददातुचिरजीवित्वंचिरंजीवीजितेंद्रियः ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

१६८ अथ कृपध्यानम्-

कृपःकृपापयोराशिस्तपस्वीचीरवस्त्रधृक् ॥ वितनोतुप्रसन्नात्मायावज्जीवमरोगताम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१६९ अथ परशुरामध्यानम्-

परशूज्ज्वलहस्ताब्जोजटामंडलमंडितः ॥ ददातुचिरजीवित्वंप्रसन्नात्माभृगूद्वहः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

१७० अथ प्रह्लादध्यानम्-

विष्णुभक्तंमहाप्राज्ञंद्विभुजंराक्षसोत्तमम् ॥ ध्यायाम्यहंमहासौम्यंप्रह्लादंचिरजीविनम् ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

१७१ अथ मार्कंडेयध्यानम्-

श्रीमंतंशांतमनसंशिवपूजापरायणम् ॥ वेदशास्त्रार्थतत्त्वज्ञंमार्कंडेयमहंभजे ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥ ९ ॥

---

एतेषांचिरंजीविनांवर्णाः-( पाद्मे )

अश्वत्थामा श्वेतवर्णःकालवर्णोमहाबलिः ॥ व्यासःकृष्णोमारुतिस्तुस्फटिकाभःप्रकीर्तितः ॥ १ ॥ बिभीषणःकृष्णवर्णोकृपस्तु

धवलस्स्मृतः ॥ जामदग्न्यस्सुवर्णाभोमार्कंडेयस्सितस्स्मृतः ॥ २॥ प्रह्लादश्चसुवर्णाभोवर्णाएषां प्रकीर्तिताः ॥ १० ॥

---

## १७२ अथ मरीच्यादिदशऋषीणांस्वरूपाणि—( नृसिंहप्रासादे )

मरीचिरत्र्यंगिरसौपुलस्त्यःपुलहःक्रतुः ॥ सवेदाश्चवसिष्ठश्चभृगुर्नारदएवच ॥ १ ॥ जटिलाः श्मश्रुलाश्शांताःकृशाधर्मरतास्सदा ॥ सुकुंभाक्षधराःकार्यामुनयोद्विभुजादश ॥ २ ॥ नारदोदेवगंधर्वस्साक्षसूत्रकमंडलुः ॥ सख्येववीणयावामभुजमूलोपगूढया ॥ ३ ॥ मुनयस्तुप्रकर्तव्याश्शुक्लरूपेणपार्थिव ॥ श्वेतवर्णाः ॥ १० ॥

---

## अथ भृग्वंगिरोगणः—( नृसिंहप्रासादे )

## १७३ तत्रादौभृगुगणौः—

कर्तव्याश्शुक्लरूपेणभृगवोवामदेवकः ॥ भृवणोभावनश्चैवसुजन्यस्सुजनस्तथा ॥ १ ॥ क्रतुस्सर्वस्वसुर्नामतथाचव्यश्रुतस्तथा ॥ प्रवासश्चाव्ययश्चैवदक्षोद्वादशकस्तथा ॥ २ ॥ भृगवोनामनिर्दिष्टादेवाद्वादशयाज्ञिकाः ॥ श्वेतवर्णाः ॥ १२ ॥

## १७४ अथ अंगिरोगणः—

जीवरूपेणकर्तव्यादेवाअंगिरसस्तथा॥ आत्माआयुर्मनोदक्षःपादप्रापस्तथैवच॥ १ ॥हविष्यश्चगविष्ठश्चक्रतस्सत्यश्चदेवलः॥ पीतवर्णाः ॥९ ॥

---

## अथ शास्त्राभिमानिनांदेवतानांनामानि—( नृसिंहप्रासादे )

शिक्षाप्रजापतिर्ज्ञेयःकल्पोब्रह्माप्रकीर्तितः ॥ सारस्वतंव्याकरणंनिरुक्तंवरुणःप्रभुः ॥ १ ॥ छंदोदितिस्तथैवाग्निर्ज्योतिषंभगवान्हरिः ॥ मीमांसाभगवान्सोमोन्यायमार्गस्समीरणः ॥ २ ॥ धर्मश्चधर्मशास्त्राणांपुराणस्यतथामनुः ॥ इतिहासःप्रजाध्यक्षोधनुर्वेदश्शतक्रतुः ॥ ३ ॥ आयुर्वेदस्तथासाक्षाद्देवोधन्वंतरिःप्रभुः ॥ फलवेदोमहादेवोनृत्तशास्त्रंमहे-

श्वरः ॥ ४ ॥ संकर्षणःपांचरात्रंरुद्रःपाशुपतंतथा ॥ पातंजलमनंतश्चसां-
ख्यंचकपिलोमुनिः ॥५॥ अर्थशास्त्राणिसर्वाणिधनाध्यक्षःप्रकीर्तितः ॥
कलाशास्त्राणिसर्वाणिकामदेवोजगद्गुरुः ॥ ६ ॥ अन्यानियानिशास्त्रा-
णियत्कृतानिप्रचक्षते ॥ सएवदेवतातस्यशास्त्रंकाव्यंचवेदवत् ॥ ७ ॥

## १७८ अथ यक्षस्वरूपम्-

यक्षास्सर्वेगुणाध्यक्षाःखड्गखेटधराश्शुभाः ॥ खेचरायेदेवचरास्ता-
न्नमस्येसुखाप्तये ॥ १ ॥ १ ॥

## १७९ अथ विश्वकर्मस्वरूपम्-( हेमाद्रौदानखंडे )

विश्वकर्तातुकर्तव्यश्श्मश्रुलोरशनाधरः ॥ संदंशपाणिर्द्विभुजस्तेजो-
मूर्तिधरोमहान् ॥ १ ॥ कनकवर्णः ॥ १ ॥ १ ॥

---

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्नाटकजनपदसंपदधिष्ठानभूत-
श्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपाल-
प्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्री-
मद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेंतेंबरगंडलोकैकवीरयदु-
कुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडध-
रणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितमहीशूरपुरवराधीशश्रीकृष्णरा-
जमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेचतुर्मुखपंचब्रह्मदिक्पाला-
दिस्वरूपनिरूपणंनामचतुर्थोनिधिस्संपूर्णः ॥

---

इति श्रीतत्त्वनिध्याख्यग्रन्थेचतुर्मुखपंचब्रह्मादिनिरूपणं
नामचतुर्थोब्रह्मनिधिःसम्पूर्णः ॥

श्रीः ।

अथ

# श्रीतत्त्वनिधौ–

## पंचमो ग्रहनिधिः ।

अथाधिदेवताप्रत्यधिदेवतासहितनवग्रहस्वरूपाणि–

( प्रयोगरत्नेनारायणभट्टीयेवाक्यैः–श्लोकैस्तु मयूखे )

### १ तत्रादौ सूर्यध्यानम्--

भगवन्नादित्यग्रहाधिपते काश्यपगोत्र कलिंगदेशेश्वर सप्तम्यांविशाखानक्षत्रजात जपापुष्पोपमांगद्युते द्विभुज पद्माभयहस्त सिंदूरवर्णांबरमाल्यानुलेपन ज्वलन्माणिक्यखचितसर्वांगाभरण भास्वरतेजोनिधे त्रिलोकीप्रकाशकदेवतात्रयीमूर्ते नमस्ते सन्नद्धाभरणपताकोपशोभितेन सप्ताश्वरथवाहनैकचक्रेण रथेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ अग्निरुद्राभ्यां सह पद्मकर्णिकायां ताम्रप्रतिमां प्राङ्मुखवर्तुलपीठमधितिष्ठेति साङ्गंसायुधंसशक्तिंसपत्नीकंध्यायेत् ॥–॥ पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंयुक्तोद्विभुजस्स्यात्सदारविः ॥ १ ॥पाटलवर्णः ॥ १ ॥

### २ अथ चतुर्वक्त्रसूर्यध्यानम्--( शारदातिलके )

हेमांभोजप्रवालप्रतिमनिजरुचिंचारुखट्वांगपद्मेचक्रंशक्तिंचपाशंसृणिमतिरुचिरंचाक्षमालांकपालम् ॥हस्तांभोजैर्दधानंत्रिनयनविलसद्वेदवक्त्राभिरामंमार्तंडंवल्लभाढ्यंमणिमयमकुटंहीरदीप्तंभजामः ॥ १॥ विद्रुमवर्णः

॥ १ ॥—॥प्रकारांतरेणध्यानम्—( शारदातिलके ) रक्तांबुजासनमशेषगुणैकसिंधुंभानुंसमस्तजगतामधिपंभजामि ॥ पद्मद्वयाभयवरान्दधतंकराब्जैर्माणिक्यमौलिमरुणांगरुचिंत्रिणेत्रम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ३ अथ सूर्याधिदेवताग्निध्यानम्—

पिंगभ्रूश्मश्रुकेशश्चपिंगाक्षित्रितयोरुणः ॥ छागस्थःसाक्षसूत्रश्चवरदःशक्तिधारकः ॥ १ ॥ अरुणवर्णः ॥ १ ॥

## ४ अथ सूर्यप्रत्यधिदेवतारुद्रध्यानम्—

पंचवक्त्रोवृषारूढःप्रतिवक्त्रंत्रिलोचनः ॥ कपालशूलखट्वांगपिनाकींदुशिराःशिवः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

---

## ५ अथ चंद्रध्यानम्—

भगवंत्सोमद्विजाधिपते सुधामयशरीरात्रिगोत्र यामुनदेशेश्वर गोक्षीरधवलांगद्युते द्विभुज गदावरदांकितकर शुक्लांबरमाल्यानुलेपन मौक्तिकाभरणरमणीय समस्तलोकाप्यायकदेवतास्वाद्यमूर्ते नमस्ते सन्नद्धधवलध्वजोपशोभितेन दशाश्वरथवाहनेन त्रिचक्ररथेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ अद्भिरुमया सह पद्माग्नेयदलमध्ये स्फटिकप्रतिमां प्राङ्मुखीं चतुरस्रपीठमधितिष्ठेति सपत्नीपुत्रं सायुधं सांगं चंद्रं भावयेत् ॥—॥श्वेतःश्वेतांबरधरोदशाश्वःश्वेतभूषणः॥गदापाणिर्द्विबाहुश्चकर्तव्योवरदश्शशी ॥ १ ॥ श्वेतवर्णः ॥ १ ॥—॥ प्रकारांतरेणचंद्रध्यानम्—( शारदातिलके ) कर्पूरस्फटिकावदातमनिशंपूर्णेंदुबिंबाननंमुक्तादामविभूषितेनवपुषानिर्मूलयंतंतमः ॥ हस्ताभ्यांकुमुदंवरंचदधतंनीलालकोद्भासितंस्वस्यांकस्थमृगोदिताश्रयगुणंसोमंसुधाब्धिंभजे ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ६ अथ चंद्राधिदेवतानामपांध्यानम्—

आपस्त्रीरूपधारिण्यःश्वेतामकरवाहनाः ॥ दधानाःपाशकलशौमुक्ताभरणभूषिताः ॥ १ ॥ श्वेतवर्णाः ॥ १ ॥

७ अथ प्रत्यधिदेवतोमाध्यानम्-

अक्षसूत्रंचकमलंदर्पणंचकमंडलुम् ॥ उमाबिभर्तिहस्तेषुपूजितात्रिदशैरपि ॥ १ स्वर्णवर्णा ॥ १ ॥

८ अथ अंगारकध्यानम्-

भगवन्नंगारक अग्न्याकृते भरद्वाजगोत्र अवंतीदेशेश्वर अष्टम्यां श्रवणनक्षत्रोत्पन्न ज्वालापुंजोपमांगद्युते चतुर्भुजशक्तिशूलगदाखट्वांगधारिन् रक्तांबरमाल्यानुलेपन प्रवालाभरणभूषितसर्वांगद्युते आलोकदीप्ते नमस्ते सन्नद्धरक्तध्वजोपशोभितेन रक्तमेषाष्टरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ भूमिस्कंदाभ्यां सह पद्मदक्षिणदलमध्ये रक्तचंदनप्रतिमां दक्षिणाभिमुखीं त्रिकोणपीठमधितिष्ठेतिसाङ्गंसायुधंसपत्नीकंभावयेत् ॥–॥ रक्तमाल्यांबरधरःशक्तिशूलगदाधरः ॥ चतुर्भुजोमेषगमोवरदस्स्याद्धरासुतः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९ अथ अंगारकाधिदेवताभूमिध्यानम्-

शुक्लवर्णामहीकार्यादिव्याभरणभूषिता ॥ चतुर्भुजासौम्यवपुश्चंडांशुसदृशांबरा ॥ १ ॥ रत्नपात्रंसस्यपात्रंपात्रमोषधिसंयुतम् ॥ पद्मंकरेचकर्तव्यंभुवोयादवनंदन ॥ २॥ दिग्गजानांचतुर्णांसाकार्यापृष्ठगतातथा ॥ श्वेतवर्णा ॥ १ ॥

१० अथ अंगारकप्रत्यधिदेवतास्कंदध्यानम्-

कुमारष्षणमुखःकार्यशिशिखिखंडविभूषणः ॥ रक्तांबरधरोदेवोमयूरवरवाहनः ॥ १ ॥ कुक्कुटश्चतथाघंटातस्यदक्षिणहस्तयोः ॥ पताका वैजयंतीस्याच्छक्तिःकार्याचवामयोः ॥ २ ॥ पाटलवर्णः ॥ १ ॥

११ अथ बुधध्यानम्--

भगवन् सौम्यद्युते सर्वज्ञानमय अत्रिगोत्र द्वादश्यांधनिष्ठानक्षत्रोत्पन्न मगधदेशेश्वर कुंकुमवर्णांगद्युते चतुर्भुज खड्गखेटगदावरदानांकितकर

पीतमाल्यानुलेपन मरकताभरणालंकृतसर्वांगद्युते विबुधमते नमस्ते सन्न-द्धहरितध्वजोपशोभितेन चतुस्सिंहरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ विष्णुपुरुषाभ्यां सह पद्मेशानदलमध्ये सुवर्णप्रतिमामुदङ्मुखींबाणाका-रपीठमधितिष्ठेति सांगं सायुधंसपत्नीकं सपरिवारं सशक्तिंभावयेत् ॥-॥ पीतमाल्यांबरधरःकर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिस्सिंहस्थो-वरदोबुधः ॥ १ ॥ कनकवर्णः ॥ १ ॥

## १२ अथ बुधाधिदेवताविष्णुध्यानम्-

विष्णुःकौमोदकीपद्मशंखचक्रंधरःक्रमात् ॥ प्रदक्षिणंदक्षिणाधःकरा-दारभ्यनित्यशः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १३ अथ बुधप्रत्यधिदेवतापुरुषध्यानम्-

पुरुषमूर्तिस्स्वर्णवर्णः चतुर्भुजः शंखचक्रगदापद्मधरः कार्यः ॥ स्वर्णवर्णः ॥ १ ॥ १ ॥

## १४ अथ बृहस्पतिध्यानम्-

भगवन् बृहस्पते समस्तदेवताचार्य आंगिरसगोत्र सिंधुदेशेश्वर दीप्त-सुवर्णसदृशांगदीप्ते चतुर्भुज दंडकमंडल्वक्षसूत्रवरदांकितकर पीतांबर-माल्यानुलेपन पुष्यरागाभरणरमणीय समस्तविद्याधिपते नमस्ते सन्नद्ध-पीतध्वजोपशोभितेन अष्टाश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ इंद्रब्रह्मभ्यां सह पद्मोत्तरदलमध्ये सुवर्णप्रतिमामुदङ्मुखींदीर्घचतुरस्रपी-ठमधितिष्ठेतिसांगंसायुधं सपरिवारं सपत्नीकं सशक्तिं भावयेत् ॥-॥ अ-ष्टभिःपांडरैर्युक्तोवाजिभिःकांचनेरथे ॥ तिष्ठन्तरातिवैवर्षंराशौराशौ बृह-स्पतिः ॥ १ ॥ देवदैत्यगुरूशुद्धौपीतश्वेतौचतुर्भुजौ ॥ दंडिनौवरदौका-र्यौसाक्षसूत्रकमण्डलू ॥ २ ॥ कनकवर्णः ॥ १ ॥

## १५ अथ गुर्वधिदेवतेन्द्रध्यानम्-

चतुर्दंतगजारूढोवज्रांकुशलसत्करः ॥ प्राचीपतिःप्रकर्तव्योनानाभ-रणभूषितः ॥ १ ॥ स्वर्णवर्णः ॥ १ ॥

१६ अथ गुरुप्रत्यधिदेवताब्रह्मध्यानम्-

पद्मासनस्थं जटिलं चतुर्मुखमक्षमालास्रुवपुस्तककमंडलुधरंकृष्णाजिनवाससंपार्श्वस्थितहंसंब्रह्माणं भावयेत् ॥ पाटलवर्णः ॥ १ ॥

१७ अथ शुक्रध्यानम्-

भगवन् भार्गव समस्तदैत्यगुरो भार्गवगोत्र भोजकटदेशेश्वर रजतोज्ज्वलांगकांते चतुर्भुज दंडकमंडल्वक्षसूत्रवरदानांकितकर शुक्लांबरमाल्यानुलेपन वज्राभरणभूषितसर्वांग समस्तनीतिशास्त्रनिपुणमते नमस्ते शुक्लध्वजोपशोभितेन शुक्लाष्टाश्वरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ इंद्राणींद्राभ्यां सह पद्मपूर्वदलमध्ये रजतप्रतिमांप्राङ्मुखीं पंचकोणपीठमधितिष्ठेति साङ्गं सायुधं सपरिवारं सपत्नीकं सशक्तिं भावयेत् ॥–॥ सवरूथस्सानुकर्षोयुक्तोभूसंभवैर्हयैः ॥ सोपासंगपताकस्तुशुक्रस्स्यात्तुरथोमहान् ॥ १ ॥ देवदैत्यगुरूशुद्धौपीतश्वेतौचतुर्भुजौ ॥ दंडिनौवरदौकार्यौसाक्षसूत्रकमंडलू ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

१८ अथ शुक्राधिदेवतेंद्राणीध्यानम्-

वामेशच्याःकरेकार्यासौम्यासंतानमंजरी॥अभयाऽऽमंडिताकार्याद्विभुजाचतथाशची ॥ १ ॥ कनकवर्णा ॥ १ ॥

१९ अथ शुक्रप्रत्यधिदेवतेंद्रध्यानम्-

श्वेतहस्तिसमारूढंवज्रांकुशलसत्करम् ॥ सहस्रनेत्रंपीताभमिंद्रंहृदिविभावये ॥ १ ॥ कनकवर्णः ॥ १ ॥

२० अथ शनैश्वरध्यानम्-

भगवन् शनैश्चर भास्करतनय काश्यपगोत्र सौराष्ट्रदेशेश्वर कज्जलसमांगद्युते चतुर्भुज चापबाणकृपाणाभयांकितकर नीलांबरमाल्यानुलेपन नीलरत्नभूषणालंकृतसर्वांग समस्तभुवनभीषणामर्षमूर्ते नमस्ते सन्नद्धनीलध्वजोपशोभितेन नीलगृध्राष्टरथवाहनेन मेरुं प्रदक्षिणीकुर्वन्नागच्छ प्रजापतियमाभ्यां सह पद्मपश्चिमदलमध्ये कालायसप्रतिमां प्रत्यङ्मुखीं

चापाकारपीठमधितिष्ठेति साङ्गं सायुधं सपरिवारं सपत्नीकं सशक्तिं भावयेत् ॥-॥ इंद्रनीलद्युतिःखड्गीवरदोगृध्रवाहनः ॥ बाणचापधरोवीरःकर्तव्योर्कसुतस्सदा ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

२१ अथ शन्यधिदेवताप्रजापतिध्यानम्-

हंसयानेनकर्तव्योनचकार्यश्चतुर्मुखः ॥ सावित्रीतस्यकर्तव्यावामोत्संगगताशुभा ॥ १ ॥ ब्रह्मोक्तंपरमंकार्यंरूपंसर्वप्रजापतेः ॥ यज्ञोपवीती हंसस्थएकवक्त्रश्चतुर्भुजः ॥ २ ॥ अक्षस्रजंस्रुवंबिभ्रत्कुंडिकांपुस्तकं तथा ॥ पद्मवर्णः ॥ १ ॥

२२ अथ शनिप्रत्यधिदेवतायमध्यानम्-

रक्तदृक्पाशहस्तश्चयमोमहिषवाहनः ॥ कालःकरालवदनःनीलांगश्चातिभीषणः ॥ १ ॥ नीलवर्णः ॥ १ ॥

२३ अथ राहुध्यानम्-

भगवन् राहो रविसोमविमर्दन सिंहिकानंदन पैठीनसिगोत्र बर्बरदेशेश्वर कालमेघद्युते व्याघ्रवदन चतुर्भुज खड्गचर्मशूलवरदानांकितकर कृष्णांबरमाल्यानुलेपन गोमेधिकाभरणभूषितसर्वांग शौर्यनिधे नमस्ते सन्नद्धकृष्णध्वजोपशोभितेनकृष्णसिंहरथवाहनेन मेरुमप्रदक्षिणीकुर्वन्नागच्छ सर्पकालाभ्यां सह पद्मनैर्ऋत्यदलमध्ये सीसकप्रतिमां दक्षिणाभिमुखीं शूर्पाकारपीठमधितिष्ठेति सांगं सायुधं सपरिवारं सपत्नीकं सशक्तिं भावयेत् ॥-॥ करालवदनः खड्गचर्मशूलीवरप्रदः ॥ नीलसिंहासनस्थश्चराहुर्मेस्याच्छुभप्रदः ॥ १ ॥ नीलमेघवर्णः ॥ १ ॥

२४ अथ राह्वधिदेवतासर्पध्यानम्-

अक्षसूत्रधरास्सर्पाःकुंडिकापुच्छभूषणाः ॥ एकभोगास्त्रिभोगावासर्वेकार्याश्चभीषणाः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२५ अथ राहुप्रत्यधिदेवताकालध्यानम्-

कालःकरालवदनोनीलांगश्चातिभीषणः ॥ पाशदंडधरःकार्यस्सर्पवृश्चिकरोमवान् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

## २६ अथ केतुध्यानम्-

भगवन्केतो धूमरूप जैमिनिगोत्र मध्यदेशेश्वर धूम्रवर्णध्वजाकृते द्विभुज गदावरदानांकितकर चित्रमाल्यानुलेपन वैडूर्यवराभरणभूषितसर्वांग विचित्रशक्के नमस्ते सन्नद्धचित्रध्वजोपशोभितेन चित्रकपोतरथवाहनेन मेरुमप्रदक्षिणीकुर्वन्नागच्छ ब्रह्मचित्रगुप्ताभ्यां सह पश्चवायव्यदलमध्ये कांस्यप्रतिमां दक्षिणाभिमुखीं ध्वजाकारपीठमधितिष्ठेति सांगं सायुधं सपरिवारं सपत्नीकं सशक्तिं भावयेत् ॥--॥ धूम्रास्सुखावहास्सर्वेगदिनोविकृताननाः ॥ कपोतवाहनानित्यंकेतवस्स्युर्वरप्रदाः ॥ १ ॥ सर्वेकिरीटिनःकार्याग्रहा लोकहितावहाः॥ (केतूनांबहुत्वेपिएकस्यैवप्राधान्यम् ) धूम्रवर्णाः ॥ १ ॥

## २७ अथ केत्वधिदेवताब्रह्मध्यानम्-( शैवागमे )

विरिंचिंवाक्पतिंश्वेतपंकजस्थंमहाप्रभम् ॥ अक्षस्रक्कुंडिकाभीतिदानहस्तंविचिंतये ॥ १ ॥ पद्मवर्णः ॥ १ ॥

## २८ अथ केतुप्रत्यधिदेवताचित्रगुप्तध्यानम्-( भट्टभास्करीये )

अपीच्यवेषंस्वाकारंद्विभुजंसौम्यदर्शनम्॥ दक्षिणेलेखिनींचैवदधंवामेचपत्रकम् ॥ १ ॥ पिंगलश्मश्रुकेशाक्षंचित्रगुप्तंविभावयेत् ॥ कनकवर्णः ॥ १ ॥

---

## अथ कर्मसाद्गुण्यदेवतानांध्यानम्-

## २९ तत्रादौदुर्गाध्यानम्-( शैवागमे )

दुर्गांविंशत्तिभुतयेभुजाष्टकविभूषिताम् ॥ ध्यायामिदैत्यहंत्रींतांरक्तास्वादनतत्पराम् ॥ १ ॥ नीलवर्णा ॥ १ ॥

## ३० अथ गणपतिध्यानम्-( शैवागमे)

एकदंतंगजमुखंशुंडालंमोदकप्रियम् ॥ शूर्पकर्णनमस्यामिशिरसाखुवरस्थितम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ३१ अथ क्षेत्रपालध्यानम्-( कारणागमे )

क्षेत्रपालंश्यामवर्णंभ्रुकुटीकुटिलाननम् ॥ त्रिलोचनंचोर्ध्वकेशमतिक्रुद्धंसुदंष्ट्रकम् ॥ १ ॥ नूपुरालंकृतांघ्रिंचसर्पशृंखलभूषितम् ॥ क्षुद्रघंटाबद्धगुल्फंकपालस्रग्विभूषणम् ॥ २ ॥ नागयज्ञोपवीतंचचंद्रमौलिंदिगंबरम् ॥ दक्षिणेशूलवेतालखड्गदुंदुभिधारिणम् ॥ ३ ॥ वामेकपालघंटोचचर्मचापांश्वबिभ्रतम् ॥ क्षेत्रपालमहंवन्देसर्वारिष्टोपशांतये ॥ ४ ॥ श्यामवर्णः ॥ १ ॥

## ३२ अथ अभयंकरध्यानम्-( शैवागमे )

आनम्रजनसंदोहभीतिव्रातविनाशनम् ॥ अभयंकरमीडेहंसततंसौख्यदायिनम् ॥ १ ॥ कनकवर्णः ॥( अन्यत्सर्वमिंद्रवत् ४ नि० )॥ १ ॥

## ३३ अथ वास्तुपुरुषध्यानम्-( शैवागमे )

मानदंडंकराब्जेनवहंतंभूमिशोधकम् ॥ वंदेहंवास्तुपुरुषंशयानंशयनेशुभे ॥ १ ॥ नीलवर्णः ॥ द्विभुजः ॥ १ ॥

## ३४ अथ मृत्युंजयध्यानम्-( शैवागमे )

दलत्सरोजमध्यस्थंचंद्रसूर्याग्निलोचनम् ॥ मौलिबद्धेंदुविगलदमृतार्द्रंसितद्युतिम् ॥ १ ॥ मुद्रांपाशंपुस्तकंचबिभ्राणंचाक्षसूत्रकम् ॥ भक्तार्तिहरमीशानंमृत्युंजयमुपास्महे ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

---

## ३५ अथ चतुर्युगस्वरूपाणि-( पद्मपुराणे )

एवंवृषेंद्रवदनायुगाराजन्कृतादयः ॥ सुपक्वाम्रातसीपुष्पनीलाब्जशुकसन्निभाः ॥ १ ॥ सर्वेसद्वस्त्रसत्पुष्पसदलंकरणोज्ज्वलाः ॥ शंखपद्मधरास्सर्वेवराभयकरास्तुवै ॥ २ ॥ ४ ॥

## ३६ तत्रकलिपुरुषस्वरूपम्-( श्रीविष्णुभागवते )

नृपलिंगधरंशूद्रंघ्नंतंगोमिथुनंपदा॥( १ स्कं० १६ अध्या० )॥—॥प्रकारान्तरम् ॥ दंडहस्तंचवृषलंददृशेनृपलांछनम् ॥( १ स्कं० १७ अध्या० ) कृष्णवर्णः ॥ १ ॥

३७ अथ चतुर्युगाभिमानिदेवताध्यानम्–( पद्मपुराणे )

कृतेवलक्षस्त्रेतायामरुणोद्वापरेतथा ॥ पीतःकलौघनश्यामोवासुदेवः पुरःपुमान् ॥ १ ॥ शंखंशार्ङ्गगदांचक्रंदधानाबाहुभिःक्रमात् ॥ सुखासीनाश्वारुहस्तायुगानामधिदेवताः ॥ २ ॥ ४ ॥

---

अथ प्रभवादिषष्टिसंवत्सराणांस्वरूपाणि–( कारणागमेमदनरत्ने होरायाम् )

३८ तत्रादौप्रभवसंवत्सरस्वरूपम्–

अक्षधृग्भूतिपुंड्रस्तुद्विपादःकृष्णवर्णकः ॥ रक्ताक्षस्थूलदेहश्चप्रभवोब्राह्मणःपुमान् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

३९ अथ विभवसंवत्सरस्वरूपम्–

रत्नमुक्तामयींमालांदधानंकंठदेशके ॥ दिव्यांगदंरथारूढंध्यायेद्विभवमीदृशम् ॥ १ ॥ मेघवर्णः ॥ १ ॥

४० अथ शुक्लसंवत्सरस्वरूपम्–

दिव्यांगरागसंछन्नंश्वेतवस्त्रोपशोभितम् ॥ लिपिकल्पद्रुमस्याधोध्यायेच्छुक्लाख्यवत्सरम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

४१ अथ प्रमोदूतसंवत्सरस्वरूपम्–

पंचास्योत्युग्रमूर्तिश्चलोलाक्षश्श्यामरूपधृत् ॥ प्रमोदूतस्सविज्ञेयः कांतालिंगितविग्रहः ॥ १ ॥ श्यामवर्णः ॥ १ ॥

४२ अथ प्रजापतिसंवत्सरस्वरूपम्–

ज्वलत्कालानलप्रख्योवरदाभयपाणिमान् ॥ महोदरोलोहिताक्षोवत्सरस्तुप्रजावतिः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

४३ अथ आंगिरससंवत्सरस्वरूपम्–

फालेनयनयोर्मध्येचक्राकारंसितद्युति ॥ पद्महस्तद्वयंदेवंध्यायेदांगिरसाभिधम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

४४ अथ श्रीमुखसंवत्सरस्वरूपम्-

अनेकरत्नसंछन्नंक्ष्वेलपीनगलंपरम् ॥ पुष्कराक्षंहरिद्राभंध्यायेच्छ्री-मुखवत्सरम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

४५ अथ भावसंवत्सरस्वरूपम्--

जडभावयुतश्चैवकरलग्नमृगस्तथा ॥ ऊर्ध्वबाहुयुतश्चैवद्विभुजःक्षात्रि-यस्स्मृतः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

४६ अथ युवसंवत्सरस्वरूपम्--

गारुत्मतसमाक्रांतकटाक्षहसितोत्पलम् ॥ द्विभुजंश्वेतवर्णंचपद्माक्षं-युववत्सरम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

४७ अथ धातुसंवत्सरस्वरूपम्--

पद्महस्तधरंदेवंकैलासाचलसन्निभम् ॥ त्रिणेत्रंपद्मवर्णंचनिर्भयंधातु-संज्ञकम् ॥ १ ॥ पद्मवर्णः ॥ १ ॥

४८ अथ ईश्वरसंवत्सरस्वरूपम्--

उद्यद्भानुसहस्राभंद्विबाहुंचोर्ध्वदिङ्मुखम् ॥ चित्रांबरधरंदेवंध्याये-दीश्वरसंज्ञकम् ॥ १ ॥ अरुणवर्णः ॥ १ ॥

४९ अथ बहुधान्यसंवत्सरस्वरूपम्-

अमृतकलशहस्तःकांतिसंपूर्णदेहःसकलविबुधवंद्योवेदशास्त्रैकचिंतः॥ विततललिततेजादीर्घवक्षाद्विपादःकमलनयनयुक्तश्चिंतितोद्वादशोब्दः १॥ नीलवर्णः ॥ १ ॥

५० अथ प्रमाथिसंवत्सरस्वरूपम्-

धर्मिष्ठोगौरवर्णश्चदीर्घवक्षस्समन्वितः ॥ ग्रैवेयकृतमाणिक्यःप्रमाथी-वत्सरःपुमान् ॥ १ ॥ कनकवर्णः ॥ १ ॥

५१ अथ विक्रमसंवत्सरस्वरूपम्-

श्यामनेत्रंचशिल्पज्ञंगोधूमाभंहितोक्तिकम् ॥ मध्यमोच्चंदीर्घबाहुंद्वि-पादंविक्रमंविदुः ॥ १ ॥ गोधूमवर्णः ॥ १ ॥

## ५२ अथ वि[१५]षुसंवत्सरस्वरूपम्—

विषुसंवत्सरोनाम्नानीलांगोन्यासतत्परः ॥ आखुभुक्सदृशोक्षिभ्यां-मुखेव्रणयुतश्चलः ॥ १ ॥ नीलवर्णः ॥ १ ॥

## ५३ अथ चि[१६]त्रभानुसंवत्सरस्वरूपम्—

द्विबाहुःकुब्जकःश्यावऊर्ध्वकेशसमन्वितः ॥ देवालयेजपनृस्थाने नानालंकारभूषितः ॥ १ ॥ कपिलवर्णः ॥ १ ॥

## ५४ अथ स्व[१७]र्भानुसंवत्सरस्वरूपम्—

कपिलः क्रूरचेष्टश्चरक्तांबरविभूषितः ॥ तृषार्तोमेषवदनस्स्वभानु-र्द्विभुजोविभुः ॥ १ ॥ कपिलवर्णः ॥ १ ॥

## ५५ अथ ता[१८]रणसंवत्सरस्वरूपम्—

सुंदरोदीर्घदेहश्चनृत्यवाद्यकलाकृती ॥ नीरजाक्षोव्याघ्रपात्स्याद्गजास्य-स्तारणाभिधः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ५६ अथ पा[१९]र्थिवसंवत्सरस्वरूपम्—

तपस्वीगौरवर्णश्चदीर्घकंठोवृकोदरः ॥ तस्करोदंडयुक्तश्चस्थूलोष्ठः पार्थिवःस्मृतः ॥ १ ॥ गौरवर्णः ॥ १ ॥

## ५७ अथ व्य[२०]यसंवत्सरस्वरूपम्—

दीर्घास्यःश्यावतेजाश्चरक्तलोचनकेशवान् ॥ निपुणः सत्यवाक्चैव-व्ययोव्ययकरःपुमान् ॥ १ ॥ कपिलवर्णः ॥ १ ॥

## ५८ अथ स[२१]र्वजित्संवत्सरस्वरूपम्—

दीर्घनासामुखःशूरःसूक्ष्मोष्ठोगौरवर्णकः ॥ सद्धस्तःकूपखनकःसर्व-जित्सर्वसाधकः ॥ १ ॥ गौरवर्णः ॥ १ ॥

## ५९ अथ स[२२]र्वधारिसंवत्सरस्वरूपम्—

अभूरिग्रामवासीचसूक्ष्मनेत्रःकृषीवलः ॥ सूक्ष्मोष्ठोदीर्घदेहश्चसर्वधा-रीचसर्वदा ॥ १ ॥ रक्तवर्णः ॥ १ ॥

६० अथ विरोधि[23]संवत्सरस्वरूपम्-

तस्करोहिंसकश्चैवह्याम्लभुङ्मंदलोचनः ॥ सूक्ष्मग्रीवस्थूलदेहस्थूलमध्योविरोधिकः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

६१ अथ विकृति[24]संवत्सरस्वरूपम्-

सुंदरोदीर्घदेहश्चतपस्वीगौरवर्णकः ॥ शुष्कोदरोदीर्घकंठोरक्ताक्षोविकृतिःपुमान् ॥ १ ॥ गौरवर्णः ॥ १ ॥

६२ अथ खर[25]संवत्सरस्वरूपम्-

देवालयेनदीतीरेचतुर्बाहुस्थितःखरः ॥ वरदाभयपाणिश्चगदापद्मधरःपरः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

६३ अथ नंदन[26]संवत्सरस्वरूपम्-

रक्ताक्षोदीर्घबाहुश्चदीर्घघ्राणसमन्वितः ॥ भस्मरुद्राक्षसंयुक्तोवरदोनंदनःपुमान् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

६४ अथ विजय[27]संवत्सरस्वरूपम्-

द्विबाहुःपद्मसंकाशश्शरचापयुतःपुमान् ॥ वामतस्सर्वतोदृष्टिर्विजयोर्जुनमूलगः ॥ १ ॥ पद्मवर्णः ॥ १ ॥

६५ अथ जय[28]संवत्सरस्वरूपम्-

द्विबाहुःस्थूलकटिमात्रक्तलोचनसंयुतः ॥ वरदाभयपाणिश्चसितःश्यामयुतोजयः ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

६६ अथ मन्मथ[29]संवत्सरस्वरूपम्-

पद्माक्षोवृत्तबाहुश्चशरचापयुतःपुमान् ॥ वडबापंचकारूढोमन्मथोमन्मथाकृतिः ॥ १ ॥ कांचनवर्णः ॥ १ ॥

६७ अथ दुर्मुखि[30]संवत्सरस्वरूपम्-

दंष्ट्राकरालवदनउद्यदिंदुनिभद्युतिः ॥ द्विबाहुःशार्ङ्गपाणिश्चदुर्मुखीदुर्मुखोलसः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

६८ अथ हेमलंबिवि(म)लंबिसंवत्सरस्वरूपे-

हेमलंबीवि(म)लंबीचरक्ताक्षौक्रूरविह्वलौ ॥ रक्तवर्णौतुतौवृद्धौसदा-
मातृसमीपगौ ॥ १ ॥ रक्तवर्णौ ॥ २ ॥

६९ अथ विकारिशार्वरिसंवत्सरस्वरूपे-

विकारीशार्वरीचैवभृशुंडीमुसलायुधौ ॥ शिंशुपाख्यतरोर्मूलेचासी-
नौगिरिसन्निभौ ॥ १ ॥ रक्तवर्णौ ॥ २ ॥

७० अथ प्लवसंवत्सरस्वरूपम्-

नौकासमुद्रतीरस्थोद्वीपांतरगतिस्सदा ॥ तुरंगगुप्तियुक्तश्चचपलःप्लव-
वत्सरः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७१ अथ शुभकृच्छोभकृत्संवत्सरयोःस्वरूपे-

शुभकृच्छोभकृचैववनेवृद्धस्वरूपिणौ ॥ धारिणौपुंड्ररुद्राक्षंमलयद्रु-
मसन्निभौ ॥ १ ॥ रक्तवर्णौ ॥ २ ॥

७२ अथ क्रोधिसंवत्सरस्वरूपम्-

सर्वतोव्याघ्रसंवीतोभयशीलःक्षुधार्दितः ॥ शिवनारायणौध्यायन्-
क्रोध्यब्दोह्रस्वकःसितः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

७३ अथ विश्वावसुसंवत्सरस्वरूपम्-

अरण्येनिर्जलेभूमौस्थितोविश्वावसुःपुमान् ॥ वापीसोपानमाश्रित्य-
ध्यायन्वैविश्वतोमुखम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

७४ अथ पराभवप्लवंगसंवत्सरस्वरूपे-

पराभवःप्लवंगश्चश्वेतौपुष्करसन्निधौ ॥ तिष्ठत्येकःप्लवत्येकःयुवानाव-
तिदर्पितौ ॥ १ ॥ श्वेतवर्णौ ॥ २ ॥

७५ अथ कीलकसौम्यसंवत्सरस्वरूपे-

धृत्वाशिरसिभांडंचयुवानौनीललोहितौ ॥ कीलकश्चैवसौम्यश्चतप-
स्यंतौगिरेस्तटे ॥ १ ॥ नीलरक्तवर्णौ ॥ २ ॥

### ७६ अथ सा[४४]धारणसंवत्सरस्वरूपम्-

साधारणस्सरस्वत्यास्तीरेविप्रौघसंवृतः ॥ पुरस्ताद्देवमीशानमर्चय-न्वसतिद्विजः ॥ १ ॥ कनकवर्णः ॥ १ ॥

### ७७ अथ विरोधि[४५]कृत्संवत्सरस्वरूपम्-

विरोधिकृत्क्रूरकर्माधनुर्बाणयुतोनिशम् ॥ रक्ताक्षःस्थूलदेहश्चमृगा-न्हिंसंश्चरत्ययम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ७८ अथ परिधा[४६]विसंवत्सरस्वरूपम्-

मृगचर्मशिरस्त्राणोधन्वीकुटिलहृक्शठः ॥ उपानद्वयांमृगान्निघ्नन्प-रिधावीवनेचरः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

### ७९ अथ प्र[४७]मादीचसंवत्सरस्वरूपम्-

ऊर्ध्वबाहुर्वनेनद्यास्तीरेभस्मविलेपनः ॥ ध्यायन्नविंकृशोनीलःप्रमादी-चोद्विजःस्मृतः ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ८० अथ आ[४८]नंदसंवत्सरस्वरूपम्-

कृतोर्ध्वपुंड्रोनिभृतोनिवसन्विजनेवने ॥ आनंदोलोहितोध्यायन्नक्षमा-लावभूषितः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

### ८१ अथ रा[४९]क्षससंवत्सरस्वरूपम्-

स्कंधेगृह्णन्स्थूलदंडंदृषद्धस्तोवनेचरः ॥ पथिकान्बाधमानस्तुराक्ष-सःश्वानगोसितः ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ८२ अथ नलसंवत्सरस्वरूपम्-

तपस्वीजलमध्यस्थोचीरकृष्णाजिनांबरः ॥ जटाभृच्छ्मश्रुलश्शांतः कृष्णोभूतिविभूषणः ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

### ८३ अथ पिंग[८१]लकाल[८२]युक्तिसंवत्सरस्वरूपे-

पिंगलःकालयुक्तिश्चरक्तास्यौरक्तलोचनौ ॥ जपतःश्वेतनीलांगावर-ण्येनिंवसन्निधौ ॥ १ ॥ १ श्वतवर्णः ॥ २ नीलवर्णः ॥ २ ॥

## ८४ अथ सिद्धार्थिसंवत्सरस्वरूपम्-

समुद्रतीरेसंध्यायांस्नात्वासूर्यमुङ्मुखः ॥ तिष्ठन्ध्यायन्जपन्वर्णीश्वेतस्सिद्धार्थिवत्सरः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ८५ अथ रौद्रिसंवत्सरस्वरूपम्-

रौद्रिसंवत्सरोराजासिंहासनगतःशठः ॥ रक्ताक्षःस्थूलदेहश्चश्यामोक्षक्रीडनेरतः ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

## ८६ अथ दुर्मतिसंवत्सरस्वरूपम्-

दुर्मतिःक्षत्रियश्शूरःस्थूलस्तुरगवाहनः ॥ खड्गचर्मधरोरक्तःशत्रुच्छेदनलालसः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ८७ अथ दुंदुभिसंवत्सरस्वरूपम्-

पुष्करद्वीपमासाद्यदुंदुभिःप्लक्षसन्निधौ ॥ ध्यायन्वसतिनिश्शंकंविष्णुंवैविश्वरूपिणम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

## ८८ अथ रुधिरोद्गारिसंवत्सरस्वरूपम्-

रुधिरोद्गारिनामासौपुष्करस्यतटेवसन् ॥ अर्चयन्द्रोणपुष्पैस्तुरुद्रमेकादशात्मकम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

## ८९ अथ रक्ताक्षिसंवत्सरस्वरूपम्-

स्वर्णप्रासादमाश्रित्यमंटपेसिंधुसन्निधौ ॥ स्त्रीभिःक्रीडन्भूषितांगोरक्ताक्षीतुयुवाविभुः ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## ९० अथ क्रोधनसंवत्सरस्वरूपम्-

क्रोधनःकुटिलाकारोरक्तांगोद्रुमसन्निधौ ॥ श्वभिः क्रिडन्विलोलाक्षो क्रोधनोविकृताननः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

## ९१ अथ अक्षयसंवत्सरस्वरूपम्-

शाल्मलिद्वीपमासाद्यवसन्दृषदिविष्टरे ॥ क्रूरःकृष्णोदीर्घरोमाऽक्षयोदीर्घाकृतिःपुमान् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

## अथ इद्वसरादिनामानि-( कालमाधवीये )

इद्वत्सरः इडावत्सरः संवत्सरः परिवत्सरः अनुवत्सरः इति संज्ञास्तु प्रभवादिषु षष्टिसंवत्सरेषु आदितःपंचानांपंचानामेकैकशःक्रमेण ज्ञेयाः ५

## ९२ अथ प्रभवादिषष्टिसंवत्सरेषुजातगुणाः-( जातकाभरणे )

( तत्रादौ प्रभवे )-सर्ववस्तुपरिसंग्रहेरतःपुत्रसंततिरतीवसन्मतिः ॥ सर्वभोगयुतदीर्घजीवितोजायतेप्रभवसंभवःपुमान् ॥ १ ॥

(विभवे)-उत्पन्नभोक्ताप्रियदर्शनश्चबलादिशालीचतुरःकलाज्ञः ॥ राजाभवेदात्मकुलेसुशीलोविद्वान्मनुष्योविभवाब्दजन्मा ॥ १ ॥

(शुक्ले)-सदासहर्षोऽतितरामुदारोसत्पुत्रदारोविभवैस्समेतः ॥ सद्भाग्यविद्याविनयोपपन्नोनूनंपुमाञ्छुक्लसमुद्भवःस्यात् ॥ १ ॥

( प्रमोदूते )-दातासदानंदयुतोतिकांतस्सत्येननित्यंसहितोगुणीस्यात् ॥ दक्षश्चधूर्तःपरकार्यकर्त्ताप्रमोदजन्मामनुजोभिमानी ॥ १ ॥

(प्रजोत्पत्त्याम्)-दानाभिमानस्सुतरांदयालुःकुलानुवृत्तःकिलचारुशीलः ॥ देवद्विजार्चाभिरतोविनीतोमर्त्यःप्रजाधीशसमुद्भवस्स्यात् ॥ १ ॥

( आङ्गीरसे )-कांतस्सुखीभोगयुतश्चमानीप्रियप्रवक्ताबहुपुत्रयुक्तः ॥ सगुतबुद्धिःखलुदीर्घजीवीनरोंगिरोवत्सरसंभवस्स्यात् ॥ १ ॥

(श्रीमुखे)-श्रीमान्प्रतापीबहुशास्त्रवेत्तासुहृत्प्रियश्चारुमतिर्बलीयान् ॥ सत्कीर्तियुक्तोतितरामुदारोभवेन्नरःश्रीमुखसंभवश्च ॥ १ ॥

(भावे)-प्रशस्तचेतास्सुतरांयशस्वीगुणान्वितोधैर्ययुतोविनीतः॥ सदासहर्षोविमतोबहूनांभावाभिधानोद्भवमानवस्स्यात् ॥ १ ॥

(यूनि)-प्रसन्नमूर्तिर्गुणवान्वितीतःशांतश्चदानाभिरतोनितांतम् ॥ सुधीश्चिरायुर्दृढदेहशालीजातोयुवाब्देपुरुषस्सतोषः ॥ १ ॥

(धातौ)-सर्वलोकगुणगौरवयुक्तस्सुंदरोप्यतितरांगुरुभक्तः ॥ शिल्पशास्त्रकुशलश्चसुशीलोधातुवत्सरभवोहिनरस्स्यात् ॥ १ ॥

( ईश्वरे[११] ) तत्कालसंजातमहाप्रकोपोहर्षाद्विहीनोगुणवान्प्रतापी ॥ दक्षःकलाकौशलशीलशालीमर्त्योभवेदीश्वरजातजन्मा ॥ १ ॥

( बहुधान्ये[१२] ) व्यापारदक्षःक्षितिपालमानीदानाभिमानीननुशास्त्रवेत्ता ॥ बहुप्रकारैर्बहुधान्यवित्तःस्यान्मानवोवैबहुधान्यजन्मा ॥ १ ॥

( प्रमाथिनि[१३] )—रथध्वजच्छत्रतुरंगमाद्यैर्युतश्चशास्त्राभिरतोरिहंता ॥ मंत्रीनरेंद्रस्यनरःकृतज्ञःप्रमाथिसंवत्सरसंभवस्स्यात् ॥ १ ॥

( विक्रमे[१४] )—अत्युग्रकर्माभिरतोनितांतमरातिचक्राक्रमणेतिदक्षः ॥ शूरश्चधीरोतितरामुदारःपराक्रमीविक्रमवर्षजातः ॥ १ ॥

( वृषे[१५] )—कार्यःप्रतापीकिलनिंद्यशीलःखलानुयातःपरकर्मकर्त्ता ॥ भर्ता बहूनांमलिनोलसश्चजातोवृषाब्देमनुजोतिलुब्धः ॥ १ ॥

( चित्रभानौ[१६] )—चित्रवस्त्रकुसुमैकमानसोमानसोद्भवचयान्वितस्सदा ॥ चारुशीलविलसत्कलाचितश्चित्रभानुजनितोहिपूरुषः ॥ १ ॥

( स्वभानौ[१७] )—अरालकेशःसरलस्सुकांतिर्जितारिपक्षोमतिमान्विनीतः ॥ प्रसन्नमूर्तिस्समसिद्धिहूतिस्स्वभानुसंवत्सरजोनरस्स्यात् ॥ १ ॥

( तारणे[१८] )—धूर्तश्चशूरश्चपलःकलाज्ञस्सुनिष्ठुरोगर्हितकर्मकर्ता ॥ उत्पन्नभोक्ताद्रविणेनमुक्तस्स्यात्तारणाब्दोद्भवमानवोयः ॥ १ ॥

( पार्थिवे[१९] )—स्वधर्मकर्माभिरतोनितांतंसुक्षात्रपारंगमतामुपेतः ॥ कलाकलापेकुशलोविलासीयःपार्थिवाब्देकुलपार्थिवस्स्यात् ॥ १ ॥

( व्यये[२०] )—सौख्यातिरिक्तोव्यसनाभिभूतोभीतोनकिंचिद्ग्रहणाद्दणस्य ॥ जातःपुमानस्थिरचित्तवृत्तिर्व्ययाभिधानेव्ययकर्मशीलः ॥ १ ॥ २० ॥

( सर्वजिति[२१] )—राजगौरवमहोत्सवःशुचिर्मानवःपृथुतनुर्महाद्युतिः ॥ वैरिवर्गविजयोद्यतस्सदासर्वजिच्छरदिसंभवःपुमान् ॥ १ ॥

( सर्वधारिणि[२२] )—भूतिभृत्यबहुभोगसंयुतस्सुंदरश्चमधुरान्नभुक्सदा ॥ धीरतद्गुणयुतोतिदारुणस्सर्वधारिणिचयस्यसंभवः ॥ १ ॥

( [२३]विरोधिनि )—रक्तोविदेशाटनतांप्रपन्नःकुटुंबसौख्यापचयोति-
धूर्तः ॥ जनेनसाकंगतचित्तवृत्तिर्विरोधिवर्षप्रभवोनरस्स्यात् ॥ १ ॥

( विकृ[२४]तौ )—निर्धनःकिलकरालतांगतोदीर्घपर्वबहुगर्वसंयुतः ॥
चारुबुद्धिरहितोऽप्यमित्रकोमानवोविकृतिवर्षसंभवः ॥ १ ॥

( [२५]खरे )—कामातुरोधूसरकायकांतिःकठोरदीर्घस्वरफल्गुवाक्यः ॥
क्लेशीचलज्जाविधिवर्जितस्स्यान्नरःखराब्दप्रभवोतिदीर्घः ॥ १ ॥

( [२६]नन्दने )—तटाकवापीगृहकूपकर्त्तासदान्नदानाभिरतश्शुचिस्स्या-
त् ॥ विलासिनीनंदनजातहर्षोनरोभवेन्नंदनवर्षजन्मा ॥ १ ॥

( वि[२७]जये )—संग्रामधीरः सुतरांसुशीलोभूपालमान्योवदतांवरेण्यः ॥
दातादयालुः किलवैरिहंतायस्यप्रसूतिर्विजयाभिधाने ॥ १ ॥

( [२८]जये )—शास्त्रप्रसंगेविदुषांविषादीमान्योवदान्योरिपुगर्वहंता ॥
जयाभिलाषीविषयानुरक्तोजातोजयाब्देमनुजोमहौजाः ॥ १ ॥

( म[२९]न्मथे)—भूषाविभूषासहितश्चयोषाविलासशीलोऽमृतवाक्कलाज्ञः ॥
सङ्गीतनृत्याभिरतश्चभोक्तायोमन्मथाब्देजननंप्रपन्नः ॥ १ ॥

( [३०]दुर्मुखिनि )—क्रूरोद्धतोनिंद्यमतिश्चलुब्धोवक्रास्यबाह्वंघ्रिरघप्रियः
स्यात् ॥ विरुद्धभाषीबहुदुष्टचेष्टोयोहायनेदुर्मुखिनाम्निजातः ॥ १ ॥

( हेम[३१]लम्बिनि )—तुरंगहेमांबरधान्यरत्नैर्युतोनितांतंसुतदारयुक्तः ॥
समस्तवस्तुग्रहणैकबुद्धिर्योहेमलंबिप्रभवःपुमान्स्यात् ॥ १ ॥

( वि ( म ) [३२]लम्बिनि )—धूर्तोतिलुब्धोलसतांप्रपन्नःश्लेष्माधिकः
सत्त्वविवर्जितश्च ॥ प्रारब्धकार्येतितरांप्रलापीविमलंबिसंवत्सरसंभव-
स्स्यात् ॥ १ ॥

( वि[३३]कारिणि )—दुराग्रहीसर्वकलाप्रवीणस्सुवंचकश्चंचलधीश्चधूर्तः ॥
अनल्पजल्पस्स्वसुहृद्विकल्पोविकारिसंवत्सरजोनरस्स्यात् ॥ १ ॥

( [३४]शार्वर्याम् )—वणिक्कलायांकुशलोविलासीनैवानुकूलस्तुसुहृज्जना-
नाम् ॥ अनेकविद्याभ्यसनानुरक्तःसंवत्सरेशार्वरिनाम्निजातः ॥ १ ॥

( प्लवे[३५] )—कामीप्रकामंधनवांश्चशश्वत्सेवादरोदारहृदर्थतृप्तः ॥ सुगुप्तबुद्धिश्चपलस्वभावः प्लवाभिधानाब्दभवोनरस्स्यात् ॥ १ ॥

( शुभकृति[३६] )—सौभाग्यविद्याविनयैस्समेतःपुण्यैरगण्यैरपिदीर्घजीवी ॥ स्यान्मानवस्सूनुधनोरुसंपद्यस्यप्रसूतिःशुभकृत्समासु ॥ १ ॥

( शोभकृति[३७] )—सर्वोन्नतश्चारुगुणोदयालुः सत्कर्मकर्त्ताविजयीविशेषात् ॥ कांतोविनीतःशुभकृत्प्रवीणोयःशोभकृद्वत्सरसंभवःस्यात् ॥ १ ॥

( क्रोधिनि[३८] )—क्रूरेक्षणः क्रूरतरस्वभावः स्त्रीवल्लभःपर्वततुल्यगर्वः ॥ स्यादंतरायः परकार्यकालेक्रोधीभवेत् क्रोधिशरत्प्रसूतः ॥ १ ॥

( विश्वावसौ[३९] )—सत्पुत्रदारःसुतरामुदारःवरस्सदाचारपरोतिधीरः ॥ इष्टान्नभुक्सर्वगुणाभिरामोविश्वावसौयस्यभवेत्प्रसूतिः ॥ १ ॥

( पराभवे[४०] )—धनस्यधान्यस्यचनैवकिंचित्सुसंग्रहोत्यंतकठोरवाक्यः ॥ आचारतोल्पत्वशठत्वयुक्तःपराभवेयस्यभवेत्प्रसूतिः ॥ १ ॥ २० ॥

( प्लवंगे[४१] )—भवेत्सदा चंचलचित्तवृत्तिःनस्यात्प्रवृत्तिःखलुसाधुकार्ये ॥ धूर्तस्सदाचारविचारहीनःप्लवंगजोवैमनुजःकृशांगः ॥ १ ॥

( कीलके[४२] )—रूपेणमध्यःप्रियवाग्दयालुर्जलाभिलाषीत्वनुवेलमेव ॥ स्थूलांघ्रिसन्मौलिरलंबलीयाञ्जातोरिकीलःकिलकीलकाब्दे ॥ १ ॥

( सौम्ये[४३] )—पंडितोहिधनवान्बहुभोगीदेवतातिथिरुचिश्चशुचिस्स्यात् ॥ सात्त्विकःकृशकलेबरयष्टिःसौम्यवत्सरभवोमनुजस्तु ॥ १ ॥

( साधारणे[४४] )—इतस्ततस्संचलितोनुरक्तोलिपिक्रियायांकुशलोविवेकी ॥ क्रोधीशुचिर्भोगनिवृत्तचेताःप्राणीहिसाधारणजःप्रगीतः ॥ १ ॥

( विरोधिकृति[४५] )—महेश्वराराधनतत्परःस्यात्क्रोधीविरोधीसततंबहूनाम् ॥ पराङ्मुखस्तातवचस्यतीवविरोधिकृन्नाम्निहिजन्मयस्य ॥ १ ॥

( परिधाविनि[४६] )—विद्वान्सुशीलश्चकलाप्रवीणःसुधीश्चमान्योवसुधाधिपानाम् ॥ व्यापारसंप्राप्तमहत्प्रतिष्ठःपुमान् भवेद्वैपरिधाविनाम्नि ॥ १ ॥

( प्रमादिनि[४७] )—दुष्टाभिमानीकलहानुरक्तोलुब्धःकुटुंबाभिरतश्चदीनः ॥ स्यादल्पधीर्गर्हितकर्मकर्त्ताप्रमादिजन्मामनुजःप्रमादी ॥ १ ॥

( आनंदे[४८] )-स्याद्भूरिदानश्चतुरोतिदक्षःशश्वत्सुतानंदभरप्रपूरः ॥
प्राज्ञःकृतज्ञःसुतरांविनीतोप्यानंदजातोमनुजोवदान्यः ॥ १ ॥
( राक्षसे[४९] )-स्यात्क्रूरकर्माकलहानुरक्तस्संत्यक्तसत्कर्मविचारसारः ॥
दयाविहीनश्चससाहसोपिभवेन्नरोराक्षसवर्षजन्मा ॥ १ ॥
( नले[५०] )-सबुद्धिशालीजलसस्यसंपद्वैश्यानुवृत्तौकुशलःसुशीलः ॥
स्यादल्पवित्तोबहुपालकश्चजातोनलाब्देचपलोमनुष्यः ॥ १ ॥
( पिंगले[५१] )-पिंगेक्षणोगर्हितकर्मकर्तास्यादुत्थितश्चंचलवैभवाद्यः ॥
त्यागीशठोत्यंतकठोरवाक्योजातोनरःपिंगलनामधेये ॥ १ ॥
( कालयुक्तौ[५२] )-अनल्पजल्पःप्रियतामुपेतस्ससाधुबुद्धिर्विधिनावि-
युक्तः ॥ कविप्रसंगःकिलकालरूपोयःकालयुक्तिप्रभवःकृशांगः ॥ १ ॥
( सिद्धार्थिनि[५३] )-उदारचेताविलसत्प्रसादोरणांगणप्राप्तयशाःसुखी-
स्यात् ॥ नरेंद्रमंत्रीबहुपूजितार्थःसिद्धार्थिजातोमनुजःसमर्थः ॥ १ ॥
( रौद्रौ[५४] )-भयंकरःपालयितापशूनांशश्वत्प्रसादश्चपलोतिधूर्तः ॥
जातापकीर्तिःखलचित्तवृत्तिर्नरोतिरौद्रःखलुरौद्रिजन्मा ॥ १ ॥
(दुर्मतौ[५५])-स्ववाक्यनिर्वाहमहाभिमानीप्रसंगतोहीनतरोनरस्स्यात् ॥
कामीप्रकामंदुरितेप्रवृत्तोयोदुर्मतिर्दुर्मतिवर्षजातः ॥ १ ॥
( दुंदुभौ[५६] )-नित्यंनरेंद्रादरगौरवः स्याद्गजाश्वभूहेमसमन्वितश्च ॥
तौर्यत्रिकप्रीतिरतीवजातश्चेन्मानवोदुंदुभिनामवर्षे ॥ १ ॥
( रुधिरोद्गारिणि[५७] )-आरक्ताक्षःक्वचिदपिमहाकामदःकामिनीनांप्रा-
दुर्भावादतिकृशतनुर्जायतेत्यंतरोषः ॥ पादद्वंद्वेभवतिकुनखीहस्तयुग्मेथ-
वास्याच्छस्त्राद्दुखंव्रजतिरुधिरोद्गारिजन्मामनुष्यः ॥ १ ॥
( रक्ताक्षिणि[५८] )-आचारधर्माभिरतोनितांतंमनोभवाच्चारुतरोनरः-
स्यात् ॥ अन्याधिकत्त्वंसहतेनकिंचिद्रक्ताक्षिजातोक्षिरुजान्वितश्च ॥ १ ॥
( क्रोधने[५९] )-स्यादंतरायोहिपरस्यकार्यैतमोगुणाधिक्यभयंकरश्च ॥
परस्यवुद्धिंप्रहरेत्प्रकामंयोहायनेक्रोधननाम्निजातः ॥ १ ॥

( अंक्षये )—उपार्जितार्थव्ययकृन्नितांतंसेवारतेनिष्ठुरचित्तवृत्तिः ॥
सत्कार्यकेत्यल्पमनःप्रवृत्तिःक्षयाभिधानेजननंहियस्य ॥ १ ॥ ६० ॥

## अथ प्रभवादिषष्टिसंवत्सरनामानि—( दैवज्ञविलासे )

प्रभवोविभवःशुक्लःप्रमोदोथप्रजापतिः॥ आंगीरसःश्रीमुखश्चभावोथयुव वत्सरः॥ १ ॥ धात्वीश्वरौबहुधान्यःप्रमाथीविक्रमोवृषः॥ चित्रभानुःस्वभानु श्चतारणःपार्थिवोव्ययः ॥ २॥ सर्वजित्सर्वधारीचाविरोधीविकृतिःखरः ॥ नंदनोविजयश्चैवजयोमन्मथदुर्मुखौ ॥ ३ ॥ हेमलंबीवि(म) लंबीचविका रीशार्वरीप्लवः ॥ शुभकृच्छोभकृत्क्रोधीविश्वावसुपराभवौ ॥ ४ ॥ प्लवंगः कीलकःसौम्यःसाधारणविरोधिकृत् ॥ परिधावीप्रमादीस्यादानंदोराक्षसो नलः ॥ ५ ॥ पिंगलःकालयुक्तिश्चसिद्धार्थीरौद्रिदुर्मती ॥ दुंदुभीरुधिरो द्गारीरक्ताक्षीक्रोधनाक्षयौ ॥ ६ ॥ षष्टिस्तुवत्सराज्ञेयाःप्रभवाद्याइमेबुधैः॥

## अथ प्रभवादिषष्टिसंवत्सराभिमानिदेवतानांनामानि—( शैवागमे )

ब्रह्मविष्णुमहेशानागणेशोगणपस्तथा ॥ षडाननश्चवल्लीचगौरीब्राह्मी महेश्वरी ॥ १ ॥ कौमारीवैष्णवीचैववाराहैंद्रीतथैवच ॥ चामुंडिका- प्यरोगश्चभाजःपटरएवच ॥ २ ॥ पतंगःस्वर्णरोज्योतिष्मान्विभासश्चक श्यपः॥ रविःसूर्यश्चभानुश्चखगःपूषातथैवच ॥ ३ ॥ हिरण्यगर्भोथमरीच्यादि त्यौसवितातथा ॥ अर्कस्ततोभास्कराग्निजातवेदस्सहौजसः ॥ ४ ॥ ततो- जराप्रभुर्वैश्वानरनर्यापसावपि ॥ पङ्क्तिराथविसर्पिश्चमत्स्यकूर्मवराहकाः ॥ ५ ॥ नारसिंहोवामनश्चश्रीरामोभार्गवोहली ॥ कृष्णःकल्कीबुद्धदुर्गेया तुधानश्चभैरवः ॥ ६ ॥ हनूमाञ्छारदादाक्षायणीलक्ष्मीरितिस्मृताः ॥ अभिमानिन्यएतेषामब्दानांदेवताःक्रमात् ॥ ७ ॥ ६० ॥

## अथ प्रभवादिषष्टिसंवत्सराभिमानिदेवतास्वरूपाणि—(शैवागमे)

### ९३ तत्रादौ प्रभवाभिमानिब्रह्मध्यानम्—

अक्षाद्यंकितपाणिपद्ममभयंचिन्मुद्रिकांहस्तयोर्बिभ्राणंचतुराननंप्र-

विकसत्पद्मासनांतस्थितम् ॥ वक्षोभागविराजमानविशदश्रीब्रह्मसूत्रोज्ज्वलंवंदेहंप्रभवाभिधंकमलजंश्रेयोभिवृद्धिप्रदम् ॥ १ ॥ पद्मवर्णः ॥ १ ॥

९४ अथ विभवाभिमानिविष्णुदेवताध्यानम्-

भास्वत्किरीटंदरचक्रशार्ङ्गगदाभिरामंसहितंचतुर्भिः ॥ करैरनंतासनसन्निविष्टंध्यायेद्रमेशंविभवाधिनाथम् ॥ १ ॥ मेघश्यामवर्णः ॥ १ ॥

९५ अथ शुक्लाभिमानिमहेश्वरध्यानम्-

जटिलमुरगभूषाभूषितांगंत्रिणेत्रंशशधरमकुटांतंव्याघ्रचर्मोत्तरीयम् ॥ वृषवरकृतवाहंशुक्लसंज्ञंगिरिशंनमदमरमुनींद्रंशूलपाणिंनमामि ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

९६ अथ प्रमोदूताभिमानिगणेशध्यानम्-

करींद्रवक्त्रंशुभमेकदंतोज्ज्वलंप्रमोदूतकृताभिधानम् ॥ प्रत्यूहशांतिप्रदमाखुसंस्थंध्यायेद्धृदब्जेसततंगणेशम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९७ अथ प्रजापतिवत्सराभिमानिशक्तिगणपतिध्यानम्-

दंतींद्रवक्त्राकलितांसुशक्तिंचतुर्भुजांचंद्रकलावतंसाम् ॥ भक्तेष्टपाथोनिधिपूर्णचंद्रांवंदेप्रजोत्पत्तिकृताभिधानाम् ॥ १ ॥ रक्तवर्णा ॥ १ ॥

९८ अथ आंगीरसाभिमानिषण्मुखध्यानम्-

शक्त्युज्ज्वलैकबाहुंशशधरमकुटंमयूरमारूढम् ॥ आंगिरसनामधेयंषण्मुखमीडेमरेंद्रसेनान्यम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

९९ अथ श्रीमुखाभिमानिवल्लीदेवताध्यानम्-

चंद्रमुखींचारुदृशंकुक्कुटवाहांगुहादृतामनिशम् ॥ श्रीमुखसंज्ञांवल्लींश्रेयोवृद्धिप्रदामहंकलये ॥ १ ॥ पाटलवर्णा ॥ १ ॥

१०० अथ भावाभिमानिगौरीदेवताध्यानम्-

गौरींगिरींद्रतनयांवृषवरसंस्थांकलाधरांशशिनः ॥ भावाख्यामहमीडेभवकुतुकांभोधिपूर्णचंद्रांताम् ॥ १ ॥ मरकतवर्णा ॥ १ ॥

१०१ अथ युवाभिमानिब्राह्मीदेवताध्यानम्-

युवसंज्ञामहमीडेब्राह्मींब्रह्मादिवंदितांघ्रिताम् ॥ हंसप्रवरारूढांशंभुमनोहारिरूपसौभाग्याम् ॥ १ ॥ कनकवर्णा ॥ १ ॥

१०२ अथ धात्वभिमानिमाहेश्वरीध्यानम्-

माहेश्वरीहृदब्जेविलसतुसततंचधातुसंज्ञासा ॥ चंद्रावतंससहिताश्रेयोवृद्धिप्रदासदाशंभोः ॥ १ ॥ शुभ्रवर्णा ॥ १ ॥

१०३ अथ ईश्वराभिमानिकौमारीध्यानम्-

कौमारीमहमीडेसंपद्दात्रींसदाशुकारूढाम् ॥ तामीश्वराभिधानांशंकरतोषप्रदांस्वरूपेण ॥ १ ॥ पाटलवर्णा ॥ १ ॥

१०४ अथ बहुधान्याभिमानिवैष्णवीध्यानम्-

बहुधान्यनामधेयांसततंहृदयेनवैष्णवींकलये ॥ शंकरवामांकस्थांनमतामिष्टार्थदायिकामनिशम् ॥ १ ॥ मेघश्यामवर्णा ॥ १ ॥

१०५ अथ प्रमाथ्यभिमानिवाराहीध्यानम्-

वाराहींप्रणमामोधूर्जटिहर्षाब्धिपूर्णचंद्रांताम् ॥ श्रेयोभिवृद्धिदात्रींकृतनिजनाम्नींप्रमाथींति ॥ १ ॥ श्यामवर्णा ॥ १ ॥

१०६ अथ विक्रमाभिमानींद्राणीध्यानम्-

माहेंद्रींकलयामोविक्रमसंज्ञांवृषासनारूढाम् ॥ भासुरचंद्रकिरीटांभक्ताभीष्टप्रदांभियांशांत्यै ॥ १ ॥ कनकवर्णा ॥ १ ॥

१०७ अथ वि ( वृ ) षुवत्सराभिमानिचामुंडाध्यानम्-

चामुंडांचार्वंगीमहमिहवंदेवृषासनारूढाम् ॥ वि ( वृ ) षुनाम्नींसुरवंद्यांदैत्यकुलध्वंसकारिणीमनिशम् ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

१०८ अथ चित्रभानुवत्सराभिमान्यरोगदेवताध्यानम्-

अरोगाह्वयमीडेहंचित्रभानुंसदामुदे ॥ तुरंगमवरारूढंमकुटोज्ज्वलमस्तकम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१०९ अथ स्वभानुवत्सराभिमानिभ्राजदेवताध्यानम्-

आरोग्यसिद्धिदंनृणांस्वभानुंभ्राजसंज्ञकम् ॥ गजारूढंलसत्खड्गखेट-हस्तंनमाम्यहम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

११० अथ तारणाभिमानिपटरदेवताध्यानम्-

अंतर्हृदब्जेसततंकलयेपटराह्वयम् ॥ तारणंसूर्यगमनंशूलोद्भासिकरांबुजम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१११ अथ पार्थिववत्सराभिमानिपतंगदेवताध्यानम्-

पतंगंवृषभारूढंपार्थिवाह्वयमाश्रये ॥ शंखचक्रधरंदिव्यपीतांबरमहंभजे ॥ १ ॥ रक्तवर्णः ॥ १ ॥

११२ अथ व्ययाभिमानिस्वर्णरदेवताध्यानम्-

स्वर्णरंकोकिलारूढंव्ययसंज्ञकमाश्रये॥ चंद्रावतंसं जटिलंत्रिणेत्रंशूलभासुरम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

११३ अथ सर्वजिद्वत्सराभिमानिज्योतिष्मद्देवताध्यानम्-

सर्वजित्संज्ञकंवंदेज्योतिष्मंतमभीष्टदम् ॥ भृशुंडीपाशहस्ताब्जंव्याघ्रारूढंत्रिलोचनम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

११४ अथ सर्वधार्यभिमानिविभासदेवताध्यानम्-

विभासनामकंभानुंसर्वधारिकृताह्वयम् ॥ इष्टप्राप्त्यैसदावंदेसप्ताश्वरथमास्थितम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

११५ अथ विरोधिसंवत्सराभिमानिकश्यपदेवताध्यानम्-

मेरुशृंगासनस्थंतंविरोधीतिकृताह्वयम् ॥ कश्यपंपंचवदनंदशहस्तंनमाम्यहम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

११६ अथ विकृत्यभिमानिरविदेवताध्यानम्-

रविंविकृतिनामानंत्रिशीर्षंषड्भुजंभजे॥ पन्नगेश्वरमारूढंचारुपीतांबरावृतम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

११७ अथ खराभिमानिसूर्यदेवताध्यानम्—

खगवर्यसमारूढंनीलांबरसमावृतम् ॥ सूर्याभिधंखरंवंदेचतुर्वक्राष्ट-
हस्तकम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

११८ अथ नंदनाभिमानिभानुदेवताध्यानम्—

भानुंनंदननामानंभासाचारुपरिष्कृतम् ॥ मृगेंद्रवाहनंपंचवक्रंदशभु-
जंभजे ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

११९ अथ विजयाभिमानिखगदेवताध्यानम्—

षण्मुखंद्वादशभुजंव्याघ्रवाहनमास्थितम् ॥ व्याघ्रचर्मांबरधरंवंदेवि-
जयसंज्ञकम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

१२० अथ जयाभिमानिपूषदेवताध्यानम्—

पूषणंजयनामानंवरदंभक्तसंततेः ॥ शंखचक्रांकितकरद्वंद्वंहृदिसमा-
श्रये ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२१ अथ मन्मथाभिमानिहिरण्यगर्भदेवताध्यानम्—

हंसवर्याधिरूढंतंवीणामंडितहस्तकम् ॥ हिरण्यगर्भंवंदेहंमन्मथाख्यं
ममेष्टदम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२२ अथ दुर्मुख्यभिमानिमरीचिदेवताध्यानम्—

मरीचिंदुर्मुखाख्यानंमन्युमर्कटमास्थितम् ॥ विवृत्तास्यंजगद्भीतिदा-
यकंसंश्रयेमुदा ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

१२३ अथ हेमलंब्यभिमान्यादित्यदेवताध्यानम्—

आदित्यंतेजस स्थानंहेमलंबिकृताह्वयम् ॥ सप्तसप्तिसमारूढंजगतांनेत्र-
माश्रये ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टंसूर्यवत् नि० ५ ) ॥ १ ॥

१२४ अथ वि ( म ) लंब्यभिमानिसवितृदेवताध्यानम्—

वि ( म ) लंबिसंज्ञंमनसासवितारंस्मराम्यहम् ॥ चापबाणधरंदोर्भ्यां-
तुरंगवरवाहनम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२५ अथ विकार्यभिमान्यर्कदेवताध्यानम्-

अर्कंविकारिनामानंकर्कशंक्रकचायुधम् ॥ क्रव्याद्रसमारूढमेकने-त्रंनमाम्यहम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२६ अथ शार्वर्यभिमानिभास्करदेवताध्यानम्-

भास्करंशार्वरीसंज्ञंभासापूरितदिङ्मुखम् ॥ चक्रोज्ज्वलकरंवंदेभा-स्वद्रथसमाश्रितम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२७ अथ प्लवाभिमान्यग्निदेवताध्यानम्-

अग्निंनमामिविततज्वालामालंतमोपहम् ॥ अजारूढंचतुर्हस्तंद्विशीर्ष-प्लवसंज्ञकम् ॥ १ ॥ रक्तवर्णः ॥ ( शिष्टमग्निवत् नि० ४ ) ॥ १ ॥

१२८ अथ शुभकृदभिमानिजातवेदोदेवताध्यानम्-

जातवेदसमीडेहंशुभकृन्नामकंसदा ॥ आंदोलिकासमारूढंखड्गखेट-धरंशुभम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१२९ अथ शोभकृदभिमानिसहोजोदेवताध्यानम्-

सहौजसंशोभकृतंनृणामिष्टदमाश्रये ॥ शिबिकावाहनारूढंचामरद्वय-पाणिकम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३० अथ क्रोध्यभिमान्यजराप्रभुदेवताध्यानम्-

अजराप्रभुमीडेहंक्रोधीतिकृतनामकम् ॥ गोरथारूढमनिशंकुंतोज्ज्व-लकरांबुजम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३१ अथ विश्वावसुसंवत्सराभिमानिवैश्वानरदेवताध्यानम्-

वैश्वानरंभजेनित्यंविश्वावसुकृताह्वयम् ॥ नरवाहनमारूढंखड्गखेटध-रंशुभम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३२ अथ पराभवाभिमानिनर्यापसदेवताध्यानम्-

पराभवाह्वयंवंदेनर्यापसमुदर्चिषम् ॥ उत्तुंगतुरगारूढंपरशूज्ज्वलपा-णिकम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३३ अथ प्लवंगाभिमानिपङ्क्तिराधोदेवताध्यानम्-

पङ्क्तिराधसमीडेऽग्निंप्लवंगेतिसुविश्रुतम् ॥ श्वेताश्ववरमारूढंशार्ङ्गबाणधरंसदा ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३४ अथ कीलकाभिमानिविसर्पिदेवताध्यानम्-

विसर्पिणंहुतवहंकीलकाह्वयमाश्रये ॥ उत्तुंगगजमारूढंशूलोज्ज्वलकरांबुजम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१३५ अथ सौम्याभिमानिमत्स्यदेवताध्यानम्-

मत्स्यमूर्तिंहरिंवंदेशिरसासौम्यसंज्ञकम् ॥ शंखचक्रोज्ज्वलकरंभक्ताभीष्टप्रदायकम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१३६ अथ साधारणाभिमानिकूर्मदेवताध्यानम्-

कूर्माकृतिमहंवंदेमंदराचलधारिणम् ॥ कौमोदकीशार्ङ्गहस्तंसाधारणकृताह्वयम् ॥ १ ॥ कांचनवर्णः ॥ १ ॥

१३७ अथ विरोधिकृद्वत्सराभिमानिवराहदेवताध्यानम्-

दंष्ट्रारूढमहीभागंक्रोडरूपधरंहरिम् ॥ वरदाभयदंवंदेविरोधिकृदितिश्रुतम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१३८ अथ परीधाव्यभिमानिनृसिंहदेवताध्यानम्-

नृकेसरितनुंवंदेहरिंस्तंभविदारिणम् ॥ प्रह्लादहर्षदातारंपरीधाविकृताह्वयम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१३९ अथ प्रमादीचाभिमानिवामनदेवताध्यानम्-

छत्रोज्ज्वलकरंवंदेहरिंवामनरूपिणम् ॥ बलिप्रतापनकरंप्रमादीचकृताह्वयम् ॥ १ ॥ श्यामवर्णः दूर्वादलवत् ॥ १ ॥

१४० अथ आनंदाभिमानिश्रीरामदेवताध्यानम्-

जगदानंदजनकंसीतावल्लभमाश्रये ॥ राममानंदनामानंधृतकोदंडमार्गणम् ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१४१ अथ राक्षसाभिमानिश्रीपरशुरामदेवताध्यानम्-

कुठारप्रोज्ज्वलकरंजटामंडलमंडितम् ॥ भार्गवंराममाशासेराक्षसाभिधमंजसा ॥ १ ॥ कांचनवर्णः ॥ १ ॥

१४२ अथ नलाभिमानिबलरामदेवताध्यानम्-

सीरोद्भासिकरांभोजंनीलांबरसमावृतम् ॥ बलराममहंवंदेनलाह्वयमहर्निशम् ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

१४३ अथ पिंगलाभिमानिकृष्णदेवताध्यानम्-

कृष्णंपिंगलनामानंबर्हिबर्होज्ज्वलाकृतिम् ॥ नवनीतोज्ज्वलकरंनृत्यंतंहृदिसंश्रये ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१४४ अथ कालयुक्त्यभिमानिकल्किदेवताध्यानम्--

म्लेच्छावलिकृतद्वेषंकालयुक्तिकृताह्वयम् ॥ आश्रयेकल्किमारूढंधनुर्बाणकरंसदा ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१४५ अथ सिद्धार्थ्यभिमानिबुद्धदेवताध्यानम्-

सिद्धार्थिकृतनामानंबुद्धाकृतिमहंभजे ॥ नग्नंविरूपवपुषंस्त्रीप्रधर्षणकारणम् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

१४६ अथ रौद्रिवत्सराभिमानिदुर्गादेवताध्यानम्-

दुर्गांविपत्तिधुतयेरौद्रीतिकृतसंज्ञिकाम् ॥ ध्यायामिदैत्यहंत्रींतांरक्तास्वादनतत्पराम् ॥ १ ॥ नीलवर्णा ॥ १ ॥

१४७ अथ दुर्मत्यभिमानियातुधानदेवताध्यानम्-

यातुधानंवक्रमुखंचैकाक्षंदारुणाकृतिम् ॥ ध्यायाम्यनिष्टशांत्यर्थंदुर्मतीतिकताह्वयम् ॥ १ ॥ नीलवर्णः॥ १ ॥

१४८ अथ दुंदुभ्यभिमानिभैरवदेवताध्यानम्-

दुंदुभीतिकृताह्वानंसमस्तारिपुभैरवम् ॥ भैरवंश्ववरारूढंदिगंबरमुपाश्रये ॥ १ ॥ श्यामवर्णः ॥ १ ॥

१४९ अथ रुधिरोद्गार्यभिमानिहनूमद्देवताध्यानम्—

हनूमंतंवायुसुतंरुधिरोद्गारिसंज्ञकम् ॥ समुद्रलंघनोयुक्तंदीर्घलांगूलमाश्रये ॥ १ ॥ कनकवर्णः ॥ १ ॥

१५० अथ रक्ताक्ष्यभिमानिसरस्वतीदेवताध्यानम्—

सरस्वतींभासमानांवीणोज्ज्वलकरांबुजाम् ॥ रक्ताक्षिसंज्ञिकांदेवीं प्रपद्येवाग्विभूतिदाम् ॥ १ ॥ श्वेतवर्णा ॥ १ ॥

१५१ अथ क्रोधनाभिमानिदाक्षायणीदेवताध्यानम्—

दाक्षायणींक्रोधनाख्यांदक्षक्रतुविभञ्जनीम् ॥ शुकारूढांशूलधरांभजेभीष्टार्थसिद्धये ॥ १ ॥ कनकवर्णा ॥ १ ॥

१५२ अथ अक्षयाभिमानिलक्ष्मीदेवताध्यानम्—

प्रपद्येऽक्षयसंज्ञांतांलक्ष्मींक्षीराब्धिकन्यकाम् ॥ हंसारूढामिंदुमुखींपाणिद्वयकृतांबुजाम् ॥ १ ॥ स्वर्णवर्णा ॥ १ ॥ ६० ॥

---

१५३ अथ दक्षिणायनस्वरूपम्—( शैवागमे )

दक्षिणायनसंज्ञोवैश्यामोसौमंदलोचनः ॥ पीतवस्त्रोवहन्कुंडंकर्णिकारदलाकृतिः ॥ १ ॥ बीजांकुरशरावार्कमनिशंनरहस्तकः ॥ पूजितःसिद्धयेनित्यंधनधान्यसमृद्धये ॥ २ ॥ श्यामवर्णः ॥ १ ॥

१५४ अथ उत्तरायणस्वरूपम्—( शैवागमे )

उत्तरायणसंज्ञोसौशुभ्रवर्णोविशालदृक् ॥ मांजिष्ठवसनोपेतःस्वर्णमुक्ताविभूषणः ॥ १ ॥ पुस्तुकंदक्षिणेहस्तेवामेचरविबिंबकम् ॥ दधन्मुक्त्यैमुदेचस्यात्पूजनीयस्तुकीर्तये ॥ २ ॥ श्वेतवर्णः ॥ १ ॥ २ ॥

१५५ अथ अयनलक्षणम्—( भट्टभास्करीयेरत्नमालायाम् )

शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्चतदामरम् ॥ भवतिदक्षिणमन्यदृतुत्रयंनिगदितारजनीमरुतांचसा ॥ १ ॥ २ ॥

---

अथ अयनयोरुपयोगमाहसत्यव्रतः—( माधवीये )

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखेरवौ ॥ दक्षिणाशामुखेकुर्वन्नतत्फल-

मवाप्नुयात् ॥ १ ॥–॥ ( वैखानससंहितायाम् )मातृभैरववाराहनरसिंहत्रिविक्रमाः ॥ महिषासुरहंत्रीचस्थाप्यावैदक्षिणायने ॥ १ ॥–॥ ( मदनरत्नेज्योतिश्शास्त्रे ) गृहप्रवेशस्त्रिदशप्रतिष्ठाविवाहचौलव्रतबंधपूर्वम् ॥ सौम्यायनेकर्मशुभंप्रदिष्टंयद्गर्हितंतत्खलु दक्षिणेस्यात् ॥ १ ॥

अथ अयनयोःकर्तव्यदानकर्मविशेषाः–( दानचिंतामणौ )

तत्र उत्तरायणेदानानि–

( स्कांदे ) धेनुंतिलमयींराजन्दद्याद्यश्चोत्तरायणे ॥ सर्वान्कामानवाप्नोतिविंदते परमंसुखम् ॥ १ ॥–॥( विष्णुधर्मोत्तरे ) उत्तरेत्वयने विप्रावस्त्रदानंमहाफलम् ॥ तिलपूर्णमनड्वाहंदत्त्वारोगैःप्रमुच्यते ॥ १ ॥

अथ दक्षिणायनेदानकर्माणि–( भविष्योत्तरे )

सतिलैस्तंडुलैर्देवंपूजयेद्दक्षिणायने ॥ घृताभिषेकंवाकुर्यान्महापुण्यफलेच्छया ॥ १ ॥ घृतपूर्णेनभांडेनसच्छिद्रेणत्वहर्निशम् ॥ गव्येनाज्येनवाशंभोःप्रदद्याद्घृतकंबलम् ॥ २ ॥ सर्पिषारूपकंरम्यंकृत्वाश्रेयोभिवृद्धये ॥

अथ अयनयोर्जातगुणाः–( जातकाभरणे )

शश्वत्प्रसन्नोननुसूनुकांतासंतोषयुक्तोतितरांचिरायुः ॥ नरस्सदात्राणपरोप्युदारोभीरुश्चसौम्यायनजातजन्मा ॥ १ ॥ अकर्मगौरःकृषिकर्मकर्त्ताचतुष्पदांयोऽतिकठोरचित्तः ॥ शठोप्यसह्योननुमानवानांयाम्यायने योजननंप्रपन्नः ॥ २ ॥

१९६ अथ दक्षिणायनाभिमानिसूर्यदेवतास्वरूपम्–( शैवागमे )

श्रेयसेभूयसेनित्यंदक्षिणायनमाश्रये ॥ भास्वद्रथगतंसूर्यंचंद्रनक्षत्रसंवृतम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१९७ अथ उत्तरायणाभिमानिसोमदेवतास्वरूपम्–( शैवागमे )

क्लेशापनुत्तयेनित्यमुत्तरायणमाश्रये ॥ दिव्यस्यंदनमारूढंसूर्यादिग्रहसंयुतम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

अथ ऋतूनांस्वरूपाणि—( शैवागमे नृसिंहप्रासादेच )

## १५८ तत्रादौ वसंततुस्वरूपम्—

आद्यंवसंतमीडेहमासीनंव्याघ्रचर्मणि ॥ अक्षमालोद्यतकरंपंचाक्षर परायणम् ॥ १ ॥ पुष्पच्छत्रावृतश्श्रीमान्वसंतोभीष्टदायकः ॥ बद्धपद्मासनासीनःप्राङ्मुखोहसिताननः ॥ २ ॥ श्वेतांगोलोहिताक्षस्तुपीतांबर समन्वितः ॥ भस्मोद्धूलितसर्वांगोवसंतोस्तुमुदेमम ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १५९ अथ ग्रीष्मर्तुस्वरूपम्—

ग्रीष्माभिधोद्वितीयस्तुधूसरोरूक्षगात्रकः ॥ अक्षसूत्रार्कहस्तस्तुचंद्रशुभ्रातपत्रयुक् ॥ १ ॥ रोगसंतापनाशायपूजनीयोविपश्चिता ॥ ग्रीष्मंप्राङ्मुखमासीनंविष्टरेमुनिपूजिते ॥ १ ॥ कमंडलूज्ज्वलकरंनमामिशिरसा न्वहम् ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

## १६० अथ वर्षर्तुस्वरूपम्—

तृतीयस्तोयदर्तुस्तुहरिद्वर्णोरुणेक्षणः ॥ ताम्रवर्णशुकोपेतःनीलविद्रुमकुंडलः ॥ १ ॥ मीनमंकेदधानोयंतोयपूर्णंघटंपरे ॥ मेघमालावृतश्चैव विद्युत्वानथदीप्तिमान् ॥ २ ॥ हरितालदलैःपूज्योपुष्टिसंतुष्टिवृद्धये ॥ शिरसाप्रणमाम्यद्यवर्षाहर्षाभिधायिकाः ॥ १ ॥ ब्रुसीनिविष्टास्सततंदक्षिणामुखमास्थिताः ॥ हरिद्वर्णः ॥ १ ॥

## १६१ अथ शरद्तुस्वरूपम्—

शारदर्तुश्चतुर्थस्तुचंद्रगौरस्सुलोचनः ॥ कंठेमौक्तिकमालस्तुकर्णेचंद्राश्मकुंडलः ॥ १ ॥ चंद्रबिंबंकरेदक्षेवामेकुंभंसुधायुतम् ॥ दधानःपूजनीयोयमायुर्वृद्ध्यैसुखायच ॥ २ ॥ शारदोभविताह्यस्मत्प्रार्थितार्थप्रदायकः ॥ ऋतुः प्रत्यङ्मुखासीनःस्फाटिकंवलयंवहन् ॥ १ ॥ चंद्रगौरवर्णः ४ ॥

## १६२ अथ हेमंतर्तुस्वरूपम्—

हेमंतःपंचमोज्ञेयःकपिलश्शृंगकुंडली ॥ पीतवस्त्रसमावीतस्त्रिजटःकृष्णगोधिकः ॥ १ ॥ धान्यमंजरिकादक्षेवामेपात्रंसधान्यकम् ॥ पूज-

नीयोविभूत्यर्थंधान्यसंपद्विवृद्धये ॥ २ ॥ हेमंतऋतुरस्माकमुदङ्मुखमुपाश्रितः ॥ शुचिर्यज्ञोपवीतीचप्रसीदतुशुभप्रदः ॥ १ ॥ कपिलवर्णः ॥ १ ॥

### १६३ अथ शिशिरर्तुस्वरूपम्-

शिशिराख्योथषष्ठस्तुहरित्प्रांतारुणेक्षणः ॥ पीतकुंडलकर्णस्तुकंठेविद्रुममालकः १ ॥ मधूकसुमसूनांकःपात्रमर्कंकरांबुजे ॥ वामेधान्यशरावंचधारयन्निष्टवृद्धये ॥ २ ॥ शिशिरंशिरसानौमिऋतुमूर्ध्वमवस्थितम् ॥ सूर्यबिंबाहृतकरंपंचाक्षरजपोद्यतम् ॥ १ ॥ हरिद्वर्णः ॥ १ ॥ ६ ॥

( अत्रषड्ऋतुनिरूपणेतत्तत्स्वरूपनिरूपकांतिमश्लोकः—( शैवागमेशान्तिप्रकरणे) ॥—॥ तत्तदंतिमश्लोकान्यश्लोकोक्ततत्तत्प्रतिमालक्षणानिच-( नृसिंहप्रासादे) ॥ एवंचमतभेदेनप्रतिमायाःस्वरूपेभेदइतियत्रयस्याभिरुचिस्तदनुसारेणप्रतिमाकल्प्येत्याशयेन उभयोरुल्लेखः ॥ )

---

### अथ वसंतादिऋतुषुकर्त्तव्यदानानि-(दानचिंतामणौविष्णुधर्मोत्तरे)

स्नानानुलेपनादीनांवसंतेदानमिष्यते ॥ यानकानांतथाग्रीष्मेछत्राणां तदनंतरम् ॥ १ ॥—॥(देवीपुराणे) यःपुनर्विधिनावत्सदेवीमुद्दिश्यप्रावृषि ॥ विप्रेषुविप्रकन्यासुतिलादीन्संप्रयच्छति ॥ १ ॥ तस्यसातुष्टिमाप्नोतिशीघ्रमेवतुविघ्यया ॥—॥ ( विष्णुधर्मोत्तरे ) शरद्यन्नस्यधर्मज्ञवस्त्राणामपिहैमने ॥ वह्नेर्दानंनरःकृत्वासूर्यमुद्दिश्यचोदये ॥ १ ॥ शिशिरंसततं वह्नितर्पयित्वातथातिलैः ॥ कुल्माषंसुघृतंदत्त्वायथाशक्त्याद्विजातिषु २ ॥ कायाग्निदीप्तिमाप्नोत्यंशत्रुनाशंचविंदति ॥

---

### अथ वसंतादिऋतुषुजातगुणाः—( जातकाभरणे )

तत्रादौ(वसंते)—कंदर्परूपोमतिमान्प्रतापीसंगीतशास्त्रेगणितेप्रवीणः ॥ शस्त्रास्त्रशीलामलचित्तवृत्तिःवसंतजातोमनुजःप्रसन्नः ॥ १ ॥

( ग्रीष्मे )—ऐश्वर्यविद्याधनधान्ययुक्तोवक्त्राप्रलंबामलकेशपाशः ॥ भोगीभवेन्नातिविचारशीलोयोग्रीष्मकालेजननंप्रपन्नः ॥ १ ॥

( वर्षासु )—संग्रामधीरोमतिमान्प्रतापीतुरंगमप्रेमकरसुरूपः ॥ कफानिलात्मालनाविलासीवर्षोद्भवोवैपुरुषःसहर्षः ॥ १ ॥

(शरदि)—अपूर्णरोषःपुरुषोनिलात्मामानीधनीधर्मरुचिःशुचिःस्यात् ॥ रणप्रियोवाहनसंयुतश्चकृतौशरन्नाम्निचजन्मयस्य ॥ १ ॥

(हेमन्ते)—नरेंद्रमंत्रीचतुरोत्युदारोनरोभवेच्चारुगुणोपपन्नः॥ सत्कर्मधर्मानुरतोमनस्वीहेमंतजातःसततंविनीतः ॥ १ ॥

(शिशिरे)—मृष्टान्नपानानुरतोविनीतोगुरुप्रियःपुत्रकलत्रसौम्यः ॥ सत्कर्मवेषःपुरुषःसरोषोबलादिशालीशिशिरर्तुजन्मा ॥ १ ॥ ६ ॥

---

अथ षडृत्वभिमानिदेवतानांनामानि—(शैवागमे)

कामोग्निर्वरुणोगौरीसर्पईश्वरएवच ॥ एताःप्रकीर्तिताःषण्णामृतूनामधिदेवताः ॥ १ ॥

---

अथ षडृतूनामभिमानिदेवतानांस्वरूपाणि—(शैवागमे)

१६४ तत्रादौ वसंतर्त्वभिमानिकामदेवतास्वरूपम्—

वसंतकालनेतारंकामंकाम्यप्रदायकम् ॥ पुष्पबाणविनिर्भिन्नजगत्त्रयमहंभजे ॥ १ ॥ कांचनवर्णः ॥ १ ॥

१६५ अथ ग्रीष्मर्त्वभिमान्यग्निदेवतास्वरूपम्—

शुचिंग्रीष्मस्यनेतारंवह्निंमेषगतंविभुम् ॥ शक्तिस्रुक्स्रुवहस्ताढ्यंदेवंभक्तजनप्रियम् ॥ १ ॥ लोहितवर्णः ॥ १ ॥

१६६ अथ वर्षर्त्वभिमानिवरुणदेवतास्वरूपम्—

प्रचेतसमहंवंदेवर्षर्तोरधिदैवतम् ॥ नक्रारूढंपाशपाणिंलोकानांजीवनप्रदम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

१६७ अथ शरदृत्वभिमानिगिरिजादेवतास्वरूपम्—

गिरिजांशंकरार्धांगींशरत्कालाधिदेवताम् ॥ वंदेलोकैकजननींसर्वाभीष्टप्रदायिनीम् ॥ १ ॥ हरिद्वर्णा ॥ १ ॥

१६८ अथ हेमंतर्त्वभिमानिसर्पदेवतास्वरूपम्—

अहिंसर्पकुलाधीशंहेमंतस्याधिदैवतम् ॥ काद्रवेयंमहासत्त्वंभजेमांपातुसर्वदा ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१६९ अथ शिशिरर्त्वभिमानीश्वरदेवतास्वरूपम्-

शिशिरस्येश्वरंदेवंमहेशंवृषभध्वजम् ॥ वंदेत्रिपुरहंतारंसमेभीष्टंप्रयच्छतु ॥ १ ॥ श्वेतवर्णः ॥ १ ॥ ६ ॥

---

अथ चांद्रमानरीत्याचैत्रादिमासस्वरूपाणि-( शैवागमे )

१७० तत्रादौ चैत्रमासस्वरूपम्-

शंखचक्रोज्ज्वलकरंकिरीटोद्भासिमस्तकम् ॥ जगदानंदजनकंमधुमासमुपास्महे ॥ १ ॥ रक्तवर्णः ॥ १ ॥

१७१ अथ वैशाखमासस्वरूपम्-

कौमोदकीशार्ङ्गधरंमासंमाधवसंज्ञकम् ॥ गरुत्मद्वाहनारूढंवंदेभीष्टस्यसिद्धये ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१७२ अथ ज्येष्ठमासस्वरूपम्-

त्रिणेत्रंषड्भुजंब्रह्मसूत्रोज्ज्वलभुजांतरम् ॥ वैय्याघ्रवाहनारूढंशुक्रमासमुपास्महे ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१७३ अथ आषाढमासस्वरूपम्-

द्विशीर्षकंचतुर्बाहुंपन्नगेश्वरवाहनम् ॥ उपास्महेशुचिंमासंभक्ताभीष्टप्रदायकम् ॥ १ ॥ अरुणवर्णः ॥ १ ॥

१७४ अथ श्रावणमासस्वरूपम्-

नभोमासंनमाम्यद्यक्लेशानामपनुत्तये ॥ पंचवक्रंदशभुजंसारंगप्रवरस्थितम् ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

१७५ अथ भाद्रपदमासस्वरूपम्-

नमाम्यहंनभस्याख्यंमासमिष्टस्यसिद्धये ॥ चतुर्मुखंचाष्टभुजंहंसप्रवरसंस्थितम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

१७६ अथ आश्वयुजमासस्वरूपम्-

षण्मुखंद्वादशभुजंभल्लूकवरसंस्थितम् ॥ भक्ताभीष्टप्रदंनित्यमिषमासमुपास्महे ॥ १ ॥ अरुणवर्णः ॥ १ ॥

## १७७ अथ कार्तिकमासस्वरूपम्–

त्रिणेत्रंचारुजटिलंचारुचंद्रार्धशेखरम् ॥ कैलासशिखरारूढमूर्जेमासमुपास्महे ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १७८ अथ मार्गशीर्षमासस्वरूपम्–

वृषारूढंशूलपाणिंप्रमदापरिसेवितम् ॥ नमामिशिरसादेवंसहाख्यंमासमन्वहम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## १७९ अथ पुष्यमासस्वरूपम्–

शारिकावाहनारूढंखड्गखेटकसत्करम् ॥ ध्यायेहंमनसानित्यंसहस्यंमासमन्वहम् ॥ १ ॥ हारिद्वर्णः ॥ १ ॥

## १८० अथ माघमासस्वरूपम्–

चंद्रहासोज्ज्वलकरंशुकप्रवरवाहनम् ॥ ध्यायामीष्टकृतेनित्यंतपोमासमनन्यधीः ॥ १ ॥ हरिद्वर्णः ॥ १ ॥

## १८१ अथ फाल्गुनमासस्वरूपम्–

तपस्यंमासमीडेहंकोकिलप्रवरस्थितम् ॥ ब्रह्मसूत्रोज्ज्वलांसंचकिरीटांकितमस्तकम् ॥ १ ॥ पाटलवर्णः ॥ १ ॥ १२॥

---

## अथ चैत्रादिमासानांवर्णाः–( विष्णुधर्मोत्तरेकारणागमेच )

चैत्रोमधुर्लोहितश्चवैशाखोमाधवःसितः ॥ ज्येष्ठःशुक्रःश्वेतवर्णःशुचिराषाढकोरुणः ॥ १ ॥ श्रावणस्तुहरिद्वर्णोदेवतातुनभःस्मृतः ॥ भाद्रोनभस्यःश्वेतःस्यादाश्वयुग्रोहितोरुणः ॥ २ ॥ ऊर्जोवैकार्त्तिकश्श्वेतोमार्गशीर्षःसहास्सितः ॥ पुष्यःसहस्योहरितःमाघोपिहरितःस्मृतः ॥ ३ ॥ फाल्गुनोपितपस्याख्योवर्णतःपाटलःस्मृतः ॥ उक्तामासाधिदेवाश्चवर्णैस्ते पृथिवीपते ॥ ४ ॥

## अथ चैत्रादिद्वादशमासेषुतत्तन्मासकर्तव्यस्नानदानपूजोपायनादीनि–( भट्टभास्करीयेपाद्मवामनपुराणमहाभारतेषु )

तत्रादौ ( चैत्रे )–चैत्रेमासिविचित्राणिशयनान्यासनानिच ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेष्विति ॥ १ ॥

(वैशाखे)–वैशाखेविधिनास्नानंदेवनद्यादिकेबहिः ॥ हविष्यंब्रह्मचर्यंचभूशय्यानियमस्थितिः ॥ १ ॥ व्रतंदानंदमोदेविमधुसूदनपूजनम् ॥ अपिजन्मसहस्रोत्थंपापंदहतिदारुणम् ॥ २ ॥

(ज्येष्ठे)–उदकुंभांबुधेनूश्चतालवृंतंचचंदनम् ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंज्येष्ठमासिच ॥ १ ॥

(आषाढे)–उपानद्युगलंछत्रंलवणामलकानिच ॥ आषाढेवामनप्रीत्यैदातव्यानीहभक्तितः ॥ १ ॥

(श्रावणे)–घृतंचक्षीरकुंभांश्चघृतपक्कंफलानिच ॥ श्रावणेश्रीधरप्रीत्यैदातव्यानिदिनेदिने ॥ १ ॥

(भाद्रपदे)–मासिभाद्रपदेदद्यात्पायसंमधुसर्पिषी ॥ हृषीकेशप्रीणनार्थंदर्पणंसगुडोदनम् ॥ १ ॥

(आश्वयुजे)–सम्यक्स्थिरांगंवृषभंदधिचाम्लरसादिकम् ॥ प्रीत्यर्थंपद्मनाभस्यदेयमाश्वयुजेनरैः ॥ १ ॥

(कार्तिके)–रजतंकनकंदीपान्मणिमुक्ताफलादिकम् ॥ दामोदरस्यप्रीत्यर्थंप्रदद्यात्कार्तिकेनरः ॥ १ ॥

(मार्गशीर्षे)–खरोष्ट्राश्वनरागावःशकटान्यप्यजाविकम् ॥ दातव्याविष्णुसंप्रीत्यैमार्गशीर्षेनरोत्तमैः ॥ १ ॥

(पौषे)–पौषमासंतुकौंतेयचैकभुक्तेनयःक्षिपेत् ॥ सुभगोदर्शनीयश्चयशोभागीचजायते ॥ १ ॥

(माघे)–माघमासिचयःस्नायान्नैरंतर्येणभारत ॥ पौंडरीकफलंतस्यदिवसेदिवसेभवेत् ॥ १ ॥

(फाल्गुने)–फाल्गुनेव्रीहयोगावोवस्त्रंकृष्णाजिनान्वितम् ॥ गोविंदप्रीणनार्थायदातव्यंपुरुषर्षभ ॥ १ ॥ १२ ॥

---

अथ माघादिद्वादशमासेषुदानानि–(दानचिंतामणौविष्णुधर्मोत्तरे)

तत्रादौ (माघे)–तिलप्रदानान्माघेतुयाम्यंलोकंनगच्छति ॥

(फाल्गुने[2])—प्रियंगुंफाल्गुनेदत्त्वाप्रियोभवतिभूतले ॥
(चैत्रे[3])—चैत्रेचित्राणिवस्त्राणिदत्त्वासौभाग्यमश्नुते ॥
(वैशाखे[4])—अपूपानांप्रदानेनवैशाखेस्वर्गमश्नुते ॥
(ज्येष्ठे[5])—छत्रदानात्तथाज्येष्ठेसर्वान्कामानुत्समश्नुते ॥
(आषाढे[6])—आषाढेचंदनंदेयंसकर्पूरंमहाफलम् ॥
(श्रावणे[7])—श्रावणेवस्त्रदानेनकीर्तितंसुमहत्फलम् ॥
(भाद्रपदे[8])—प्रौष्ठपद्येतथामासिप्रदानंफाणितस्यच ॥
(आश्विने[9])—आश्विनेघृतदानेनरूपवानभिजायते ॥
(कार्तिके[10])—कार्तिकेदीपदानेनसर्वमौज्ज्वल्यमाप्नुयात् ॥
(मार्गशीर्षे[11])—लवणंमार्गशीर्षेतुदत्त्वासौभाग्यमश्नुते ॥
(पौषे[12])—पौषेकनकदानेनपरांपुष्टिंतथैवच ॥ ११ ॥

---

अथ चैत्रादिमासेषुजातानांगुणाः—(जातकाभरणे)

तत्रादौ (चैत्रे)—सत्कर्मविद्याविनयोपपन्नोभोगीनरःस्यान्मधुरान्नभोक्ता ॥ सत्पात्रदानानुरतश्चमंत्रीचैत्रोद्भवश्चापिविचित्रमंत्रः ॥ १ ॥

(वैशाखे)—सुतेषणःपुष्टिगुणाधिशालीपुमान्बलीयान्द्विजदेवभक्तः॥ कामीचिरायुर्जलयानशीलस्स्यान्माधवेबांधवसौख्ययुक्तः ॥ १ ॥

(ज्येष्ठे)—क्षमान्वितश्चंचलचित्तवृत्तिर्विदेशवासाभिरुचिश्चतीव्रः ॥ विचित्रबुद्धिःखलुदीर्घसूत्रोज्येष्ठोद्भवश्श्रेष्ठतरोनरस्स्यात् ॥ १ ॥

(आषाढे)—बहुव्ययोनल्पवचोविलासःप्रमादशीलोगुरुवत्सलश्च ॥ सदाग्निमांद्यश्शुभकर्मकृत्स्यादाषाढजोगाढतराभिमानः ॥ १ ॥

(श्रावणे)—पुत्रैश्चपौत्रैश्चकलत्रमित्रैस्सुखीचतातस्यनिदेशकर्त्ता ॥ लोकप्रसिद्धःकफवान्वदान्योयश्श्रावणेपुण्यगुणैः सपूर्णः ॥ १ ॥

(भाद्रपदे)—श्रीमान्भवेत्क्षीणकलेबरश्चदाताचकांतासुतसौख्ययुक्तः ॥ सुखैश्चदुःखैर्विकृतोहिमर्त्योधूर्तोभवेद्भाद्रपदेसुजन्मा ॥ १ ॥

(आश्वयुजे)—विद्वान्धनीराजकुलप्रियश्चसत्कार्यकर्त्ताबहुभृत्ययु-

कः ॥ दातागुणज्ञोबहुपुत्रसंततिस्स्यादाश्विनेऽश्वादिसमृद्धिभाजी ॥ १ ॥

( कार्तिके )—सत्कर्मकर्त्ताबहुवाग्विलासोधनीलसत्पंगुचितालकश्च ॥ कामंसकामःक्रयविक्रयार्थसत्कार्यकृत्कार्तिकजातजन्मा ॥ १ ॥

( मार्गशीर्षे )—सुतीर्थयात्रानिरतःसुशीलःकलाकलापेकुशलोविलासी ॥ परोपकर्त्ताधृतसाधुमार्गोमार्गोद्भवोवैविभवैस्समेतः ॥ १ ॥

( पुष्ये )—परोपकारीपितृवित्तहीनःकष्टार्जितार्थव्ययकृद्विधिज्ञः ॥ सुगुप्तमंत्रःकृतशास्त्रयुक्तःपौषेविशेषीपुरुषःकलावान् ॥ १ ॥

( माघे )—सन्मंत्रविद्वैदिकसाधुयोगोयोगोक्तविद्याभ्यसनानुयुक्तः ॥ बुद्धेर्विशेषाद्विजितारिसंघोमाघोद्भवस्स्यादनघोमनुष्यः ॥ १ ॥

(फाल्गुने)—परोपकारिकुशलीदयालुर्बलान्वितःकोमलकायशाली ॥ विलासिनीकेलिविधानशीलोयःफाल्गुनेफल्गुवचोविलासः ॥ १ ॥ १२ ॥

---

१८२ अथ चैत्रादिमासाभिमानिदेवतानांध्यानम्—(शारदातिलके)

आमार्गशीर्षमूर्जांतंकेशवाद्याहिदेवताः ॥ पूजाःक्रमेणमासेषुसर्वसंपत्समृद्धये ॥ १ ॥ (एषांलक्षणानिकेशवादिचतुर्विंशतिमूर्तिवत् नि० २) १२

---

अथ मेषादिमीनपर्यंतंद्वादशसंक्रांतीनांस्वरूपाणि—(ज्योतिषार्णवे)

१८३ तत्रादौ मेषसंक्रांतिस्वरूपम्—

जटिलावह्निरूपाचत्र्यक्षाशार्दूलवाहना ॥ कपालाभयहस्तास्यादेकवक्त्राकरालिका ॥ १ ॥ अस्मन्मुदेसदाभूयान्मेषसंक्रांतिरादिमा ॥ रक्तवर्णा ॥ १ ॥

१८४ अथ वृषभसंक्रांतिस्वरूपम्—

एकवक्त्राद्विहस्ताचत्रिणेत्रासिंहवाहना ॥ श्वेतवर्णामहाघोराकपालाभयसंयुता ॥ १ ॥ द्वितीयावृषसंक्रांतिस्सदाभूयान्मुदेमम ॥ श्वेतवर्णा ॥ १ ॥

१८५ अथ मिथुनसंक्रांतिस्वरूपम्—

विरूपाक्षीहारिद्वर्णात्रिणेत्रासूकरस्थिता ॥ अभयंचकपालंचदधाने-

कमुखीशुभा ॥ १ ॥ मिथुनाख्यातुसंक्रांतिरिष्टसिध्यैसदास्तुवः ॥ हरिद्वर्णा ॥ १ ॥

### १८६ अथ कर्काटकसंक्रांतिस्वरूपम्–

महोदरीचैकवक्त्राकटकाख्याशुनिस्थिता ॥ पाटलांगीद्विहस्ताचकपालाभयधारिणी ॥ १ ॥ पाटलवर्णा ॥ १ ॥

### १८७ अथ सिह्मसंक्रांतिस्वरूपम्–

कपालचामरकरारक्तागर्दभसंस्थिता ॥ जिह्लिकासिंहसंक्रांतिरेकवक्त्राप्रसीदतु ॥ १ ॥ रक्तवर्णा ॥ १ ॥

### १८८ अथ कन्यासंक्रांतिस्वरूपम्–

कृष्णाननारक्तदेहात्रिणेत्रागजसंस्थिता ॥ सिंहिकानामविज्ञेयाकपालाभयशोभिता ॥ १ ॥ कन्यासंक्रांतिरित्युक्तापितृभीतिकराशुभा ॥ मुखेकृष्णवर्णा ॥ देहेरक्तवर्णा ॥ १ ॥

### १८९ अथ तुलासंक्रांतिस्वरूपम्–

एडाननानीलवर्णाकुक्कुटस्थातुलाभिधा ॥ मंदात्रिणेत्रसहिताकपालाभयधारिणी ॥ १ ॥ नीलवर्णा ॥ १ ॥

### १९० अथ वृश्चिकसंक्रांतिस्वरूपम्–

अजारूढानीलवर्णात्रिणेत्राह्लादिनीमता ॥ कपालशक्तिहस्ताचसंक्रांतिर्वृश्चिकाभिधा ॥ १ ॥ नीलवर्णा ॥ १ ॥

### १९१ अथ धनुस्संक्रांतिस्वरूपम्–

महिषस्थात्रिणेत्राचचित्रवर्णोज्ज्वलाभिधा॥ कपालाभयहस्ताचधनुस्सक्रांतिरुच्यते ॥ १ ॥ चित्रवर्णा ॥ १ ॥

### १९२ अथ मकरसंक्रांतिस्वरूपम्–

जपाकुसुमवर्णाचत्रिणेत्रादंष्ट्रिकानना ॥ कपालवज्रहस्ताचराक्षसी चोष्ट्रवाहना॥ १ ॥ भूयान्मकरसंक्रांतिरभीष्ठफलदायिनी॥ रक्तवर्णा॥ १ ॥

## १९३ अथ कुंभसंक्रांतिस्वरूपम्-

भंजिकातुरगारूढानीलवर्णामहोदरी ॥ कपालाभयहस्ताचकुंभसंक्रांतिरीरिता ॥ १ ॥ नीलवर्णा ॥ १ ॥

## १९४ अथ मीनसंक्रांतिस्वरूपम्-

भल्लूकवरमारूढावक्रानाम्नीत्रिलोचना ॥ मीनाख्यारुणवर्णास्यात्कपालाभयसंयुता ॥ १ ॥ अरुणवर्णा ॥ १ ॥ १२ ॥

---

### अथ द्वादशसंक्रांतिनामानि-( ज्योतिषार्णवे )

करालीचमहाघोराविरूपाक्षीमहोदरी ॥ जिंहिकासिंहिकामंदाह्लादिनीचोज्ज्वलामता ॥ १ ॥ राक्षसीभंजिकावक्राचेतिसंक्रांतयःक्रमात् ॥ १२ ॥

### अथ द्वादशसंक्रांतिवाहनानि-( ज्योतिषार्णवे )

व्याघ्रसिंहवराहाश्वशुनकोगर्दभोगजः ॥ कुक्कुटाजौचमहिषश्वोष्ट्रोश्वोऋक्षएवच ॥ १ ॥ एतानिवाहनानिस्युःसंक्रांतीनामजादितः ॥ १२ ॥

### अथ संक्रांतिषुदानान्याहविश्वामित्रः-( भट्टभास्करीये )

मेषसंक्रमणेभानोर्मेषदानंमहाफलम् ॥ वृषसंक्रमणेदानंगवांप्रोक्तंतथैवच ॥ १ ॥ वस्त्रान्नपानयानानिमिथुनेविहितानितु ॥ घृतधेनुप्रदानंतुकर्कटेपरिशस्यते ॥ २ ॥ ससुवर्णपात्रदानंसिंहेचविहितंसदा ॥ कन्याप्रवेशेवस्त्राणांसुरभीणांतथैवच ॥ ३ ॥ तुलाप्रवेशेधान्यानांबीजानामेवचोत्तमम् ॥ कीटप्रवेशेवस्त्राणांवेश्मनांदानमेवच ॥ ४ ॥ धनुःप्रवेशेवस्त्राणांयानानांचमहाफलम् ॥ मृगप्रवेशेदारूणांदानमग्नेस्तथैवच ॥ ५ ॥ कुंभप्रवेशेदानंतुगोभ्यस्तृणजलस्यच ॥ मीनप्रवेशेह्यम्लानमाल्यानांमापिचोत्तमम् ६ ॥

---

### अथ द्वादशमासाभिमानिद्वादशादित्यानांनामानि-( शैवागमे )

धातार्यमाचमित्रश्चाप्यरुणश्चंद्रएवच ॥ विवस्वत्त्वष्टृविष्ण्वंशुभगपूषणएवच ॥ १ ॥ पर्जन्यश्चद्वादशैतेसंक्रांतीनांहिदेवताः ॥ १२ ॥

अथ द्वादशमासाभिमानिद्वादशादित्यदेवताध्यानम्—( शैवागमे—श्लोकैः ) ( वाक्यैःश्रीविष्णुभागवते—रश्मयस्तु कूर्मपुराणे )

१९४ तत्रादौ धातृसूर्यध्यानम्—

धाताकृतस्थलीहेतिर्वासुकीरथकृन्मुने ॥ पुलस्त्यस्तुंबुरुरितिमधुमासंनयंत्यमी ॥ १ ॥ धाताशुभस्यमेदाताभूयोभूयोपिभूयसः ॥ रश्मिजालसमाश्लिष्टस्तमस्तोमविनाशनः ॥ २ ॥ मेषेमासिधातासूर्यः ॥ अप्सराःकृतस्थली ॥ गंधर्वस्तुंबरुः ॥ पुलस्त्यऋषिः ॥ पाशस्थानीयो वासुकिः ॥ रथकृदाख्योवर्धकिः ॥ हेतिर्नामाराक्षसः ॥ रश्मयोष्टसहस्राणि ॥ रक्तवर्णः ॥ १ ॥

१९५ अथ अर्यमसूर्यध्यानम्—

अर्यमापुलहोथोर्जःप्रहेतिःपुंजिकस्थली ॥ नारदःकच्छनीरश्चनयंत्येतेस्ममाधवम् ॥ १ ॥ मेरुशृंगांतरचरःकमलाकरबांधवः ॥ अर्यमास्तुसदाभूत्यैभूयस्यैप्रणतस्यमे ॥ २ ॥ वृषभेमासिअर्यमासूर्यः ॥ पुलहऋषिः ॥ अप्सराः पुंजिकस्थली ॥ नारदाख्योगंधर्वः ॥ कच्छनीराख्योनागः ॥ ऊर्जाख्योवर्धकिः ॥ प्रहेतीराक्षसः ॥ रश्मयोदशसहस्राणि ॥ पीतवर्णः ॥ १ ॥

१९६ अथ मित्रसूर्यध्यानम्—

मित्रोत्रिःपौरुषेयोथतक्षकोमेनकाहहा ॥ रथस्वनइतिह्येतेशुक्रमासं नयंत्यमी ॥ १ ॥ निशानिवारणपटुरुदयाद्रिकृताश्रयः ॥ मित्रोस्तुमम मोदायतमस्तोमविनाशनः ॥ २ ॥ मिथुनमासिमित्रस्सूर्यः ॥ अत्रिऋषिः ॥ मेनकाप्सराः ॥ हाहागंधर्वः ॥ तक्षकोनागः ॥ रथस्वनाख्यो वर्धकिः । पौरुषेयोराक्षसः ॥ रश्मयस्सप्तसहस्राणि ॥ अरुणवर्णः ॥ १ ॥

१९७ अथअरुणसूर्यध्यानम्—

वसिष्ठोह्यरुणोरंभासहजन्यस्तथाहुहूः ॥ शुकश्चित्रस्वनश्चैवशुचिमासंनयंत्यमी ॥ १ ॥ सूर्यस्स्यंदनमारूढअर्चिर्मालीप्रतापवान् ॥ काल-

भूतःकामरूपोह्यरुणस्सेव्यतेमया ॥ २ ॥ कर्कंकेमासिअरुणस्सूर्यः ॥ वसिष्ठऋषिः ॥ रंभाऽप्सराः । हूहूर्गंधर्वः ॥ शुकाख्योनागः ॥ चित्रस्वनो वर्धकिः॥सहजन्योराक्षसः ॥ रश्मयःपंचसहस्राणि ॥ श्यामवर्णः ॥ १ ॥

## १९८ अथ इंद्रसूर्यध्यानम्-

इंद्रोविश्वावसुश्श्रोताचेलापुत्रस्तथांगिराः ॥ प्रम्लोचाराक्षसश्शर्योनभोमासंनयंत्यमी ॥ १ ॥ सहस्ररश्मिसंवीतमिंद्रंवरदमाश्रये ॥ शिरसा प्रणमाम्यद्यश्रेयोवृद्धिप्रदायकम् ॥ २ ॥ सिंहेमासिइंद्रस्सूर्यः ॥ अंगिराऋषिः ॥ विश्वावसुर्गंधर्वः॥ प्रम्लोचाऽप्सराः॥ इलापुत्रोनागः॥श्रोत्राख्योवर्धकिः ॥ शर्याख्योराक्षसः॥रश्मयस्सप्तसहस्राणि॥श्वेतवर्णः॥ १ ॥

## १९९ अथ विवस्वत्सूर्यध्यानम्-

विवस्वानुग्रसेनश्चव्याघ्रआसारणोभृगुः ॥ अनुम्लोचाश्शंखपालोनभस्याख्यंनयंत्यमी ॥ १ ॥ जगन्निर्माणकर्त्तारंसर्वदिग्व्याप्ततेजसम् ॥नभोग्रहमहादीपंविवस्वंतंनमाम्यहम् ॥ २॥ कन्यामासिविवस्वान्सूर्यः ॥ भृगुऋषिः ॥ अनुम्लोचाप्सराः ॥ उग्रसेनोगंधर्वः ॥ शंखपालोनागः ॥आसारणोवर्धकिः ॥ व्याघ्रोराक्षसः ॥ रश्मयोदशसहस्राणि॥ बभ्रुवर्णः ॥ १ ॥

## २०० अथ त्वष्टृसूर्यध्यानम्-

त्वष्टाऋचीकोरक्षश्चकंबलाख्यस्तिलोत्तमा ॥ ब्रह्मरातोथशतजिद्धृतराष्ट्रइषंभरा ॥ १ ॥ त्वष्टाशुभायमेभूयाच्छिष्टावलिनिषेवितः ॥ नानाशिल्पकरोनानाधातुरूपःप्रभाकरः ॥ २ ॥ तुलामासित्वष्टासूर्यः ॥ ब्रह्मरातऋषिः ॥ तिलोत्तमाऽप्सराः॥ धृतराष्ट्रोगंधर्वः ॥ कंबलाख्योनागः ॥ शतजिन्नामावर्द्धकिः ॥ ऋचीकाख्योराक्षसः ॥ रश्मयोष्टसहस्राणि ॥ चित्रवर्णः ॥ १ ॥

## २०१ अथ विष्णुसूर्यध्यानम्-

विष्णुरश्वतरोरंभासूर्यवर्चाश्चसत्यजित् ॥ विश्वामित्रोमहाप्रेतऊर्जमासंनयंत्यमी ॥ १ ॥ भानुमंडलमध्यस्थंवेदत्रयनिषेवितम् ॥ गायत्री-

प्रतिपाद्यंतंविष्णुंभक्त्याऽनमाम्यहम् ॥ २ ॥ वृश्चिकेमासिविष्णुस्सूर्यः ॥ विश्वामित्रऋषिः ॥ रंभाऽप्सराः ॥ सूर्यवर्चागंधर्वः ॥ सत्यजिन्नामावर्धकिः ॥ अश्वतरोनागः । महाप्रेतोराक्षसः ॥ रश्मयःषट्सहस्राणि ॥ अरुणवर्णः ॥ १ ॥

## २०२ अथ अंशुसूर्यध्यानम्—

अथांशुःकाश्यपस्ताक्ष्र्यऋतसेनस्तथोर्वशी ॥ विद्युच्छत्रुर्महाशंखस्सहोमासंनयंत्यमी ॥ १ ॥ सदाविद्रावणरतोजगन्मंगलदीपकः ॥ मुनींद्रनिवहस्तुत्योभूतिदोंशुर्भवेन्मम ॥ २ ॥ धनुर्मासिअंशुस्सूर्यः । काश्यप ऋषिः ॥ उर्वश्यप्सराः ॥ ऋतसेनोगंधर्वः ॥ महाशंखोनागः ॥ ताक्ष्र्यो वर्धकिः ॥ विद्युच्छत्रूराक्षसः ॥ रश्मयोनवसहस्राणि ॥ हरिद्वर्णः ॥ १ ॥

## २०३ अथ भगसूर्यध्यानम्—

भगस्स्फूर्जोरिष्टनेमिरूर्णआयुश्चपंचमः ॥ कर्कोटकःपूर्वचित्तिःपौषमासंनयंत्यमी ॥ १ ॥ तिथिमासऋतूनांचवत्सरायनयोरपि ॥ घटिकानांचयःकर्ताभगोभाग्यप्रदोस्तुमे ॥ २ ॥ मकरेमासिभगस्सूर्यः । अरिष्टनेमिर्ऋषिः ॥ पूर्वचित्तिरप्सराः ॥ ऊर्णोगंधर्वः ॥ कर्कोटकोनागः ॥ आयुर्वर्धकिः ॥ स्फूर्जोराक्षसः ॥ रश्मयएकादशसहस्राणि ॥ रक्तवर्णः ॥ १ ॥

## २०४ अथ पूषसूर्यध्यानम्—

पूषाधनंजयोधातासुषेणस्सुरुचिस्तथा ॥ घृताचीगौतमश्चेतितपोमासंनयंत्यमी ॥ १ ॥ पूषातोषायमेभूयात्सर्वपापापनोदनात् ॥ सहस्रकरसंवीतस्समस्ताशांतरांतरः ॥ २ ॥ कुंभेमासिपूषासूर्यः ॥ गौतमऋषिः ॥ घृताच्यप्सराः ॥ सुरुचिर्गंधर्वः ॥ धनंजयोनागः ॥ सुषेणोवर्धकिः ॥ धाताराक्षसः ॥ रश्मयष्षट्सहस्राणि ॥ अलक्तकवर्णः ॥ १ ॥

## २०५ अथ पर्जन्यसूर्यध्यानम्—

क्रतुर्वर्चाभरद्वाजःपर्जन्यस्सेनजित्तथा ॥ विश्वश्चैरावतश्चैवतपस्याख्यंनयंत्यमी ॥ १ ॥ प्रपंचंप्रतपन्भूयोवृष्टिभिर्मादयन्पुनः ॥ जगदानं-

दजनकःपर्जन्यःपूज्यतेमया ॥ २ ॥ मीनेमासिपर्जन्यस्सूर्यः ॥ भरद्वाजऋषिः ॥ वर्चागंधर्वः ॥ ऐरावतोनागः ॥ सेनजिद्वर्धकिः ॥ विश्वोराक्षसः ॥ रश्मयोनवसहस्राणि ॥ अरुणवर्णः ॥ १ ॥

अथ एतेषां द्वादशादित्यानां रथाश्वाः-( विष्णुपुराणे )

हरिद्वर्णाः । छंदोनामानः । सप्तसंख्याकाः ॥ तेषांपुरोगंता सप्तिनामा प्रधानःएकःअश्वश्च वर्तते ॥

अत्रद्वादशादित्यानांनामानिद्वादशमासप्रवर्तकत्वंच-( विष्णुपुराणे )

( अन्यत्रव्यत्यासेनोक्तिस्तुकल्पभेदपरेतिज्ञेयम् )

२०६ अथ एतेषांद्वादशादित्यानांलक्षणानि-( पद्मपुराणे )

मर्तांडंद्विभुजंरक्तंरक्तांबरधरंस्थितम् ॥ पृष्ठभागेशिरश्चक्रंस्थानेविमलमंडलम् ॥ १ ॥ बिभ्राणंकमलद्वंद्वंहस्ताभ्यांचकिरीटिनम् ॥ उरःप्रदेशेविमलंस्यमंतकमहामणिम् ॥ २ ॥ समाश्वमेकचक्रंचभावयेरथमास्थितम् ॥ १ ॥

अथ एतेषांवर्णाः-( पद्मपुराणे )

रक्तःपीतोरुणःश्यामःश्वेतोबभ्रुश्चकर्बुरः ॥ अरुणोहरितश्चैवशोणः कांतनिभोरुणः ॥ १ ॥ आदित्यानामिमेवर्णाद्वादशानांक्रमात्स्मृताः ॥

२०७ अथ अधिमासक्षयमासयोर्लक्षणे-( शिरोमणौ )

असंक्रांतिमासोधिमासःस्फुटंस्याद्विसंक्रांतिमासःक्षयाख्यःकदाचित् ॥ क्षयःकार्तिकादित्रयेनान्यथास्यात्तदावर्षमध्येधिमासद्वयंच ॥ १ ॥ ( अधिमासस्यापिनिजमासदेवतैव देवता ) ( तत्स्वरूपमपिनिजमासस्वरूपवत् ६ नि० ) ॥

अथाधिकमासेकर्तव्यदानानि-( ब्रह्मवैवर्ते )

अधिमासेतुसंप्राप्तेत्रयस्त्रिंशदपूपकम् ॥ सगुडाज्यफलंदद्यात्कांस्यपात्रप्रतिष्ठितम् ॥ १ ॥ जनार्दनस्यप्रीत्यर्थंतन्मूर्तिंचहिरण्मयीम् ॥

२०८ अथ मकरसंक्रांतिस्वरूपम्—(ज्योतिषरत्नाकरे)

द्विमुखंकृष्णवर्णंचचतुर्बाहुंत्रिलोचनम् ॥ सप्तहस्तंत्रिपादंचद्विशीर्षं चोर्ध्वदृष्टिकम् ॥ १ ॥ सप्तायुधधरंदक्षेमुसलंचासिबाणकौ ॥ गदांवामे चबिभ्राणंखेटंपात्रंशरासनम् ॥ २ ॥ प्रख्यातंक्रूररूपंतन्मकरक्रांति-लक्षणम् ॥ कृष्णवर्णः ॥ १ ॥

---

अथ वारभेदेनसप्तविधमकरसंक्रान्तीनांस्वरूपाणि—(ज्योतिषार्णवे)—(सर्वाःकृष्णवर्णाः)

२०९ तत्रादौ भानुवारेघोरानाम्नीसंक्रान्तेःस्वरूपम्—

मकरक्रांतिरर्केतुघोरानाम्नीतुसिंहगा ॥ वीणासिजीर्णशूर्पाणिसित-पद्मंशरासनम् ॥ १ ॥ तुलादंडमहींद्रंचदधानासप्तभिःकरैः ॥ १ ॥

२१० अथ सोमवारेध्वांक्षीसंक्रान्तेःस्वरूपम्—

इंदुवारेतुसंक्रांतिर्ध्वांक्षीशार्दूलवाहना ॥ असिंशूर्पंसितांभोजंतुलादं-डंशरासनम् ॥ १ ॥ सर्पंचक्रकचंचैवबिभ्राणावरदास्तुमे ॥ १ ॥

२११ अथ मंगलवारेमहोदरीसंक्रान्तेःस्वरूपम्—

कुजवारेतथाक्रांतिर्वराहवरवाहना ॥ महोदरीतिविख्याताजीर्णशू-र्पंसितांबुजम् ॥ १ ॥ तुलादंडंचापसर्पौक्रकचंक्षुरिकांतथा ॥ बिभ्रा-णावरदाभूयात्सर्वदारिष्टशांतये ॥ २ ॥ १ ॥

२१२ अथ बुधवारेमंदाकिनीसंक्रान्तेःस्वरूपम्—

मंदाकिनीसौम्यवारेखरप्रवरसंस्थिता ॥ सितपद्मशरासेचतुलादंडं फणींद्रकम् ॥ १ ॥ क्रकचक्षुरिकाबाणान्बिभ्राणाशुभदासदा ॥ १ ॥

२१३ अथ गुरुवारेमंदासंक्रान्तेःस्वरूपम्—

सुरेज्यवारेमंदाख्यागजप्रवरगाशुभा ॥ शरासनतुलादंडौनागेंद्रंक्रक-चंशरान् ॥ १ ॥ क्षुरिकांभिंडिवालंचदधानाबाहुभिर्मुदा ॥ १ ॥

२१४ अथ शुक्रवारेमिश्रिकासंक्रान्तेःस्वरूपम्-

असुरेंद्रगुरोर्वारेमिश्रिकामहिषासना ॥ तुलादंडमहींद्रचक्रकचंक्षुरिकांतथा ॥ १ ॥ विशिखंभिंडिवालंचकुंतंचापिविभर्त्यसौ ॥ १ ॥

२१५ अथ शनिवारेराक्षसीसंक्रान्तेःस्वरूपम्-

भानुपुत्रस्यवारेतुराक्षसीतुरगस्थिता ॥ जिह्लगक्रकचौचापिक्षुरिकां बाणमेवच ॥ १ ॥ भिंडिवालंचकुंतंचभुशुंडींबिभ्रतीकरैः ॥ १ ॥

---

२१६ अथ संक्रांतिसामान्यलक्षणम्-( ज्योतिषसंग्रहे )

अष्टबाहुश्चतुर्वक्राह्यष्टकर्णाष्टलोचना ॥ षष्टियोजनविस्तीर्णाशतयोजनमुन्नता ॥ २ ॥ सप्तायुधकरापूज्याप्रलंबोष्ठीत्रिपादिका ॥ ऊर्ध्वकेशीविरूपाक्षीसंक्रांतिःपुरुषाकृतिः ॥ १ ॥ नीलवर्णा ॥ १ ॥

---

अथ करणप्रवेशभेदाद्विशेषेणासामेकादशस्वरूपाणि-

( ज्योतिषसंग्रहे )

२१७ तत्रादौ बवकरणेप्रविष्टसंक्रान्तेःस्वरूपम्-

सिंहोपविष्टश्चभुशुंडिधारीपुन्नागशुक्लांबरविद्रुमाणि ॥ कस्तूरिकांचैवसुहेमपात्रमन्नंचभुङ्क्तेहिबवेविवस्वान् ॥ १ ॥ नीलवर्णः ॥ १ ॥

२१८ अथ बालवकरणेप्रविष्टसंक्रान्तेःस्वरूपम्--

व्याघ्रोपविष्टोरुणवस्त्रजातीप्रसूनमुक्ताफलचंदनानि ॥ कांस्यंचपात्रंसहभिंडिवालंधत्तेरविः पायसभुक्चबालवे ॥ १ ॥ नीलवर्णः ॥ १ ॥

२१९ अथ कौलवकरणप्रविष्टसंक्रान्तेःस्वरूपम्-

स्थित्वावराहेबकुलानिधृत्वाचित्रांबरःकुंकुमभृत्सहासिः ॥ भक्ष्यौदनोराजितभूषणश्चसताम्रपात्रःखलुकौलवेर्कः ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२० अथ तैतिलप्रविष्टसंक्रान्तेःस्वरूपम्--

जंबूकेरदंडधरश्चमल्लिकाप्रसूनगोरोचनपीतवस्त्रः ॥ धत्तेह्ययःपात्रमपूपभोजनोमाणिक्यभूषामपितैतिलेर्कः ॥ १ ॥ नीलवर्णः ॥

२२१ अथ गरप्रविष्टसंक्रान्तेःस्वरूपम्--

गर्जोपविष्टस्सधनुस्सलाक्षोगोमेधिकालंकरणःपयःपिबन् ॥ नीलानिवस्त्राणिचसीसपात्रंजपाप्रसूनानिगरेदधाति ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२२ अथ वणिक्प्रविष्टसंक्रान्तेःस्वरूपम्-

वणिग्गतोयंमहिषोपविष्टस्सकंबलस्थोऽमरचंदनेच ॥ नीलोत्पलंनीलमणिंचधत्तेदध्यन्नभोक्तात्रपुपात्रधारी ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२३ अथ भद्राप्रविष्टसंक्रांतेःस्वरूपम्-

भद्रेनिकुंतस्तुरगोपविष्टश्श्वर्मांबरोमाधविकाप्रसूनम् ॥ धत्तेहरिद्रामपि कांस्यपात्रंचित्रान्नभुक्स्वर्णविभूषणोर्कः ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२४ अथ शकुनिप्रविष्टसंक्रांतेःस्वरूपम्-

शुनिस्थितःपाशधरश्चकंथासिंदूरताम्रांबरगंधपात्रः ॥ सचंपकःपीश दिशिप्रयातोगुडाशनःशाकुनिकोरविस्स्यात् ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२५ अथ चतुष्पात्प्रविष्टसंक्रांतेःस्वरूपम्-

पर्णांबरःपाटलदामदारुपात्रंदधानःकुशभूषणानि ॥ धत्तेचमेषेनुगतः सुनिद्रश्चतुष्पदेमध्वशनोरविस्तु ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२६ अथ नागप्रविष्टसंक्रांतेःस्वरूपम्-

वृषस्थितोवल्कलवस्त्रधारीमृत्पात्रशस्त्रेत्रपुभूषणानि ॥ कुंडानिबिभ्रच्चसपूतिगंधंभुंक्तेघृतंनागवसंज्ञकेर्कः ॥ १ ॥ नीलवर्णः ॥ १ ॥

२२७ अथ किंस्तुघ्नप्रविष्टसंक्रांतेःस्वरूपम्-

कुक्कुटस्थइषभृच्चकंचुकीकेतकीकुसुमरक्तगंधकः ॥ शर्कराभुगथताम्रभूषणोवेणुपात्रभृदथांत्यसंज्ञके ॥ १ ॥ नीलवर्णः ॥ १ ॥

---

२२८ अथ शुक्लपक्षस्यस्वरूपम्-( नृसिंहप्रासादे )

शुक्लपक्षोनरःशुक्लोजटामकुटसंयुतः॥शोणवस्त्रोजटालाक्षोविशालतिलकांचितः ॥ १ ॥ सूर्यंदक्षेदधानोयंवामेचंद्रस्यबिंबकम् ॥ २ ॥ पूजनीयोमहाभक्त्याप्रतिपक्षांसितेऽसिते ॥ २ ॥ श्वेतवर्णः ॥ १ ॥

## २२९ अथ कृष्णपक्षस्यस्वरूपम्-( नृसिंहप्रासादे )

श्यामाभःकृष्णपक्षस्तुसितशोणांबरोबली ॥ सूर्यबिंबंकरेबिभ्रद्वामे सारसमव्ययम् ॥ १ ॥ पूजनीयोबलाव्यर्थंप्रतिमासंतुभेदतः ॥ कृष्णवर्णः ॥ १ ॥

---

## अथशुक्लकृष्णपक्षयोःकर्तव्यदानानि-(दानचिंतामणौ विष्णुधर्मोत्तरे)

पुष्पाणांचसितेपक्षेदानंलक्ष्मीकरंस्मृतम् ॥ फलानांचतथादानंकृष्ण-पक्षेमहाफलम् ॥ १ ॥

## अथ शुक्लकृष्णपक्षयोःजातगुणाः-( जातकाभरणे )

चंचच्चिरायुस्सुतरांसुशीलश्श्रीपुत्रवान्कोमलकायकांतिः ॥ सदास-दामंदविनीतकालश्चेज्जन्मकालस्तुवलक्षपक्षे ॥ १ ॥ प्रलापशीलोविब-लश्चलोलःकविप्रियस्स्वीयकुलोद्धतश्च ॥ मनोभवाधिक्ययुतोनितांतंसि-तेतरेयस्यनरस्यजन्म ॥ २ ॥

## २३० अथ शुक्लपक्षाभिमानिचंद्रस्यस्वरूपम्-( शैवागमे )

दिनेदिनेचगीर्वाणैर्वर्ह्लींद्रयमपूर्वकैः ॥ आपूर्यमाणपक्षायनमश्श्वेतव-पुष्मते ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

## २३१ अथ कृष्णपक्षाभिमानिचंद्रस्यस्वरूपम्-( शैवागमे )

दिनेदिनेदेवगणान्पुष्णतेऽमृतधारया ॥ असितायनमस्तेस्तुपितृप्रीति-करायवै ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

---

## अथ शुक्लपक्षकृष्णपक्षविभेदेनत्रिंशत्संख्याकतिथीनां स्वरूपाणि-(नृसिंहप्रासादे)

## २३२ तत्रादौ तिथीनांनामानि-( शैवागमे )

दिनानिवक्ष्येप्रतिपद्द्वितीयाथतृतीयका ॥ चतुर्थीपंचमीषष्ठीसप्तमी चाष्टमीतथा ॥ १ ॥ नवमीचदशम्येकादशीद्वादशिकातथा ॥ त्रयो-दशीचतुर्दश्यौपूर्णिमाश्शुक्लपक्षगाः ॥ २ ॥ कृष्णेचतुर्दशतथादर्शःपंचद-शोमतः ॥ उभाभ्यामपिपक्षाभ्यांमासस्त्रिंशद्दिनात्मकः ॥ ३ ॥

२३३ तत्रादौ शुक्लप्रतिपत्स्वरूपम्-

तिथयोहिप्रवक्ष्यंतेप्रतिपद्विभुजारुणा ॥ मेषगाशक्तिपात्रासाश्वेतपक्षादिमामता ॥ १ ॥ अरुणवर्णा ॥ १ ॥

२३४ अथ शुक्लद्वितीयास्वरूपम्-

द्वितीयाहंसगाशुभ्राशुभ्रपुस्तकधारिणी ॥ शुभ्रवर्णा ॥ १ ॥

२३५ अथ शुक्लतृतीयास्वरूपम्-

तृतीयावृषगागौराशूलपात्रकरामता ॥ गौरवर्णा ॥ १ ॥

२३६ अथ शुक्लचतुर्थीस्वरूपम्-

नीलोत्पलदलाभासाचतुर्थीकनकस्थिता ॥ परशुंबिभ्रतीपात्रंपीतवस्त्राभिसंयुता ॥ १ ॥ नीलोत्पलवर्णा ॥ १ ॥

२३७ अथ शुक्लपंचमीस्वरूपम्-

पंकजस्थाप्रवालाभाकंठमस्तकभूषणा ॥ शंखंमुद्रांतथापात्रंबिभ्राणा पंचमीमता ॥ १ ॥ प्रवालवर्णा ॥ १ ॥

२३८ अथ शुक्लषष्ठीस्वरूपम्-

मयूरगारुणाषष्ठीपात्रकुक्कुटधारिणी ॥ अरुणवर्णा ॥ १ ॥

२३९ अथ शुक्लसप्तमीस्वरूपम्-

मेघवर्णाब्रह्मपात्रासिंहस्थासप्तमीमता ॥ मेघवर्णा ॥ १ ॥

२४० अथ शुक्लाष्टमीस्वरूपम्-

घंटापात्रधरागोष्ठागोक्षीरधवलाष्टमी ॥ क्षीरवर्णा ॥ १ ॥

२४१ अथ शुक्लनवमीस्वरूपम्-

नवमीसिंहगाशुभ्रापाशपात्रधरामता ॥ श्वेतवर्णा ॥ १ ॥

२४२ अथ शुक्लदशमीस्वरूपम्-

कृष्णवर्णालुलायस्थादशमीदंडधारिणी ॥ कृष्णवर्णा ॥ १ ॥

## २४३ अथ शुक्लैकादशीस्वरूपम्-

एकादशीमृगारूढातुलाकर्तरिसंयुता ॥ सिताननारुणाक्षीस्यदिंद्र-
नीलसमद्युतिः ॥ १ ॥ चित्रवर्णा ॥ १ ॥

## २४४ अथ शुक्लद्वादशीस्वरूपम्-

द्वादशीगरुडारूढामेघवर्णारिपात्रिणी ॥ मेघवर्णा ॥ १ ॥

## २४५ अथ शुक्लत्रयोदशीस्वरूपम्-

चापबाणधरागौरामकरस्थात्रयोदशी ॥ गौरवर्णा ॥ १ ॥

## २४६ अथ शुक्लचतुर्दशीस्वरूपम्-

अब्जस्थापाटलाभासाफलपात्रकरामता ॥ नीलकंठाचेंद्रगोपनयना
चचतुर्दशी ॥ १ ॥ पाटलवर्णा ॥ १ ॥

## २४७ अथ शुक्लपूर्णिमास्वरूपम्-

शशगापूर्णिमाशुभ्रामौक्तिकाभरणान्विता ॥ सुधापूर्णघटंधत्तेवामेद-
क्षेपिधानकम् ॥ १ ॥ श्वेतवर्णा ॥ १ ॥ १५ ॥

## २४८ तत्रादौ कृष्णप्रतिपत्स्वरूपम्-

धूसराकृष्णपक्षाद्यासारसस्थाचतुर्मुखा ॥ अस्त्रंपात्रंस्रुवंचापंकरैर्धत्ते
चतुर्भुजा ॥ १ ॥ धूम्रवर्णा ॥ १ ॥

## २४९ अथ कृष्णद्वितीयास्वरूपम्-

द्वितीयाकुमुदाभासावृषस्थासाक्षकुंडिका ॥ श्वेतवर्णा ॥ १ ॥

## २५० अथ कृष्णतृतीयास्वरूपम्-

तृतीयातार्क्ष्यगानीलाशंखपात्रधरास्मृता ॥ नीलवर्णा ॥ १ ॥

## २५१ अथ कृष्णचतुर्थीस्वरूपम्-

चतुर्थीकज्जलाभासामहिषस्थाचतुर्भुजा ॥ धत्तेक्षमालिकांदंडंपाशं
पात्रंचदक्षिणे ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

## २५२ अथ कृष्णपंचमीस्वरूपम्-

ग्राहस्थाचंद्रिकागौरापंचमीसाक्षकुंडिका ॥ श्वेतवर्णा ॥ १ ॥

२८३ अथ कृष्णषष्ठीस्वरूपम्-

त्र्यक्षामयूरगारक्ताशक्तिकुक्कुटधारिणी ॥ एकास्याद्विभुजाषष्ठीरक्तवस्त्रोपशोभिता ॥ १ ॥ नीलकुंडलकावश्याजटाखंडेंदुभूषिता ॥ रक्तवर्णा ॥ १ ॥

२८४ अथ कृष्णसप्तमीस्वरूपम्-

इभस्थासप्तमीगौराद्विभुजावज्रयंत्रिणी ॥ गौरवर्णा ॥ १ ॥

२८५ अथ कृष्णाष्टमीस्वरूपम्-

प्रेतगाचाष्टमीरक्ताकृष्णग्रीवामताशुभा ॥ अक्षंखेटंतथाखड्गंपात्रं धत्तेचतुर्भुजा ॥ १ ॥ रक्तवर्णा ॥ १ ॥

२८६ अथ कृष्णनवमीस्वरूपम्-

सर्पगानवमीतालदंष्ट्रिणीश्यामलामता ॥ श्यामवर्णा ॥ १ ॥

२८७ अथ कृष्णदशमीस्वरूपम्-

सिंहासनस्थिताशुभ्रादशमीपीतकुंडला ॥ ज्ञानमुद्राभयाचेयंपीतवस्त्राब्जमालिनी ॥ १ ॥ शुभ्रवर्णा ॥ १ ॥

२८८ अथ कृष्णैकादशीस्वरूपम्-

एकादशीवृषारूढानीलवर्णात्रिशूलिनी ॥ नीलवर्णा ॥ १ ॥

२८९ अथ कृष्णद्वादशीस्वरूपम्-

ताम्रवर्णारथारूढापात्रखेटासिपंकजा ॥ द्वादशीशुभ्रवस्त्रेयंनीलकुंडलभूषिता ॥ १ ॥ रक्तवर्णा ॥

२९० अथ कृष्णत्रयोदशीस्वरूपम्-

अशोककलिकाबाणचापपात्रधरामता ॥ द्विभुजाचोरगारूढाकृष्णवर्णात्रयोदशी ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

२९१ अथ कृष्णचतुर्दशीस्वरूपम्-

खड्गसंस्थावरानीलाद्विभुजाचचतुर्दशी ॥ नीलवर्णा ॥ १ ॥

## २६२ अथ कृष्णामावास्यास्वरूपम्-

अमावास्याविधातव्याद्विदोर्मरकतप्रभा ॥ दर्भासनस्थिताचेयंदर्भपिंडधराकुशा ॥ १ ॥ मरकतवर्णा ॥ १ ॥

---

अथ शुक्लकृष्णप्रतिपदादितिथिषुकर्तव्यकृत्यानि-( दैवज्ञविलासे)

( प्रतिपदि )-लोहाश्मवृक्षशय्यादिकृषिश्चित्रक्रियापिच ॥ रणोपकरणंतत्रतिथौप्रतिपदीरितम् ॥ १ ॥

( द्वितीयायाम् )-मौंजीविवाहयात्रादिप्रतिष्ठाभूषणादिकम् ॥ पौष्टिवास्त्वादिकंकर्मद्वितीयायांविधीयते ॥ १ ॥

( तृतीयायाम् )-संगीतवाद्याखिलशिल्पकर्मसीमंतचौलान्नगृहप्रतिष्ठाः ॥ कार्यंद्वितीयेदिवसेयदुक्तंसदातृतीयेदिवसेपितत्स्यात् ॥ १ ॥

( चतुर्थ्याम् )-रिक्तासुकर्तुर्वधबंधशास्त्रविषाग्निभूतादिचयातिसिद्धिम् ॥ यन्मंगलंतासुकृतंचमासैर्विनाशमायातितथानुमासम् ॥ १ ॥

( पंचम्याम् )-यात्रोपनयनोद्वाहप्रतिष्ठाशांतिपौष्टिकम् ॥ चिरंस्थिरंसर्वकर्मपंचम्यांसमुदीरितम् ॥ १ ॥

( षष्ठ्याम् )-सेवाभूषणगोवास्तुसमरक्रयविक्रयम् ॥ भूषाकर्मचभैषज्यंसर्वंषष्ठ्यांविधीयते ॥ ७ ॥

( सप्तम्याम् )-वास्तूपनयनोद्वाहप्रतिष्ठादिचरस्थिरम् ॥ कृषिभूषणसंग्रामंसप्तम्यांसमुदीरितम् ॥-॥(प्रकारान्तरम्) द्वितीयायांतृतीयायांपंचम्यांकथितान्यपि ॥ तानिसिध्यंतिकार्याणिसप्तम्यामखिलान्यपि ॥ १ ॥

( अष्टम्याम् )-संग्रामधान्याखिलवास्तुशिल्पवृत्तप्रकोपाखिललेखकानि ॥ स्त्रीरत्नपण्याखिलभूषणानिकार्याण्यकार्याणिमहेशातिथ्याम् १

( नवम्याम् )-विग्रहंनिग्रहंचैवशत्रुच्छेदनभेदनम् ॥ नवम्यांभूतकर्माणिबहून्यपिचकारयेत् ॥ १ ॥

( [१०]दशम्याम् )—पौष्टिकंमंगलंयात्राप्रवेशंजलकर्मच ॥ दर्शनंगृहकार्याणिदशम्यांकारयेद्बुधः ॥ १ ॥

( [११]एकादश्याम् )—विवाहकृषिवाणिज्यमुपवासादिभूषणम् ॥ वास्तुकंशिल्पनृत्ताद्यमेकादश्यांविधीयते ॥ १ ॥

( [१२]द्वादश्याम् )—वृद्धिव्ययानिकार्याणिधर्मवृत्तिकराणिच ॥ चरस्थिराणिद्वादश्यामन्यत्रश्रवणंविना ॥ १ ॥

( त्रयो[१३]दश्याम् )—क्षेमंध्रुवंचसौभाग्यंमंगलंनाट्यभूषणम् ॥ अश्वशिक्षातथालेख्यंत्रयोदश्यांतुकारयेत् ॥ १ ॥

( [१४]चतुर्दश्याम् )—दंतधावनतैलंचमांसयात्रोपनायनम् ॥ चतुर्दश्यांनकर्तव्यमन्यच्चशुभकर्मवा ॥ १ ॥

( पौ[१५]र्णमास्याम् )—यज्ञक्रियामंगलपौष्टिकानिसंग्रामयोग्याखिलवास्तुकर्म ॥ उद्वाहशिल्पाखिलभूषणाढ्यंकार्यंप्रतिष्ठाखलुपौर्णमास्याम् १

( [३०]अमावास्यायाम् )—अमायांपितृकर्मैकंकर्तव्यमितरन्नतु ॥

---

अथशुक्लकृष्णप्रतिपदादितिथिषुविषनाडीप्रवेशकालः—

( सारावल्याम् )

[१५]हयो[१४]भयो[१३]लयो[३]नांगो [२४]वरं[२०]नारी[२२]खरं[२४]वरम् ॥ [२२]खरं[२४]वरं [४१]कविं[५४]विष्णु[३२]रालं[१७]साकं विर्[१४]यत्क्रमात् ॥ १ ॥—॥ प्रकारान्तरेण ॥ ( मुहूर्तगणपतौ ) ति[१५]थि [५]बाणा[८]ष्ट[७]सप्ता[६]ग[५]पंच[४]वेदा[८]ष्ट[७]भूधराः ॥ दि[१०]ग्[३]वह्नि[१२]चक्रे[१४]मनुक्ष्माभृद्वसवो घटिकाःक्रमात् ॥ १ ॥

२६२ अथ शुक्लप्रतिपदादितिथिषुकर्तव्यदानानि—
( दानचिंतामणौ—विष्णुधर्मोत्तरे )

प्रतिपद्यथपुष्पाणांद्वितीयायांघृतस्यच ॥ तृतीयायांप्रियंगूणांचतुर्थ्यां रजतस्यच ॥ १ ॥ पंचम्यांतुफलानांवैषष्ठ्यांस्नानस्यदानतः ॥ सप्तम्यां वाससांचैवत्वष्टम्यांवैगुडस्यच ॥ २ ॥ कुल्माषस्यनवम्यांतुदशम्यांभोजनस्यच ॥ एकादश्यांसुवर्णस्यद्वादश्यांवसनस्यच ॥ ३ ॥ त्रयोदश्यां-

चगंधानांसितायास्तदनंतरम् ॥ दानंचपरमान्नस्यपंचदश्यांमहाफलम् ॥ ४ ॥

अथ शुक्लकृष्णप्रतिपदादितिथिषुजातानांगुणाः–(कालप्रकाशे)

( प्रतिपदि )–प्रतिपत्सुधनाढ्यस्स्याज्जातःपुण्यरतःपुमान् ॥

(द्वितीयायाम्)–विशोकस्तुकविःकांतःकामुकःकलहप्रियः ॥ द्वितीयायांतुसंजातोगोधान्याधिपतिर्भवेत् ॥ १ ॥

( तृतीयायाम् )–जयशीलोधनाढ्यश्चपुण्यशीलस्सुरूपवान् ॥ मेधावीवाक्परोविद्वान्जातःशुद्धोजयातिथौ ॥ १ ॥

( चतुर्थ्याम् )–दीनचेष्टःकुशीलश्चकुनखीमंत्रतंत्रवित् ॥ चतुर्थ्यांचतिथौजातस्समस्साहसकर्मवित् ॥

( पंचम्याम् )–सौम्यःकामीकलाभिज्ञःक्षमीचाश्रितवत्सलः ॥ ओषधीशतिथौजातःकारुण्यचरितःकविः ॥ १ ॥

( षष्ठ्याम् )–अजय्यस्सत्त्ववान्ख्यातःक्षिप्रकोपीजनाधिपः ॥ मुखपृष्ठोरुतिलकःषष्ठ्यांसंजायतेनरः ॥ १ ॥

( सप्तम्याम् )–मेधावीसत्त्ववाञ्छ्रीमाञ्छयामलांगःकलात्मकः ॥ सृष्टिस्थित्यंतदक्षस्स्याज्जातश्चेंद्रतिथौप्रभुः ॥ १ ॥

( अष्टम्याम् )–हृष्टःकष्टश्शठश्श्रीमान्नीचवृत्तिःकफात्मकः ॥ कामीकलत्रवांस्त्यागीत्वष्टम्यांजायतेनरः ॥ १ ॥

( नवम्याम् )–नास्तिकोनिर्भयःख्यातोदीर्घवैरीचपंडितः ॥ शूरःकुपुत्रवान्वश्योनवम्यांजायतेनरः ॥ १ ॥

( दशम्याम् )–धार्मिकोधनवानाढ्यःपुत्रमित्रकलत्रवान् ॥ नीतिमान्सत्यवान्विद्वान्दशम्यांजायतेनरः ॥ १ ॥

( एकादश्याम् )–पितृदेवादिभक्तिश्चकार्योद्योगीजयोत्सुकः ॥ धनवान्प्रभुकार्यश्चगोविंदतिथिजोनरः ॥ १ ॥

( द्वादश्याम् )–कामीकलापीविक्रांतःकांतःशांतोधनाधिपः ॥ धीरस्त्यागीसुखीवीरोद्वादश्यांजायतेनरः ॥ १ ॥

( त्रयोदश्याम् )—सौम्यःकामीजयीविद्वाल्लुब्धस्स्याच्चपलात्मजः ॥ धनवान्नृत्तगोभोक्तात्रयोदश्यांतुजातवान् ॥ १ ॥

( चतुर्दश्याम् )—कोपीवश्यमनामंदःकृतघ्नोनास्तिकोधनी ॥ परदाररतश्चैवचतुर्दश्यांतुसंभवः ॥ १ ॥

( पञ्चदश्याम् )—देवद्विजनृपैःपूज्योभोगीगोधनधान्यवान् ॥ पुत्रमित्रकलत्राढ्योजातःपंचदशीतिथौ ॥ १ ॥—॥ प्रकारांतरेण ॥

अथ शुक्लकृष्णपक्षप्रतिपदादितिथिषु जातगुणाः ( जातकाभरणे )

( प्रतिपदि )—बहुजनपरिवारश्चारुविद्योविवेकीकनकमणिविभूषावेषशालीसुशीलः ॥ अतिसुललितकांतिर्भूमिपालात्तवित्तःप्रतिपदियदिसूतिर्जायतेयस्यजंतोः ॥ १ ॥

( द्वितीयायाम् )—दातादयालुर्गुणवान्सुसंपच्चंचत्सुताचारविचारधन्यः ॥ प्रसन्नमूर्तिर्बहुगीतकीर्तिर्जातोद्वितीयातिथिसंभवस्स्यात् ॥ १ ॥

( तृतीयायाम् )—कामाधिकस्स्यादनवद्यविद्योबलान्वितोराजकुलात्तवित्तः ॥ प्रवासशीलश्चतुरोविलासीमर्त्यस्तृतीयाप्रभवोभिमानी ॥ १ ॥

( चतुर्थ्याम् )—ऋणप्रवृत्तिर्बहुसाहसस्स्याद्रणप्रवीणःकृपणस्वभावः ॥ द्यूतेरतिर्लोलमनामनुष्योवादीयदिस्याज्जननेचतुर्थी ॥ १ ॥

( पंचम्याम् )—संपूर्णगात्रश्चकलत्रपुत्रमित्रान्वितोभूतदयान्वितश्च ॥ नरेंद्रमान्यस्तुनरोवदान्यःप्रसूतिकालेकिलपंचमीस्यात् ॥ १ ॥

( षष्ठ्याम् )—सत्यप्रतिज्ञोधनसूनुसंपद्दीर्घोरुजानुर्मनुजोमहौजाः ॥ प्रकृष्टकीर्तिश्चतुरोवरिष्ठष्षष्ठ्यांप्रजातोव्रणकीर्णगात्रः ॥ १ ॥

( सप्तम्याम् )—ज्ञानीगुणज्ञोहिविशालनेत्रःसत्पात्रदेवार्चनचित्तवृत्तिः ॥ कन्यापनेतापरवित्तहर्तास्यात्सप्तमीजोमनुजोरिहंता ॥ १ ॥

( अष्टम्याम् )—नानासंपत्सूनुसौख्यःकृपालुःपृथ्वीपालप्राप्तवित्तप्रतिष्ठः ॥ कांताप्रीतिश्चंचलस्वांतवृत्तिर्यस्याष्टम्यांजायतेजन्मसस्यात् १ ॥

(नवम्यां[९]म्)—पराङ्मुखोबंधुजनस्यकार्येकठोरवाक्यश्चसुधीविरोधी॥ नरस्सदाचाररक्तादरस्स्यायस्यप्रसूतौनवमीतिथिस्स्यात् ॥ १ ॥

(दशम्यां[१०]म्)—धर्मैकबुद्धिर्बहुवैभवाढ्यःप्रलंबकंठोबहुशास्त्रपाठी॥ उदारचित्तोनितरांविनीतोरम्यश्चकामीदशमीभवस्स्यात् ॥ १ ॥

(एकादश्यां[११]म्)—देवद्विजार्चाव्रतदानशीलःसुनिर्मलांतःकरणः प्रवीणः ॥ पुण्यैकचित्तोगुरुकर्मकृत्स्यादेकादशीजोतिकृशोतिरोषः॥ १ ॥

(द्वादश्यां[१२]म्)—जलप्रियोवैव्यवहारशीलोनीचालयावासविलास शीलः॥सदान्नदाताक्षितिपाप्तवित्तस्स्याद्द्वादशीजोमनुजःप्रजावान् ॥ १ ॥

(त्रयोदश्यां[१३]म्)—रूपान्वितःसात्विकताविमुक्तःप्रलंबकंठश्वरण-प्रसूतिः ॥ नरोतिशूरश्चतुरःप्रकामंत्रयोदशीनामतिथिप्रसूतः ॥ १ ॥

(चतुर्दश्यां[१४]म्)—क्रूरोतिशूरश्चतुरस्सहासःकंदर्पलीलाकुलचित्तवृ-त्तिः ॥ स्याद्दुस्सहोत्यंतविरुद्धभाषीचतुर्दशीजःपुरुषस्सरोषः ॥ १ ॥

(पूर्णिमायाम्[१५])—अतिसुललितकायोन्यायसंप्राप्तवित्तोबहुयुवति-समेतोनित्यसंजातहर्षः ॥ प्रबलबलविलासोत्यंतकारुण्यपुण्योगुणगण परिपूर्णःपूर्णिमाजातजन्मा ॥ १ ॥

(अमावास्यायाम्[३०])—शांतोमनस्वीपितृमातृभक्तःक्लेशाप्तवित्तश्च गमागमेच्छुः॥मान्योजनानांहतकांतिहर्षोदर्शोद्भवस्स्यात्पुरुषःकृशांगः १

---

अथ शुक्लकृष्णपक्षतिथ्यभिमानिदेवतानांनामानि—(कालामृते) वह्नित्वष्टृहिमाद्रिजागणपतिःसर्पःकुमारोरविर्गौरीशोवसुनागधर्महरयःका-मःकलींदूपिता ॥ एतेसर्वदिनाधिपाःस्युः ॥

२६४ अथ शुक्लकृष्णपक्षतिथ्यभिमानिदेवतास्वरूपाणि—

तत्रादौशुक्लकृष्णपक्षप्रतिपदभिमान्यग्नेर्ध्यानम्—

एहिसाक्षादिहाग्नेत्वंदेवानांहव्यवाहक ॥ शांतिकर्मणिपूजार्थमेतां मूर्तिंसमाविश ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२६५ अथ शुक्लकृष्णद्वितीयाभिमानित्वष्टृदेवतायाःध्यानम्-

त्वष्टर्जगत्त्रयीधातःपुनीहिदययामहीम् ॥ प्रतिमायाममुष्यांत्वंसन्निधस्त्वचतुर्मुख ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२६६ अथ शुक्लकृष्णतृतीयाभिमानिपार्वत्याःध्यानम्-

प्रतिमायांहिरण्मय्यामेहिपर्वतकन्यके ॥ नमस्यामिपदाब्जंतेपुमर्थप्रतिपत्तये ॥ १ ॥ पीतवर्णा ॥ १ ॥

२६७ अथ शुक्लकृष्णचतुर्थ्यभिमानिगजाननस्यध्यानम्-

विघ्नांतकालबालार्कपार्वतीमलसंभव ॥ गजाननार्चांगृह्णीष्वप्रतिमामेत्यसादरम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२६८ अथ शुक्लकृष्णपंचम्यभिमानिसर्पदेवतायाःध्यानम्-

सर्पाधिपमयाहूतःप्रतिमायांनिषीदभो ॥ पूजयामिपदाब्जंतेसर्वसंपदवाप्तये ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

२६९ अथ शुक्लकृष्णषष्ठ्यभिमानिषडाननदेवतायाःध्यानम्-

षडानननमस्यांतिकरवाणिपदाब्जयोः ॥ प्रतिमायांहिरण्मय्यामेहिवल्लीमनःप्रिय ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२७० अथ शुक्लकृष्णसप्तम्यभिमानिसूर्यस्यध्यानम्-

सहस्रभानोचंडांशोप्रतिमामेहिसादरम् ॥ त्रयीतनोनमस्यांतेभूयोभूयःकरोम्यहम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२७१ अथ शुक्लकृष्णाष्टम्यभिमानिसद्योजातस्यध्यानम्-

सद्योजातनमस्तेस्तुगौरीनाथनमोस्तुते ॥ प्रसादंकुरुमेशंभोप्रतिमामेहिसादरम् ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

२७२ अथ शुक्लकृष्णनवम्यभिमानिदुर्गायाःध्यानम्-

दुर्गेत्रिणयनेचंद्रकलांकितशिरोरुहे ॥ इहागत्यप्रसादंमेरचयाशुसुरेश्वरि ॥ १ ॥ श्यामवर्णा ॥ १ ॥

२७३ अथ शुक्लकृष्णदशम्यभिमानिशेषदेवतायाःध्यानम्-

भूभारभुग्ग्रीवायविष्णुपादांकमौलये ॥ नमोनमोस्तुनागायप्रतिमामेहिसादरम् ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

२७४ अथ शुक्लकृष्णैकादश्यभिमानिधर्मदेवतायाःध्यानम्-

श्रुतिवेद्यस्वरूपाययागादिक्रतुमूर्तये ॥ भूरिश्रेयस्साधनायधर्मायमहते नमः ॥ १ ॥ नीलवर्णः ॥ १ ॥

२७५ अथ शुक्लकृष्णद्वादश्यभिमानिहरिदेवतायाःध्यानम्-

हरेजगत्त्रयाधीशलक्ष्मीवल्लभमाधव ॥ प्रतिमामेत्यसहसाप्रसादंकुरुमेविभो ॥ १ ॥ कनकवर्णः ॥ १ ॥

२७६अथ शुक्लकृष्णत्रयोदश्यभिमानिमन्मथदेवतायाःध्यानम्-

रतिवल्लभपुष्पास्त्रनारायणतनूद्भव॥ एहीमांप्रतिमांतूर्णंप्रसीदमयिमन्मथ ॥१॥कांचनवर्णः ॥ १ ॥

२७७ अथ शुक्लकृष्णचतुर्दश्यभिमानिकलिपुरुषस्यध्यानम्-

सर्वाधर्मप्रवक्तारंसर्वपापप्रवर्तकम् ॥ वंचनाचतुरंवंदेभूतयेकलिभूपतिम् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

२७८ अथ पूर्णिमाभिमानिचंद्रदेवतायाःध्यानम्-

सर्वगीर्वाणसेव्यायलक्ष्मीकामुकचक्षुषे ॥ क्षीराब्धिप्रियपुत्रायनमश्चंद्रमसेस्तुते ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

२७९ अथ अमावास्याभिमानिपितृदेवतानांध्यानम्-

पितृलोकनिवासिभ्यःपितृभ्योस्तुनमोनमः ॥ प्रतिमांप्राप्यसौवर्णींप्रसीदंतुसदामयि ॥ १ ॥ कृष्णवर्णाः ॥ १ ॥ ३० ॥

---

अथ वारस्वरूपाणि-( मयूखेदानखंडे )

२८० तत्रादौ रविवारस्वरूपम्-

पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंयुक्तोद्विभुजस्स्यात्सदारविः ॥ १ ॥ पाटलवर्णः ॥ १ ॥

२८१ अथ सोमवारस्वरूपम्-

श्वेतश्श्वेतांबरधरोदशाश्वःश्वेतभूषणः ॥ गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

२८२ अथ मंगलवारस्वरूपम्-

रक्तमाल्यांबरधरःशक्तिशूलगदाधरः॥ चतुर्भुजोमेषगमोवरदःस्याद्धरासुतः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२८३ अथ बुधवारस्वरूपम्-

पीतमाल्यांबरधरःकर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिःसिंहस्थोवरदोबुधः ॥ १ ॥ पीतवर्णः ॥ १ ॥

२८४ अथ गुरुशुक्रवारयोःस्वरूपे-

देवदैत्यगुरूशुद्धौपीतश्वेतौचतुर्भुजौ॥ दंडिनौवरदौकार्यौसाक्षसूत्रकमंडलू ॥ १ ॥ स्वर्णवर्णौ ॥ २ ॥

२८५ अथ स्थिरवारस्वरूपम्-

इंद्रनीलाकृतिःशूलीवरदोगृध्रवाहनः ॥ १ ॥ बाणबाणासनधरःकर्तव्योर्कसुतःसदा ॥ १ ॥ नीलवर्णः ॥ १ ॥ ७ ॥

---

अथ रव्यादिसप्तवारेषुकर्तव्यानि-( नारदीये )

तत्रादौ ( रवौ )-नृपाभिषेकमांगल्यसेवायानादिकर्मयत्॥ औषधाहवधान्यादिनिलयंभानुवासरे ॥ १ ॥

( सोमे )-शंखमुक्तांबुरजतवृक्षेक्षुस्त्रीनिषेवणम् ॥ पुष्पगीतक्रतुक्षीरकृषिकर्मेंदुवासरे ॥ १ ॥

( मंगले )-विषाग्निबंधनस्तेयसंधिविग्रहमाहवम् ॥ धात्वाकरप्रवालास्त्रकर्म भूमिजवासरे ॥ १ ॥

( बुधे )-नृत्तशिल्पकलागीतलिपिपुस्तकविग्रहम् ॥ विवादधातुसंग्रामकर्मसौम्यस्यवासरे ॥ १ ॥

( गुरौ )-यज्ञपौष्टिकमांगल्यस्वर्णवस्त्रादिभूषणम् ॥ वृक्षगुल्मलता यानकर्मदेवेज्यवासरे ॥ १ ॥

( शुक्रे )-नृत्यगीतादिवादित्रस्वर्णस्त्रीवस्त्रभूषणम् ॥ पण्योत्सवादिगोधान्यकर्म भार्गववासरे ॥ १ ॥

( शनौ )-त्रपुसीसायसाश्माश्मविषपापासवानृतम् ॥ स्थिरकर्माखिलंवास्तुसंग्रहः सौरिवासरे ॥ १ ॥ ७ ॥

अथ रव्यादिसप्तवारेषुविषनाडीप्रवेशकालाः-( मुहूर्तगणपतौ )

सूर्येविंशतिरिंदौद्वेभौमेद्वादशचंद्रजे ॥ दशजीवेतुसप्तैवभृगुजेपंचसूर्यजे ॥ १ ॥ पंचविंशतिघटचूर्ध्वंविषनाड्यःप्रकीर्तिताः ॥-॥( ग्रंथांतरे ) एकविंशागुरौचैवद्वाविंशाबुधभौमयोः ॥ पंचविंशाशुक्रभान्वोर्मंदेद्वोश्चाष्टनाडिकाः ॥ १ ॥ ७ ॥

अथ रव्यादिसप्तवारेषुकर्तव्यदानानि-( ब्रह्मांडपुराणे )

ग्रहान्स्वर्णमयान्कृत्वायोविप्रेभ्यःप्रयच्छति ॥ तद्रत्नंचैवतद्धान्यंतद्वर्णवस्त्रमेवच ॥ १ ॥ तद्दिनेषुयथाशक्त्यासर्वात्कामानवाप्नुयात् ॥ ७ ॥

अथ तत्तद्वासरेकर्तव्यदानानिपृथक्पृथक्-( विष्णुधर्मोत्तरे )

तत्रादौ ( रविवासरे )-लवणाज्यगुडोपेतमपूपंसूर्यवासरे ॥ सहिरण्यंनरोदत्त्वानरोगैरभिभूयते ॥ १ ॥

( सोमवासरे )-एवंविधंचेंदुदिनेदत्त्वासौभाग्यमाप्नुयात् ॥

( भौमवासरे )-काष्ठदानेभौमदिनेशत्रोर्नाशमवाप्नुयात् ॥

( बुधवासरे )-बुधेक्रीडनकानांचदानंबालेषुशस्यते ॥

( गुरुवासरे )-जीवेह्निवस्त्रदानेनपरांपुष्टिंसमश्नुते ॥

( शुक्रवासरे )-श्वेतंतुरंगमाप्नोतिशुक्रेदत्त्वारतिंस्त्रियः ॥

( शनिवासरे )-अभ्यंगंसौरिदिवसेदत्त्वाजीवितमाप्नुयात् ॥ ७ ॥

अथ रव्यादिसप्तवारेषुजातानांगुणाः—( जातकाभरणे अन्यत्रच )

तत्रादौ ( र१वौ )—शूरोल्पकेशोविजयीरणाग्रेश्यामारुणःपित्तचयःप्रकोपः॥ दातामहोत्साहयुतोमहौजादिनेदिनेशस्यभवेन्मनुष्यः॥ १ ॥

( सो२मे )—प्रातःप्रजातःप्रियवाग्विधिज्ञःशश्वन्नरेंद्राश्रयवृत्तिमांश्च॥ सुखेचदुःखेपिसमस्वभावोवारेनरःशीतकरस्यजातः॥ १ ॥

( मं३गले )—वक्रोक्तिरत्यंतरणप्रियस्स्यान्नरेंद्रमंत्रीचघनोपजीवी॥ सत्त्वान्वितस्तीव्रतरस्वभावोदिनोद्भवोथावनिनंदनस्य॥ १ ॥

( बु४धे )—सुरूपशालीमृदुवाग्विलासःश्रीमान्कलाकौशलतासमेतः॥ वणिक्क्रियायांहिभवेदभिज्ञःप्राज्ञोगुणज्ञोज्ञादिनोद्भवोयः॥ १ ॥

( गु५रौ )—विद्वान्धनीसर्वगुणोपपन्नोमनोरमःक्ष्मापतिलब्धकामः॥ आचार्यवर्यश्चजनप्रियस्स्याद्वारेगुरोर्यस्यनरस्यजन्म॥ १ ॥

( शु६क्रे )—सुनीलसच्चंचलकेशपाशःप्रसन्नवेषोमतिमान्विशेषात्॥ शुक्लांबरःप्रीतिधरोनरस्स्यात्सुमार्गगोभार्गववारजातः॥ १ ॥

( श७नौ )—अकालसंप्राप्तजराप्रवृत्तिर्बलोज्झितोदुर्बलदेहयष्टिः॥ तमोगुणःक्रौर्यचयाभिभूतःशनेर्दिनेजातजनिर्मनुष्यः॥ १ ॥ ७ ॥

प्रकारांतरम्—( कालप्रकाशिकायाम् )

( र१वौ )—पिंगदृक्पीतकेशश्चशिल्पविच्छीलवान्प्रभुः॥ पित्तवातात्मकोमानीरविवारोद्भवोनरः॥ १ ॥

( सो२मे )—मृदुकांतवपुस्सौम्यःकलाल्पोधनधान्यवान्॥ श्लेष्मलःपरदारेच्छुश्चंद्रवारोद्भवोनरः॥ १ ॥

( मं३गले )—धीरःखलोद्विभाषीचवीरस्साहसकार्यकृत्॥ खर्वःकोपीचसेनाढ्यःकुजवारोद्भवोनरः॥ १ ॥

( बु४धे )—गीतवाद्यविशेषज्ञोदेवब्राह्मणपूजकः॥ सदातुधर्मनिरतोबुधवारोद्भवोनरः॥ १ ॥

(गुरौ)—ज्ञानवान्धनवान्ख्यातोशीलवान्नृपवल्लभः ॥ त्यागीभोगीभविष्यज्ज्ञोगुरुवारोद्भवोनरः ॥ १ ॥

(शुक्रे)—स्वभावश्लेष्मणःकांतःकविश्चनयविद्गुरुः ॥ गंधमाल्योपभोगीचशुक्रवारोद्भवोनरः ॥ १ ॥

(शनौ)—पिंगदृक्पीनकर्णश्चधनवान्क्षुद्रमार्गगः ॥ कुनखीमंदकृत्यश्चशनिवारोद्भवोनरः ॥ १ ॥ ७ ॥

---

अथ वाराभिमानिदेवता—नामानि स्वरूपाणि च—(शैवागमे)

रुद्रोदुर्गाषण्मुखश्चविष्णुर्ब्रह्मास्वराड्यमः ॥ दिवाकरादिवाराणामधिदेवाःप्रकीर्तिताः ॥ १ ॥

२८६ तत्रादौ रविवाराभिमानिशिवस्यस्वरूपम्-

वृषारूढंशूलपाणिंप्रमदापरिसेवितम् ॥ शिरसाप्रणमाम्यद्यरविवाराधिपंशिवम् ॥ १ ॥ शुभ्रवर्णः ॥ १ ॥

२८७ अथ सोमवाराभिमानिदुर्गायाःस्वरूपम्-

दुर्गांविपत्तिधुतयेभुजाष्टकविभूषिताम् ॥ ध्यायामिदैत्यहंत्रींतांरक्तास्वादनतत्पराम् ॥ १ ॥ मेघवर्णा ॥ १ ॥

२८८ अथ मंगलवाराभिमानिषण्मुखस्यस्वरूपम्-

शक्त्युज्ज्वलैकबाहुंशशधरमकुटंमयूरमारूढम् ॥ अंगारकाधिनाथंषण्मुखमीडेमरेंद्रसेनान्यम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

२८९ अथ बुधवाराभिमानिविष्णुदेवतायाःस्वरूपम्-

भास्वत्किरीटंदरचक्रशार्ङ्गगदाभिरामैस्सहितंचतुर्भिः ॥ करैरनंतासनसन्निविष्टंध्यायेद्रमेशंबुधवारनाथम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

२९० अथ गुरुवाराभिमानिचतुर्मुखस्यस्वरूपम्-

चतुर्मुखश्चतुर्बाहुःकमंडल्वक्षसूत्रधृत् ॥ वराभयकरःशुद्धोगुरुवाराधिपोमतः ॥ १ ॥ पद्मवर्णः ॥ १ ॥

## २९१ अथ शुक्रवाराभिमानींद्रस्यस्वरूपम्-

इंद्रंगजवरारूढंवज्रांकुशवराभयान् ॥ करैश्चतुर्भिर्दधतं शुक्राधीश्वर माश्रये ॥ १ ॥ पीतवर्णः ॥ १ ॥

## २९२ अथ स्थिरवाराभिमानियमस्यस्वरूपम्-

पाशदंडोज्ज्वलभुजद्वयंमहिषावाहनम् ॥ यमंनीलतनुंभीमंशनिवाराभिधंभजे ॥ १ ॥ नीलवर्णः ॥ १ ॥ ७ ॥

## अथ नक्षत्राभिमानिदेवतानांस्वरूपाणि-( शैवागमे )

तत्रनक्षत्राणांतारासंख्यास्वरूपपूजादयः-( नक्षत्रचूडामणौ )

तत्रनक्षत्राधिपानांनामानि-( ज्योतिषरत्नाकरे नारदीये )

नक्षत्रेशाः क्रमाद्दस्रयमवह्निपितावहाः ॥ चंद्रेशादितिजीवाहिपितरश्चार्यमाभगः ॥ १ ॥ सवितृत्वष्टमरुतइंद्राग्नीमित्रवासवौ ॥ यातुधानोंबुविश्वेच विष्णुश्चवसुतोयपौ ॥ २ ॥ अजैकपादहिर्बुध्न्यपूषणश्चेतिकीर्तिताः ॥ २७ ॥

## २९३ अथ अश्विनीनक्षत्रस्य-

अश्विनौदेवतेश्वेतवर्णौतौद्विभुजौस्तुमः ॥ सुधासंपूर्णकलशकराब्जावश्ववाहनौ ॥ १ ॥ श्वेतवर्णौ ॥ अश्विनौदेवते ॥-॥ (नक्षत्रचूडामणौ)-हस्त्यश्वबंधरथयानपुरप्रतिष्ठाभैषज्यमंत्रगृहहर्म्यसुरप्रतिष्ठाः ॥ यात्राभिषेकमखदीक्षणचौलमौंजीःकुर्वंतिशांतिकविधानमथाश्विनीषु ॥ १ ॥ तुरगमुखाऽश्विनी त्रीणि-चूचेचोलाअश्विनी-कृष्णवर्णः । त्रितारा । अश्वमुखाकृतिः । पट्टणंस्थानम् । पुमान् । देवगणः । तिर्यङ्मुखम् । मंदलोचनम् ।क्षिप्रंबाह्यम् । विषमुष्टिवृक्षः । भेरुंडपक्षी । वैश्यजातिः । चतुष्पात् । अश्वयोनिः । अश्विनौदेवते । अकाराक्षरस्स्वरः । अस्मिन्नश्वत्थामाजातः । पंचाशद्धटिकाभ्यः परंविषनाडयश्चतस्रः । माषपिष्टंभक्षयित्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेनवदिनान्यरिष्टानि ॥-॥ तच्छांत्यैअश्विनीदेवतापूजाविधानम् । श्वेतवस्त्रम् । मलयजगंधः ।

उत्पलपुष्पम् । गुग्गुलधूपः । क्षीरान्ननैवेद्यम् । देवस्यत्वेतिमंत्रेणषोडशोपचारैस्संपूज्यक्षीरसमिदाज्यैर्गायत्र्याअष्टोत्तरशतंजुहुयात् । गंधपुष्पमाषान्नंगुडसहितमुत्तरस्यांदिशिबलिंहरेत् । नवाहात्सुखीभवति ॥—॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीभवति ॥—॥ अस्मिन्नक्षत्रेबीजावापनाश्वग्रहणवस्त्रालंकरणकर्णवेधचौलोपनयनभैषज्ययुद्धादीनिप्रशस्तानि ॥—॥ अस्मिन्नक्षत्रेजातगुणाः—दीर्घायुः । स्थूलशरीरः । सूक्ष्मनखः । विशालाक्षः । सुभगः । सुरूपः । राजपूज्यः । दीर्घास्यः । सुतीक्ष्णमानसः । भूषणप्रियः । दुर्जनसखः । साहसी । चपलः । लुब्धः । भोग्यांशः । स्थिरारंभः । कटिप्रदेशेमत्स्यांकितः । अलसगुणः । षडशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥ ( अत्र प्र० यथापुस्तकंलिखिता विषयाः )

## २९४ अथ भरणीनक्षत्रस्य—

पाशदंडोज्ज्वलभुजद्वयंमहिषवाहनम् ॥ यमंनीलंभजेभीमंसुवर्णप्रतिमागतम् ॥ १ ॥ नीलवर्णः ॥ यमोदेवता ॥—॥ ( नक्षत्रचूडामणौ )—

युद्धभिघातवधबंधविषाग्निशस्त्रभेदावृतादिभयसाहसचौर्यकर्म ॥ द्यूताभिचारविधिमंत्रबिलप्रवेशकन्याजनानि यमभे किलयांतिसिद्धिम् ॥ १ ॥ योनिर्भरणी त्रीणि । लीलूलेलोभरणी । श्वेतवर्णः । त्रितारा । त्रिकोणाकृतिः । वैश्यजातिः । स्त्री । मनुष्यगणः । अधोमुखी । मंदलोचनम् ॥ स्थानंग्रामः । उग्रः । चतुष्पात् । अग्निमंडलम् । आमलकवृक्षः । पक्षी काकः । गजयोनिः । यमोदेवता । यकारउकारोक्षरस्स्वरः । अस्मिन्दुर्योधनोजातः । चतुर्विंशतिघटिकाभ्यः परंविषनाड्यश्चतस्रः । यात्रावर्ज्या । अथवासप्तघटिकाभ्यःपरंतिलतंडुलभक्षणंकृत्वापूर्वोत्तरप्रयाणेशुभम् ॥ ज्वरेप्राणभयम् । अंत्यपादेमृत्युः । तृतीयपादेदिनद्वयम् । अथवाएकादशदिनान्यरिष्टानि ॥—॥ तच्छांत्यैयमदेवतापूजाविधानम् ॥ नीलवस्त्रम् । रक्तकरवीरपुष्पम् । कृष्णागरुगंधः । महिषाक्षीधूपः । गुडान्ननैवेद्यम् । यमायसोममितिमंत्रेणषोडशोपचारैःसंपूज्यतिलाज्येन

गायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैर्गुडतिलमिश्रान्नंयाम्यदिशि बलिंहरेदुत्तरेवा।एकादशाहात्सुखीभवति॥–॥अस्मिन्नक्षत्रेप्रथमरजस्वलाविधवाभवति॥–॥अस्मिन्नक्षत्रेउग्रकार्याणिप्रशस्तानि॥–॥ अस्मिन्नक्षत्रेजातगुणाः–चपलः । बहुसुतः । शास्त्रज्ञः । सुमुखः । सुखी । दीर्घायुः । सत्यवादी । सुभोजनः । स्त्रीप्रियः । तीव्रनिद्रः । रक्ताक्षः । रक्तकेशः । भोगशरीरवान् । नाभिप्रदेशेतिलमत्स्यांकितः । षडशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २९६ अथ कृत्तिकानक्षत्रस्य–

कृत्तिकादेवतामग्निंमेषवाहनसंस्थितम् ॥ स्रुक्स्रुवाभीतिवरधृक्चतुर्हस्तंनमाम्यहम् ॥ १ ॥ रक्तवर्णः । अग्निर्देवता ॥–॥ ( नक्षत्रचूडामणौ )–आधानहोममखदीक्षणवह्निपूजादायानिधातुविहिताभरणादिकर्म॥ मंत्रौषधीरसरसायनसाधकानिसिध्यंतिवह्निविहितानिहुताशनर्क्षे ॥ १ ॥ क्षुरंकृत्तिका षट्।आईऊए कृत्तिका ॥रक्तवर्णम् । षट्ताराः। क्षुराकृतिः। स्त्री । राक्षसगणः । अजयोनिः । ब्राह्मणजातिः । त्रिपात् । अग्निर्देवता। अधोमुखी । सुलोचनम् । साधारणम् । समतारा । अंतम् । स्थानं शून्यम् । अग्निमंडलम् । औदुंबरवृक्षः । पक्षीमयूरः । इकारउकारोक्षरस्स्वरः । त्रिंशद्घटिकाभ्यः परंविषनाड्यश्चतस्रः । यात्रावर्ज्या। एकोनविंशतिघटिकानंतरंदधिभुक्त्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवानवदिनान्यरिष्टानि ॥–॥ तच्छान्त्यैअग्निदेवतापूजाविधानम् । रक्तवस्त्रम् । रक्तगंधः । रक्तकरवीरपुष्पम् । घृतगुग्गुलधूपः । घृतौदननैवेद्यम्। अग्निनाग्निस्समिध्यते । अग्नयेसमिधमहार्षइतिमंत्रेणषोडशोपचारैस्संपूज्यघृतमधुनागायत्र्याअष्टोत्तरशतंजुहुयात् ॥–॥अस्मिन्क्रूरकार्याणिप्रशस्तानि।नवाहात्सुखी भवति॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलादरिद्राभवति ॥–॥ अस्मिन्नक्षत्रेजातगुणाः । तेजस्वी–मतिमान् । विख्यातः । बह्वशनः । प्रमदाप्रियः । प्रतापी ।भुजार्जितधनः । दुःख-

भाजी । सितकेशः । गंभीरशरीरः । वामभागेमत्स्यांकितः । अशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २९६ अथ रोहिणीनक्षत्रस्य-

प्रजापतिश्चतुर्बाहुः कमंडल्वक्षसूत्रधृत् ॥ वराभयकरः शुद्धोरोहिणीदेवतास्तुमे ॥ १ ॥ पाटलवर्णः । ब्रह्मादेवता ॥—॥ ( नक्षत्रचूडामणौ )—राजाभिषेकगृहहर्म्यपुरप्रवेशहोमादिशांतिकविवाहविधिंचकुर्यात् ॥ शालीक्षुवृक्षव्रतबंधनवाहनानिनव्यांबराभरणभूषणमब्जजर्क्षे ॥ १ ॥ रोहिणीशकटाकारंपंच । ऊ वा वी वू रोहिणी । कृष्णवर्णम् । पंचताराः। शकटाकृतिः । पुमान् । मनुष्यगणः । भुजंगयोनिः । ब्रह्मादेवता । शूद्रजातिः । चतुष्पात् । ऊर्ध्वमुखम् । अंधलोचनम् । स्थिरम् । मध्यतारा । पत्तनस्थानम् । इंद्रमंडलम् । जंबूवृक्षः । कुक्कुटपक्षी । उकारऋकारावक्षरौ । अस्मिन्कृष्णभौमौजातौ । चत्वारिंशद्घटिकाभ्यः परंविषनाड्यश्चतस्रः । घृतमिश्रपरमान्नंभुक्त्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेसप्तदिनान्यरिष्टानि ॥—॥ तच्छांत्यैब्रह्मदेवतापूजाविधानम् ॥ कृष्णवस्त्रम्।कस्तूरीगंधः । कह्लारपुष्पम् । गुग्गुलधूपः।क्षीरान्ननैवेद्यम्।नमोब्रह्मणेइतिमन्त्रेणषोडशोपचारैस्संपूज्यसर्पिर्मिश्रसप्तधान्यैर्गायत्र्याअष्टोत्तरशतंजुहुयात्। गंधमाल्यैः क्षीरोदनंप्राग्दिशिबलिंहरेत् ॥—॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापतिप्रियापुत्रवतीभवति॥—॥ अस्मिन्नक्षत्रेऋतुसीमंतपुंसवनचौलोपनयनवेदशास्त्राभ्याससमावर्तनविवाहतैलाभ्यंगनवाभरणराजाभिषेकसिंहासनांदोलनारोहणनववास्तुपुरग्रामस्वीकरणप्रवेशगृहप्रवेशदेवताप्रतिष्ठाक्रयविक्रययज्ञाध्ययनहोमशांतिकपौष्टिकधनधान्यतटाकादिशुभकार्याणि प्रशस्तानि॥—॥ अस्मिन्नक्षत्रेजातगुणाः—सुरूपः । सुरतप्रियः । समर्थः । निपुणः । धान्याढ्यः । नानावस्त्रप्रियः । नेत्ररोगी किंचिद्दीनः । पीनसरोगी । स्वल्पपादपाणिस्कंधललाटः । स्वमातुलारिः। अष्टाशीतिवर्षाणिपरमायुरित्यादिकमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २९७ अथ मृगशीर्षनक्षत्रस्य–

श्वेतवर्णाकृतिस्सोमोद्विभुजोवरदंडभृत् ॥ दशाश्वरथमारूढोमृगशीर्षोस्तुमेमुदे ॥ १ ॥ श्वेतवर्णः ॥ सोमोदेवता ॥–॥ (नक्षत्रचूडामणौ )–मांगल्यव्रतहोमदानतपसांयज्ञस्यवैसाधनंकृष्यारंभवणिक्प्रवेशगमनंक्षौरंप्रियासंगमम् ॥ शांतिस्नाननृपाभिषेकनियमान्देवाग्निपित्रर्चनंकुर्याच्छांतिकपौष्टिकादिशुभदंचंद्रर्क्षभेसंयुते ॥ १ ॥–॥ शिरोमृगशिरास्त्रीणि । वे वो का की मृगशिराः । श्वेतवर्णम् । त्रितारा । मृगशीर्षाकृतिः । नपुंसकम् । देवगणः । तिर्यङ्मुखम् । सर्पिणीयोनिः । सोमोदेवता । उपजीवजातिः । द्विपात् । मंदलोचनम् । मृदुः । समतारा । स्थानंपुरम् ॥ वायुमंडलम् । खादिरवृक्षः । कुक्कुटपक्षी । ऋकाराक्षरस्स्वरः। निर्जीवजातिः ॥ अस्मिन्नक्षत्रेपुरुषमृगोजातः ॥ चतुर्दशघटिकाभ्यःपरंविषनाडयश्चतस्रः ॥ मृगमांसभक्षणंकृत्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवामासमरिष्टम् ॥–॥ तच्छांत्यैसोमदेवतापूजाविधानम् । श्वेतवस्त्रम् । श्वेतचंदनम् । कुंदपुष्पम् । गुग्गुलधूपः । परमान्ननैवेद्यम् ।नवोनवइतिमंत्रेणषोडशोपचारैस्संपूज्यक्षीरमिश्रघृतेनगायत्र्याअष्टोत्तरशतंजुहुयात्।गंधमाल्यैःक्षीरोदनंबलिंहरेत्। मासात्सुखीभवति ॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीभवति ॥–॥ अस्मिन्नक्षत्रेपुंसवनजातकर्मनामकरणान्नप्राशनचौलोपनयनाक्षरग्रहणवेदशास्त्राभ्याससमावर्तनतैलाभ्यंगनवाभरणांबरधारणवास्तूपक्रमग्रामपुरगृहादिप्रवेशकृषिबीजावापनभैषज्यप्रभृतिशुभकार्याणिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः – उत्साहशीलः । पापभीरुः । मातापितृभक्तः ।स्वतंत्रः । चिरायुः । विनयसपन्नः। पीनवक्षाः । सुमुखः । मृदुवचनः । मेधावी । अधिकनैष्ठुर्यवान् । विपुलभुजः । एकग्राही । धर्मरतः । चतुरशीतिवर्षाणिपरमायुरित्यादिकमस्मिन्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २९८ अथ आर्द्रानक्षत्रस्य-

रुद्रश्श्वेतोवृषारूढःश्वेतमाल्यश्चतुर्भुजः ॥ शूलखड्गाभयवरान्दधानोमेप्रसीदतु ॥ १ ॥ श्वेतवर्णः । रुद्रोदेवता ॥–॥ ( नक्षत्रचूडामणौ )– शत्रूणांनिधनंदवाग्निदहनंदुष्टाग्र्यसंमर्दनंशस्त्रास्त्रग्रहणंचचौर्यगमनंदूतागमोद्घाटनम् ॥ रक्षोभूतपिशाचयक्षकगणादेशंतथोच्चाटनं यच्चान्यद्वलिरौद्रकर्मकथितंरौद्रार्द्रेभेकारयेत् ॥ १ ॥–॥ आर्द्राप्रवालमेकम् ॥ कूघंङच्छआर्द्रा । रक्तवर्णा । एकतारा । स्त्री । मनुष्यगणः । शुनीयोनिः । चतुष्पात् । उग्रम् । ऊर्ध्वमुखम् । मध्यलोचनम् । क्षत्रियजातिः । स्थानं शून्यम् । वरुणमंडलम् । रुद्रोदेवता । रक्तखदिरवृक्षः। पक्षीक्रौंचः । एकाराक्षरःस्वरः । एकविंशतिघटिकाभ्यः परंविषनाड्यश्चतस्रः । यात्रावर्ज्या । अथवा चतुर्दशघटिकानंतरंमृगरक्तंपीत्वापूर्वोत्तरदिग्गमनेशुभम् । ज्वरेप्राणभयम् । अथवा मासमरिष्टम् ॥–॥ तच्छांत्यैरुद्रपूजाविधानम् । श्वेतवस्त्रम् । श्वेतगंधः । धुत्तूरपुष्पम् । बिल्वपत्रम्। महिषाक्षीगुग्गुलधूपः अगरुधूपोवा । नानाविधान्ननैवेद्यम् । नमस्तेरुद्रइति मंत्रेणनमश्शंभवइतिमंत्रेणवाषोडशोपचारैस्संपूज्यगायत्र्यातिलैरष्टोत्तरशतंजुहुयात् । गंधमाल्यैःक्षीरोदनबलिंहरेत् । श्वेतधेनुंदद्यात् । मासात्सुखीभवति॥–॥अस्मिन्नक्षत्रेप्रथमरजस्वलादुःखिताभवति॥–॥अस्मिन्नक्षत्रेशस्त्रप्रहरणाग्निप्रयोगाक्षरग्रहणशस्त्राभ्यासचौरगमनभूतोच्चाटनमंत्रयंत्रप्रयोगशैवदेवताप्रतिष्ठाभूतावेशश्राद्धादिक्रूरकार्याणिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः– – आचारपरः । क्रयविक्रयनिपुणः । शूरः । कलिः । हिंसकः । कृतघ्नः । अल्पशत्रुः । स्थिरायुः । सप्ताशीति वर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २९९ अथ पुनर्वसूनक्षत्रस्य-

अदितिःपीतवर्णाचस्रुक्स्रुवाक्षकमंडलून् ॥ दधानाशुभदामेस्यात्पुनर्वसुकृताद्वया ॥ १ ॥ पीतवर्णः । अदितिर्देवता ॥–॥ ( नक्षत्रचूडा

मणौ )॥—॥सीमंतपुंसवनपौष्टिकचौलमौंजीवेदव्रतानिविविधाध्ययनंप्रश-
स्तम् । आंदोलिकादिवरवाहनशस्त्रशय्यालंकारमप्यदितिभेविदधीतनूनम्
॥ १ ॥पुनर्वसूतटाकंपंच । के को हा हि पुनर्वसू । कृष्णवर्णः । पंचताराः।
गृहदंडाकृतिः । पुमान् । देवगणः । मार्जालीयोनिः । अदितिर्देवता ।
वैश्यजातिः । त्रिपात् । तिर्यङ्मुखम् । सुलोचनम् । चरं स्थानम् ।
पत्तनम् । वायुमंडलम् । वेणुवृक्षः । पक्षीहंसः । ङकाराक्षरस्स्वरः ॥
अस्मिन्सुरभिर्जाता । विंशतिघटिकाभ्यःपरंविषनाड्यश्चतस्रः ।
पयः पीत्वापूर्वोत्तरप्रयाणेशुभम् ॥ ज्वरेसप्तदिनान्यरिष्टानि ॥—॥
तच्छांत्यैअदितिपूजाविधानम् । पीतवस्त्रम् । कुंकुमगंधः । कुमुदपुष्पं
मल्लिकापुष्पंवा । मलयजधूपः । गुडान्ननैवेद्यम् । अदितिर्द्यौरितिमंत्रेण
षोडशोपचारैस्संपूज्यआज्यतिलतंडुलैर्गायत्र्याअष्टोत्तरशतं जुहुयात् ।
गंधमाल्यैर्गुडौदनबलिंहरेत् । सप्ताहात्सुखीभवति ॥—॥ अस्मिन्नक्षत्रे
प्रथमरजस्वलाबहुजनचित्ताभवति ॥—॥ अस्मिन्नक्षत्रेऋतुपुंसवनसीमं
तनामकरणान्नप्राशनकर्णवेधचौलोपनयनाक्षरग्रहणवेदशास्त्राभ्यासचित्र
वस्त्राभरणधारणराजाभिषेकसिंहासनांदोलिकारोहणशय्यालंकारनववा
स्तूपक्रमपुरग्रामगृहाप्रवेशयात्राभैषज्यादिशुभकार्याणिप्रशस्तानि ॥—॥
अस्मिन्नक्षत्रेजातगुणाः — दीर्घायुः।प्रमदाप्रियः ।सुरूपः । विभवकामः ।
दुर्मतिः । उन्नतः । हीनस्वरः । मांसप्रियः । बुद्धिमान् । उदरेमत्स्यां
कितः । षण्णवतिवर्षाणिपरमायुरित्यादिकमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३०० अथ पुष्यनक्षत्रस्य—

वंदेबृहस्पतिंपुष्यदेवतांमानुषाकृतिम् ॥ सर्वाभरणसंपन्नंदेवमंत्रिणमा
दरात् ॥ १ ॥ पीतवर्णः । बृहस्पतिर्देवता ॥—॥ (नक्षत्रचूडामणौ )—
वेदाभ्याससुशास्त्रसंग्रहविधिश्शस्त्रास्त्रशिक्षापणंमंत्राराधनदेवतार्चनभिष-
क्कार्यंनृपालोकनम् । कुर्याच्छांतिकपौष्टिकानिनृपतेर्यात्राभिषेकंतथापु-
ष्यर्क्षेवरचित्रवस्त्रनिचयालंकारसंधारणम् ॥ १ ॥ पुष्यं सरलंत्रीणि ।

हू हे हो डा पुष्यम्। श्वेतवर्णः। त्रितारा । शराकृतिः। पुमान् । देवगणः। अजायोनिः । बृहस्पतिर्देवता । क्षत्रियजातिः । चतुष्पात् । ऊर्ध्वमुखम् । अंधलोचनम् । क्षिप्रम् । बाह्यम् । समतारा । स्थानंग्रामः । अग्निमंडलम् । अश्वत्थवृक्षः । पक्षीजलकाकः । अकाराक्षरस्स्वरः ॥ अस्मिन्नृक्षेपंकजशुकौजातौ ॥ विंशतिघटिकाभ्यः परंविषनाड्यश्चतस्रः। परमान्नभोजनंकृत्वासर्वदिक्षुप्रयाणेशुभम् ॥ ज्वरेसप्तदिनान्यरिष्टानि ॥–॥ तच्छांत्यैबृहस्पतिपूजाविधानम् । पीतवस्त्रम् । कुंकुमगंधः । सरोरुहपुष्पम् । अगरुधूपः ॥ खंडमंडलान्ननैवेद्यम् । बृहस्पतेअतियदर्यौंअर्हाइतिमंत्रेणषोडशोपचारैस्संपूज्यपरमान्नेनगायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैःक्षीरोदनबलिंहरेत् । सप्ताहात्सुखीभवति ॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापतिव्रतापुत्रिणीभवति ॥–॥ अस्मिन्नक्षत्रेऋतुपुंसवनसीमंतनामकरणान्नप्राशनकर्णवेधक्षौरचौलोपनयनवेदशास्त्राभ्यासयंत्रमंत्रोपदेशतैलाभ्यंगनववस्त्राभरणधारणराजाभिषेकसिंहासनचतुरंगबलांदोलिकागजाश्वशिक्षारोहणवास्तूपक्रमपुरगृहग्रामादिप्रवेशयज्ञरंगगुरूपदेशमहोत्सववाद्यनृत्ताभ्यासशांतिकपौष्टिकभृत्यपरिग्रहपशुक्रयविक्रयकृषिप्रयोगबीजावापनतंत्रभैषज्यानिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः — सर्वज्ञः । धीमान् । क्षिप्रक्रोधः । ज्यौतिषज्ञानशीलः । प्रधानः । धैर्यवान् । बंधुवर्गोपकारी । मधुरभाषी । मंत्रज्ञः । अभिमानी। दीर्घायुः । सूक्ष्मवाचकः । एकांतप्रियः । हस्तपादयोर्मत्स्यांकितः । नवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

### ३०१ अथ आश्लेषानक्षत्रस्य-

सर्पोरक्तस्त्रिणेत्रश्चफलकासिकरद्वयः ॥ आश्लेषादेवतापीतांबरधृग्वरदोस्तुमे ॥ १ ॥ रक्तवर्णः । सर्पोदेवता ॥–॥ ( नक्षत्रचूडामणौ )— मंत्रप्रयोगमभिचारमथाग्निदाहव्यायामवादशरकर्मविपाकपाकौ । कुंतासिशक्तिशरकार्मुकसंग्रहंचकुर्याद्विषप्रहरणंखलुसार्पधिष्ण्ये ॥ १ ॥

आश्लेषासर्पाकाराषट् । डी डू डे डो आश्लेषा । रक्तवर्णः । षट्तारा: । सर्पाकृतिः । स्त्री । राक्षसगणः । मार्जारयोनिः । सर्पोदेवता । चंडालजातिः । चतुष्पात् । अधोमुखम् । मंदलोचनम् । दारुणम् । बाह्यम् । अर्धतारा । स्थानंशून्यम् । वरुणमंडलम् । पुन्नागवृक्षः । टिट्टिभपक्षी ॥ अस्मिन्नक्षत्रेधर्मराजोजातः । द्वात्रिंशद्घटिकाभ्यः परंविषनाड्यश्चतस्रः । यात्रावर्ज्या । अथवा चतुर्दशघटिकानंतरंपरमान्नंभुक्त्वा पूर्वोत्तरप्रयाणे शुभम् । ज्वरेप्राणभयम् । अथवामासमरिष्टम् ॥—॥ तच्छांत्यैसर्पदेवतापूजाविधानम् । मधुपिंगलवस्त्रम् । कुंकुमागरुगंधः । अगस्त्यपुष्पम् । घृतगुग्गुलधूपः । पायसान्ननैवेद्यम् । नमोस्तुसर्पेभ्यइतिमंत्रेणषोडशोपचारैस्संपूज्य परमान्नमिश्राज्येनगायत्र्याअष्टोत्तरशतंजुहुयात् ॥ गंधमाल्यैःक्षीरोदनबलिंहरेत् । रक्तधेनुंदद्यात् । मासात्सुखीभवति ॥—॥ अस्मिन्नक्षत्रेप्रथमरजस्वलाविधवादुश्शीलाभवति ॥—॥ अस्मिन्नक्षत्रेअभिघातविषाग्निप्रयोगविद्यावादकार्मुकादिशस्त्राभ्यासमंत्रप्रयोगपरदारगमनवापीकूपतटाकघंटापरिघादीनिप्रशस्तानि ॥—॥ अस्मिन्नक्षत्रेजातगुणाः—राजपूज्यः । रौद्रः । कामुकः । प्रवासी । शरीरेतिलमत्स्यांकितः । विपुलरतः । मंदगतिः । भोगी । षडशीति वर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३०२ अथ मघांनक्षत्रस्य—

पितरः पिंडहस्ताश्चकुशाधूम्राःपवित्रिणः ॥ कुशलंदद्युरस्माकंमघानक्षत्रदेवताः ॥ १ ॥ धूम्रवर्णः । पितरोदेवताः ॥—॥ (नक्षत्रचूडामणौ)—अग्न्याधानंसर्वमंत्रप्रयोगंकुर्याच्छ्राद्धंतर्पणंवैपितॄणाम् ॥ द्यूतारंभंकर्मवादं बिलंचपित्र्येमघंसंयुगंचापकर्म ॥ १ ॥ मघाआंदोलिकापंच । मा मी मू मे मघा । कृष्णवर्णः । पंचतारा: । आंदोलिकादंडाकृतिः । अधोमुखम् । पुमान् । स्त्री । राक्षसगणः । मूषकयोनिः । पितरोदेवताः । शूद्रजातिः । चतुष्पात् । मध्यलोचनम् । उग्रम् । अंतः । समतारा । स्थानंपत्तनम् । अग्निमंडलम् । वटवृक्षः । कुक्कुटपक्षी । घसअक्षरः ॥ अस्मिन्नक्षत्रेय-

मोजातः । त्रिंशद्घटिकाभ्यःपरंविषनाड्यश्चतस्रः । यात्रावर्ज्या । अथवा एकादशघटिकाभ्यः परंद्वाविंशतिघटिकावधितिलभक्षणंकृत्वादक्षिणपश्चिमप्रयाणेशुभम् । ज्वरेभानुवारप्रयुक्तेप्राणभयम् । अथवाविंशतिदिनान्यरिष्टानि ॥–॥ तच्छांत्यैपितृदेवतापूजाविधानम् । कृष्णवस्त्रम् । कृष्णागरुगंधः । चंपकपुष्पम् । घृतागरुगुग्गुलधूपः । घृतान्नापूपनैवेद्यम् । उदीरतामवरइतिमंत्रेणषोडशोपचारैःसंपूज्यतिलतंडुलमिश्रान्नाज्येनगायत्र्याष्टोत्तरशतंजुहुयात् । गंधमाल्यैस्तिलोदनबलिंहरेत् । कृष्णधेनुंदद्यात् । विंशतिदिनात्सुखीभवति ॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलादुःखिताभवति ॥–॥ अस्मिन्नक्षत्रेसमावर्तनविवाहसर्वमंत्रतंत्रप्रयोगभूभृत्त्वदासीसंग्रहक्रयविक्रयलांगलापकर्षणबीजावापद्यूतनिक्षेपांजनकन्यादानवाद्यंत्रप्रयोगवापीकूपतटाकश्राद्धपितृतर्पणादीनिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रे जातगुणाः–विद्वान् । विनयरतः । पितृमातृभक्तः । बहुगुणवान् । दीर्घजीवी । धनाढ्यः । कार्यनिपुणः । बंधुवर्गोपकारी । स्पष्टभाषी । रिपुगणवशीकरः।अल्पबुद्धिः । क्षिप्ररोगी।स्वस्त्रीप्रियः।रक्तलोचनः।उदरेमत्स्यांकितः । सप्तनवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

### २०३ अथ पूर्वफल्गुनीनक्षत्रस्य–

संपूजयाम्यर्यमणंफल्गुनीतारदेवताम् । धूम्रवर्णंरथारूढंसुशक्तिकरसंयुतम् ॥ १ ॥ अर्यमादेवता । धूम्रवर्णः ॥–॥ (नक्षत्रचूडामणौ)– पुरप्रवेशंनगराभिघातंविषप्रयोगंभयरोगदुःखम् । मंत्रौषधंगारुडखन्यवादंभाग्याख्यभेतंविहितंविदध्यात् ॥ १ ॥ पूर्वफल्गुन्युत्तरफल्गुन्योर्द्वेद्वेखट्वाचौकम् । मो टा टी टू पूर्वफल्गुनी । श्वेतवर्णः । द्वितारा । दंडाकृतिः । स्त्री । मनुष्यगणः । मूषकायोनिः । भगोदेवता । विप्रजातिः । चतुष्पात् । अधोमुखम् । सुलोचनम् । उग्रम् । अंतः । समतारा । स्थानंग्रामः । अग्निमंडलम् । गृध्रपक्षी । पालाशवृक्षः । स्वराक्षरः ।

विंशतिघटिकाभ्यःपरंविषनाड्यश्चतस्रः। यात्रावर्ज्या।अथवाअष्टादशघटिकाभ्यःपरंप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवामासमरिष्टं नवदिनानिवा मासद्वयंवा ॥—॥ तच्छांत्यैअर्यमदेवतापूजाविधानम् । रक्तवस्त्रम् । रक्तचंदनगंधः । अर्यमणमितिमंत्रेणरक्तकरवीरपुष्पैः बिल्वधूपैः कृसरान्ननैवेद्यैः षोडशोपचारपूजांकृत्वा माषान्नाज्येन गायत्र्याअष्टोत्तर शतंजुहुयात् । गंधमाल्यैःप्रियंग्वौदनबलिंहरेत्।मासात्सुखीभवति ॥—॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापतिसुतहीनाभवति ॥—॥ अस्मिन्नक्षत्रेअक्षराभ्यासशास्त्राभ्यासविषाग्निप्रयोगादिकार्याणिप्रशस्तानि॥—॥ अस्मिन्नक्षत्रेजातगुणाः—रूपवान् । दांतः। लोकजनप्रियः । गीतवाद्यप्रियः । आभरणाभियुतः । अध्ययनप्रियः । चपलः । मातृहीनः । नवतिवर्षाणि परमायुरित्यादिकंसर्वमस्मिन्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३०४ अथ उत्तराफल्गुनीनक्षत्रस्य—

भगंरथवरारूढंद्विभुजंशंखचक्रकम् ॥ फल्गुनीदेवतांध्यायेभक्ताभीष्टवर प्रदम् ॥ १ ॥ रक्तवर्णः । भगोदेवता ॥—॥ ( नक्षत्रचूडामणौ )—वापीकूपतटाकदीर्घिकपुरप्रासाददेवालयाःशय्यारत्नविभूषणांगरचनासिंहासनाध्यासनम् ॥ स्नानोद्वर्त्तनमंगलंभरणयंराजाभिषेकंतथाकृष्यारंभ पुरप्रवेशमखिलंकर्तव्यमार्यम्णभे ॥ १ ॥ पूर्वफल्गुन्युत्तरफल्गुन्यौ द्वेद्वेखट्वाचौकम् ॥ टेटोपापी उत्तराफल्गुनी ॥ रक्तवर्णम् ॥ द्वितारा। दंडाकृतिः। स्त्री। मनुष्यगणः। गोयोनिः। भगोदेवता। क्षत्रियजातिः। त्रिपात् । उर्ध्वमुखम् । अंधलोचनम् । ध्रुवम् । अंतः । अत्यर्धतारा। स्थानं शून्यम् । बदरीवृक्षः । पक्षीकंकः। जराच अक्षरः ॥ अस्मिन्नक्षत्रेबृहस्पतिर्जातः ॥ अष्टादशघटिकाभ्यःपरं विषनाड्यश्चतस्रः । शाकमांसभोजनंकृत्वादक्षिणपश्चिमप्रयाणेशुभम् ॥ ज्वरेसप्तदिनान्यरिष्टानि ॥—॥ तच्छांत्यैभगदेवतापूजाविधानम् ।

कुंकुमगंधः । नीलोत्पलपुष्पम् । बिल्वधूपः । रक्तशाल्योदननैवेद्यम् । भगप्रणेत इतिमंत्रेणषोडशोपचारैःसंपूज्यघृतमिश्रान्नेनगायत्र्याअष्टोत्तरशतंहुत्वागंधमाल्यैःघृतोदनबलिंहरेत् । मासात्सुखीभवति ॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलाधर्मिणीपुत्रवतीभवति ॥–॥अस्मिन्नक्षत्रेक्रतुपुंसवनसीमंतनामकरणान्नप्राशनकर्णवेधचौलोपनयनविवाहसमावर्तनवस्त्राभरणपट्टबंधनसिंहासनांदोलिकारोहणपुरग्रामगृहादिप्रवेशवेदाभ्यासयज्ञबीजावापनतोरणालंकारादिस्थिरकार्याणिप्रशस्तानि॥–॥अस्मिन्नक्षत्रेजातगुणाः–काव्यशीलः।अभिमानी । धर्मज्ञः । सुभगः । कुशलः । श्रेष्ठः । स्त्रीलोलः । रोगी । कृष्णदेहः । विनयप्रियः । अल्पसौख्यवान् । पंडितः। शरीरेमत्स्यांकितः । चतुरशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथे द्रष्टव्यम् ॥ १ ॥

## ३०८ अथ हस्तनक्षत्रस्य–

सवितारमहंवंदेसप्ताश्वरथवाहनम् ॥ पद्मासनस्थंछायेशंहस्तनक्षत्रदेवताम् ॥१॥ रक्तवर्णः । सवितादेवता ॥–॥(नक्षत्रचूडामणौ)–पाणिग्रहाद्यबलिमंगलकर्मयात्राराजाभिषेकगृहहर्म्यसुरप्रतिष्ठाः ॥ चित्रादिवस्त्रवरवाहनभूषणानिकुर्य्युद्यमाद्यखिलकर्मकरोतुविद्वान्॥ १ ॥हस्तःपाण्याकारंशराः ॥ पू षं णा ढा हस्तः । कृष्णवर्णः । पंचतारा।हस्ताकृतिः । पुमान् । देवगणः । महिषयोनिः । सूर्योदेवता । वैश्यजातिः । चतुष्पात् । तिर्यङ्मुखम् । लघुः । मंदलोचनम् । क्षिप्रम् । अंतः।स्थानम्।पत्तनम् । वायुमंडलम् । अंबष्ठवृक्षः । पक्षीशुकः । ला अक्षरः । सूर्योदेवता ॥ अस्मिन्नक्षत्रेनकुलसहदेवौजातौ । एकविंशतिघटिकाभ्यः परंविषनाड्यश्चतस्रः । तंडुलंभक्षयित्वासर्वदिक्षुप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवापंचदशदिनान्यरिष्टानि ॥–॥ तच्छांत्यैसवितृदेवतापूजाविधानम् । रक्तवस्त्रम् । रक्तगंधः । रक्तकरवीरपुष्पम् । दशांगधूपः । अपू-

पनैवेद्यम् । उदित्यमितिमंत्रेणषोडशोपचारैःसंपूज्यअर्कसमिदाज्येनगा-
यत्र्याअष्टोत्तरशतंहुत्वागंधमाल्यैर्माषान्नबलिंहरेत् । पंचदशाहात्सुखी
भवति॥—॥अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रिणीभवति ॥—॥अस्मिन्नक्षत्रे
क्रतुपुंसवनान्नप्राशनकर्णवेधचौलोपनयनवेदशास्त्राभ्याससमावर्तनविवाह-
तैलाभ्यंगवस्त्राभरणशांतिकपौष्टिकमहोत्सवांदोलिकारथाऽश्वारोहणपशु-
क्रयविक्रयकृषिप्रारंभबीजावापनधान्यसंग्रहनववस्त्रधारणवररत्नसंग्रहमं-
त्रशास्त्रयात्राभैषज्यादीनिप्रशस्तानि ॥—॥ अस्मिन्नक्षत्रेजातगुणाः—
विख्यातः । प्रगल्भवाक्यः । वहुशास्त्रविभवः । दक्षः । धनाढ्यः ।
स्त्रीलोलः । स्वदारानुवर्ती । परकार्यहितः।द्विजगुरुपूजकः । कीर्तिमान्।
शत्रुघ्नः । दारचोरः । शरीरेमत्स्यांकितः । अष्टाशीतिवर्षाणिपरमायु-
रित्यादिकमस्मिन्ग्रंथे द्रष्टव्यम् ॥ १ ॥

## ३०६ अथ चित्रानक्षत्रस्य—[१४]

त्वष्टारंरथमारूढंचित्रानक्षत्रदेवताम् ॥ शंखचक्रान्वितकरंकिरीटिन-
महंभजे ॥ १ ॥ रक्तवर्णः । त्वष्टादेवता ॥—॥ (नक्षत्रचूडामणौ )—।
चित्रांबराभरणभूषणचित्रकर्ममुक्तामणिश्रवणवेधनविद्रुमंच ॥ त्वष्टृव्रतो
पनयनक्षुरकर्मकार्यसंगीतनृत्यविविधोद्यमवाद्यविद्याः ॥ १ ॥ चित्रा-
मौक्तिकमेकम् । पे पो रा री चित्रा । श्वेतवर्णः । एकतारा । मौक्ति-
काकारम् । पुमान् । राक्षसगणः ।व्याघ्रयोनिः । त्वष्टादेवता । उपजीवि
जातिः । द्विपात् । तिर्यङ्मुखम् । मध्यलोचनम् । मृदुः । बाह्यम् ।
समतारा । स्थानं पत्तनम् । वायुमंडलम् । बिल्ववृक्षः । पक्षीकाकः ।
टवाअक्षरः । विंशतिघटिकाभ्यःपरंविषनाड्यश्चतस्रः । यात्रावर्ज्या ।
अथवाचतुर्दशघटिकानंतरंचित्रान्नभोजनंकृत्वादक्षिणपश्चिमप्रयाणेशुभ-
म् । ज्वरेएकादशदिनान्यरिष्टानि ॥—॥ तच्छांत्यैत्वष्टृदेवतापूजावि-
धानम् । चित्रवस्त्रम् । कुंकुमगंधः । चित्रपुष्पम् । सर्जरसधूपः । मोद-
कनैवेद्यम् । चित्रंदेवानामितिमंत्रेणषोडशोपचारैःसंपूज्यचित्रान्नाज्येन-

गायत्र्याष्टोत्तरशतंहुत्वागंधमाल्यैश्चित्रान्नबलिंहरेत् ।एकादशाहात्सुखी भवति॥-॥अस्मिन्नक्षत्रेप्रथमरजस्वलासमर्थाभवति॥-॥अस्मिन्नक्षत्रेस्त्री भोगनामकरणान्नप्राशनकर्णवेधचौलोपनयनाक्षरग्रहणवेदशास्त्राभ्यासतैलाभ्यंगचित्रवस्त्रनानाभरणधारणगजाश्वरक्षाबंधनरथशिक्षादिनृत्यदिव्य गोपनस्त्रीगोपनचित्रलेखनादिनानाविद्यारंभनानावनस्पत्यौषधप्रारंभभैषज्यादिशुभकार्याणिप्रशस्तानि ॥—॥अस्मिन्नक्षत्रेजातगुणाः—धनप्रियः। भोगवान् । कामी । चतुरशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथे द्रष्टव्यम् ॥ १ ॥

## २०७ अथ स्वातीनक्षत्रस्य-

वायुंवरमृगारूढंस्वातीनक्षत्रेदेवताम् ॥ खड्गचर्मोज्ज्वलकरंधूम्रवर्णं नमाम्यहम् ॥ १ ॥ धूम्रवर्णः ॥ वायुर्देवता॥—॥( नक्षत्रचूडामणौ )—सस्योद्यानपुरामरालयगृहप्रासादसंस्थापनंलोलांदोलसुखासनोष्ट्रतुरगस्कंधेसमारोहणम् ॥ विद्यारंभविवाहपौष्टिकवणिक्कृष्याद्यनेकागमान्नानावस्त्रविभूषणांगरचनांप्राहुर्बुधामारुते ॥ १ ॥ स्वातीमाणिक्यमेकम् ॥ रू रे रो ता स्वाती । रक्तवर्णः । एकतारा । विद्रुमाभम् । देवगणः । महिषीयोनिः । वायुर्देवता । शूद्रजातिः । चतुष्पात् । चरम् । तिर्यङ्मुखम् । सुलोचनम् । स्थानं शून्यम् । वायुमंडलम् । अर्जुनवृक्षः । पक्षीश्येनः । वकाराक्षरः । चतुर्दशघटिकाभ्यःपरंविषनाड्यश्चतस्रः। यात्रावर्ज्या। अथवाचतुर्दशघटिकानंतरमामलकपिष्टंभक्षयित्वा दक्षिणपश्चिमप्रयाणेशुभम् ॥ अस्मिन्नृसिंहोजातः । ज्वरेप्राणभयम् । अथवामासमरिष्टम् ॥—॥ तच्छांत्यैवायुदेवतापूजाविधानम् । कृष्णागरुगंधः । माधवीपुष्पम् । कृष्णागरुधूपः । दध्योदननैवेद्यम् । तववायवृतस्पतइतिमंत्रेणषोडशोपचारैःसंपूज्यलाजाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैर्दध्योदनबलिंहरेत्।मासात्सुखीभवति॥—॥अस्मिन्नक्षत्रेप्रथमरजस्वलासन्मार्गासौभाग्यवतीभवति॥-॥अस्मिन्नक्षत्रेस्त्रीसंभोग

नामकरणान्नप्राशनचौलोपनयनाक्षरग्रहणज्योतिषादिशास्त्राभ्यासममा-
वर्तनविवाहतैलाभ्यंगनववस्त्रधारणमौक्तिकाभरणनृत्तगीतवाद्यारंभगजा-
श्वांदोलिकारोहणप्रासादादिकृषिप्रारंभणबीजावापनादिशुभकार्याणिप्रश-
स्तानि ॥-॥ अस्मिन्नक्षत्रेजातगुणाः–सौभाग्यवान् । दांतः । दाता ।
धैर्यशाली । दीर्घांगः । रुचिरतनुः । विशालाक्षः । विचित्रचरित्रहृदयः ।
विख्यातः । रोषी । द्विजगुरुदेवतापूजारतः । धनव्ययकरः । बंधुजनप्रि-
यः । काव्यशीलः । चतुरतरः । हास्यप्रियः । स्वतंत्रः । नवतिवर्षाणि
परमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३०८ अथ विशाखानक्षत्रस्य–

इंद्राग्नीशुभदौस्यातांविशाखादेवतेशुभे ॥ नमाम्येकरथारूढौवराभ-
यकरांबुजौ ॥ १ ॥ रक्तवर्ण अग्निः।स्वर्णवर्ण इंद्रः॥इंद्राग्नीदेवते ॥-॥
( नक्षत्रचूडामणौ )--मणिकनकविभूषायज्ञहोमोपवासव्रतहुतवहकार्य
स्नेहपाशादिकुर्यात् ॥ जगतिमुनिवरेण्याधातुकर्मद्विदैवेसुरगुरुपितृपूजा
योजयेदग्निभेषु ॥ १ ॥ विशाखाकुलालचक्रंपंच । तो तू ते ती विशा-
खा।रक्तवर्णः । पंचतारा । पुमान् । राक्षसगणः । अधोमुखम् । अंध-
लोचनम् । व्याघ्रयोनिः । साधारणम् । गण अक्षरः । विकतवृक्षः।पक्षी-
कारंडवः । इंद्राग्नीदेवते । क्षत्रियजातिः । त्रिपात् । समतारा । तोर-
णाकृतिः । स्थानंशून्यम् । वह्निमंडलम् । चतुर्दशघटिकाभ्यःपरंविष-
नाड्यश्चतस्रः । यात्रावर्ज्या । ज्वरेप्राणभयम् । अथवापंचदशदिनान्य-
रिष्टानि ॥-॥ तच्छांत्यैइंद्राग्निदेवतापूजाविधानम् । वक्तवस्त्रम् । अष्ट-
गंधः । श्वेतपुष्पम् । कालागरुधूपः । रक्तांगारौदननैवेद्यम् । त्र्यंबकमं-
त्रेणषोडशोपचारैःसंपूज्यघृतमिश्रान्नैर्गायत्र्याअष्टोशतंजुहुयात् । रक्तान्नं
सुरयासहबलिंहरेत्।सुखीभवति ॥ अस्मिन्नक्षत्रेप्रथमरजस्वलासौभाग्य-
वतीभवति॥-॥(ग्रन्थपातः)अस्मिन्नक्षत्रेजातगुणाः--विद्वत्प्रियः। विनय
रतः।दीर्घजीवी । धनाढ्यः । कार्यनिपुणः।बंधुवर्गोपकारी।बहुगुणयुतः ।

स्पष्टभाषी । रिपुगणवशीकारीः । अल्पबुद्धिः । क्षिप्ररोगी । हृद्ग्राही । स्वस्त्रीप्रियः । रक्तलोचनः । उदरेमत्स्यांकितः । नवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३०९ अथ अनूराधानक्षत्रस्य-

मित्रंपद्मासनारूढमनूराधेश्वरंभजे ॥ शूलांकुशलसद्बाहुयुग्मंशोणितवर्णकम् ॥ १ ॥ रक्तवर्णः । मित्रोदेवता ॥-॥ ( नक्षत्रचूडामणौ ) चित्रक्रियाकनकरत्नपरीक्षणंचसंरोहणंतुरगगोवृषकुंजराणाम् ॥ चूर्णप्रयोगनयनांजनभेषजानियात्राविवाहशुभपौष्टिककर्ममैत्रे ॥ १ ॥ अनूराधापुष्पाकारात्रीणि । ना नी नू ने अनूराधा । श्वेतवर्णः । त्रितारा । पुमान् । देवगणः । पुष्पाकृतिः । मित्रोदेवता । शूद्रजातिः । हरिणीयोनिः । तिर्यङ्मुखम् । मंदलोचनम् । मृदुः । स्थानंपत्तनम् । इंद्रमंडलम् । बकुलवृक्षः । पक्षीघूकः । तथअक्षरः ॥ अस्मिन्नंदनवनंजातम् । दशघटिकाभ्यःपरंविषनाड्यश्चतस्रः । कुलित्थभक्षणंकृत्वासर्वदिक्षुप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवामासमरिष्टम् ॥-॥ तच्छांत्यैमित्रदेवतापूजाविधानम् ॥ रक्तवस्त्रम् ॥ कुंकुमंगधः । सुगंधिपुष्पम् । बिल्वपत्रम् । बिल्वधूपः । कृसरान्ननैवेद्यम् । देवस्यत्वेतिमंत्रेणषोडशोपचारैःसंपूज्यशाकमूलफलाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात् । प्राग्दिशिगंधमाल्यैर्गुडोदनबलिंहरेत् । मासात्सुखीभवति ॥-॥ अस्मिन्नक्षत्रे प्रथमरजस्वलाधनसुपुत्रवतीभवति ॥-॥ अस्मिन्नक्षत्रे ऋतुपुंसवनसीमंतनामकरणान्नप्राशनकर्णवेधचौलोपनयनवेदशास्त्राभ्याससमावर्तनविवाहतैलाभ्यंगनववस्त्रधारणनवरत्नाभरणराजाभिषेकरथांदोलिकारोहणगृहारंभशंकुस्थापनपुरग्रामादिगृहप्रवेशनृत्तगीतवेणुवाद्यादिप्रारंभशिल्पशास्त्राभ्यासनवरत्नपशुसंग्रहक्रयविक्रयकृषिप्रयोगबीजावापनश्राद्धभैषज्यादिकार्याणि प्रशस्तानि ॥-॥ अस्मिन्नक्षत्रेजातगुणाः-दयापरः । प्राज्ञः । क्षुधा-

तुरः। शुभदः। सन्मार्गवान्। भोगी। नृपजनवरदः। प्रसादी। अल्पसुतः शांतः। अन्नदाता। ख्यातिमान्। राजपूज्यः। युवतिजनवशगः। अन्यदेशस्थः। नवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम्॥

## २१० अथ ज्येष्ठानक्षत्रस्य-

श्वेतहस्तिनमारूढंवज्रांकुशलसत्करम्। सहस्रनेत्रंपीताभमिंद्रंहृदिविभावये॥ १॥ पीतवर्णः। इंद्रोदेवता॥–॥( नक्षत्रचूडामणौ )--अरिनगरविखातंभेदनंचोहकार्यंधनुरसिमुसलादीन्शिल्पकंहोमकार्यम्॥ कपटकुटिलविद्याचोरदंडाभिचारद्रविणहरिणमैंद्रप्रोक्तमन्यच्चकार्यम्॥ १॥ ज्येष्ठाकुंडलाकारंत्रीणि। नोयार्यीयूज्येष्ठा। श्वेतवर्णम्। त्रितारा। कुंडलाकृतिः। स्त्री। राक्षसगणः। हरिणयोनिः। इंद्रोदेवता। उपजीविजातिः। चतुष्पात्। तिर्यङ्मुखम्। मध्यलोचनम्। तीक्ष्णम्। स्थानंशून्यम्। इंद्रमंडलम्। शाल्मलीवृक्षः। चातकपक्षी। य थ अक्षरौ। चतुर्दशघटिकाभ्यःपरंविषनाड्यश्चतस्रः। यात्रावर्ज्या। अथवा दध्योदनतिलभक्षणंकृत्वादक्षिणपश्चिमप्रयाणेशुभम्। ज्वरेप्राणभयम्। अथवामासमरिष्टम्। ॥–॥ तच्छांत्यैइंद्रदेवतापूजाविधानम्। पीतवस्त्रम्। श्रीगंधः। पाटलपुष्पम्। कर्पूरागरुधूपः। चित्रोदननैवेद्यम्। इंद्रंवो विश्वतस्परीतिमंत्रेणषोडशोपचारैःसंपूज्यचित्रान्नाज्येनगायत्र्याअष्टोत्तरशतंहुत्वागंधमाल्यैश्चित्रोदनबलिंहरेत्। मासात्सुखीभवति॥--॥ अस्मिन्नक्षत्रेप्रथमरजस्वलादारिद्राभवति। बहुपुत्रिणीचभूयात्॥–॥ अस्मिन्नक्षत्रेशौर्यकर्मविषाग्निप्रयोगाभिचारयंत्रमंत्राराधनयुद्धद्यूतव्यवहारचौर्ययात्राप्रयोगमोक्षस्तंभनादिप्रयोगशास्त्राभ्यासभूतप्रेतोच्चाटनविद्यावादस्त्रीपरद्रव्यापहरणपशुक्रयविक्रयादीनिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रे जातगुणाः–श्यामः। दृढकरग्रहः। विद्यारतः। बहुसुतमित्रवान्। संतुष्टः। सत्यवादी। स्त्रीलोलः। क्लिष्टः। रिपुगणवान्। क्षिप्रकोपः।

मध्यजीवी । धनवान् । मृदुभाषी । राजपूज्यः । द्विजगुरुपूजकः । शरीरेतिलमत्स्यांकितः।स्वभार्यारतः । पंचनवतिवर्षाणिपरमायुरित्यादिकं सर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २११ अथ मूलानक्षत्रस्य-

खड्गखेटधरंकृष्णंयातुधानंनृवाहनम् ॥ ऊर्ध्वकेशंविरूपाक्षंभजेमूलाधिदेवताम् ॥ १ ॥ कृष्णवर्णः । यातुधानोदेवता ॥–॥ ( नक्षत्रचूडामणौ)--संरोपणंविविधगुल्मलतातरूणांमुद्गेक्षुमाषतिलसर्षपवाहनंच॥मंत्रौषधास्त्रनिखिलागमतंत्रविद्याप्रारंभणंवरवधूवरणंचमूले ॥ १ ॥ मूलांकुशंषट् । ये यो बा बी (भा भी) मूलम् । कृष्णवर्णः।षट्तारा।अंकुशाकृतिः। सिंहात्मवान् । नपुंसकम् । राक्षसगणः । शुकयोनिः । निर्ऋतिर्देवता । दारुणम् । अधोमुखम् । सुलोचनम् । अंतः । समम् । स्थानम् । पत्तनम् वरुणमंडलम् । सर्जवृक्षः । पक्षीचक्रवाकः । पफौअक्षरौ ॥ अस्मिन्नक्षत्रेहनूमाञ्जातः । विंशतिघटिकाभ्यःपरंविषनाड्यश्चतस्रः । कंदमूलंभुक्त्वापश्चिमदक्षिणप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवानवदिनान्यरिष्टानि॥–॥तच्छांत्यैयातुधानदेवतापूजाविधानम्।कृष्णवस्त्रम्। कृष्णागरुगंधः । कृष्णसरोजपुष्पम् । मेषशृंगधूपः । रक्तरसान्ननैवेद्यम् । मोषुणःपराइतिमंत्रेणषोडशोपचारैःसंपूज्यकंदमूलफलाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात्।गंधमाल्यैर्गुडोदनबलिंहरेत् । कृष्णधेनुंदद्यात्।नवाहात्सुखीभवति ॥–॥अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीभवति ॥–॥ अस्मिन्नक्षत्रेक्रतुपुंसवनजातकर्मसीमंतनामकरणान्नप्राशनविद्यारंभसमावर्तनविवाहतैलाभ्यंजनसुवर्णाभरणयज्ञवृक्षप्रारंभक्षौरकर्मभैषज्यकृषिप्रयोगबीजावापक्रमुकनालिकेरनागवल्लीस्थापनवाणिज्यतटाकादिबिलप्रवेशभूतोच्चाटनमंत्रप्रयोगयंत्रोद्धारादीनिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः-- धर्मज्ञः । धनाढ्यः । तस्करः । मान्यः । बंधुरतः । रक्तवर्णः । कामी ।

अतिरोगी। चंचलः। शठकार्यः। विनयपरः। स्वतंत्रः। द्विनवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३१२ अथ पूर्वाषाढानक्षत्रस्य—

आषाढदेवतानित्यमापःसंतुशुभावहाः ॥ समुद्रगास्तरंगिण्योह्लादिन्यःसर्वदेहिनाम् ॥ १ ॥ शुभ्रवर्णाः । आपोदेवताः ॥—॥ (नक्षत्रचूडामणौ)—तटाकवापीह्रदकूपदीर्घिकाप्रवालमुक्तामणिरत्नसंग्रहम् ॥ ग्रहार्गलोद्घट्टनशस्त्रतैक्ष्ण्यंसमाहुरंभोभवेनेनिशाकरे ॥ १ ॥ बु ध भ ढ पूर्वाषाढा। श्वेतवर्णः। चतुस्तारा। अर्धचंद्राकृतिः। स्त्री। वानरयोनिः। आपोदेवताः। विप्रजातिः। अधोमुखम्। चतुष्पात्। उग्रम्। अंतरिक्षम्। अर्धतारा। वायुमंडलम्। स्थानंशून्यम्। जंबूवृक्षः। पक्षीशुकः। बभ अक्षरौ। अस्मिन्नक्षत्रेपुष्पदंतोजातः ॥ चतुर्विंशतिघटिकाभ्यःपरंविषनाडयश्चतस्रः। यात्रावर्ज्या। अथवाषोडशघटिकाभ्यःपरंजलंपीत्वा दक्षिणपश्चिमप्रयाणेशुभम्। ज्वरेप्राणभयम्। अथवामासमरिष्टम् ॥--॥ तच्छांत्यैअब्देवतापूजाविधानम्। श्वेतवस्त्रम्। श्वेतकरवीरपुष्पम्। मनश्शिलाधूपः। क्षीरान्ननैवेद्यम्। यत्किंचदमितिमंत्रेणइमंमेवरुणेतिमंत्रेणवाषोडशोपचारैस्संपूज्य रक्तशालितंडुलाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात्। गंधमाल्यैः क्षीरौदनंकृसरान्नंवाबलिंहरेत्। मासात्सुखीभवति ॥—॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापतिहीनादुश्चरिताभवति ॥-॥ ॥ अस्मिन्नक्षत्रेगणिकारंभसंग्रहेक्षुस्थापनाक्षरग्रहणश्रवणवेधशत्रुच्छेदनश्राद्धादिकार्याणिप्रशस्तानि ॥—॥ अस्मिन्नक्षत्रेजातगुणाः—किंचिद्दीर्घदेहः। सूक्ष्मांगुलिः। विनयरतः। भूपमान्यः। ग्राही। ख्यातः। निर्जितधनः। आसक्तः। हास्यप्रियः। नवतिवर्षाणिपरमायुरित्यादिकंसर्वमस्मिन्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३१३ अथ उत्तराषाढानक्षत्रस्य—

विश्वान्देवानहंवंदेऽषाढानक्षत्रदेवताम्। श्रीपुष्टिकीर्तिधीदात्रींसर्व-

पापापनुत्तये ॥ १ ॥ शुभ्रवर्णः । विश्वेदेवादेवताः ॥–॥ (नक्षत्रचूडामणौ)–
कुर्यादायतनंशुभंस्थिरगृहंगीर्वाणसंस्थापनं देवाद्यर्चनशांतिकोत्सवविधिं-
भूपाभिषेकंतथा ॥ स्तंभस्थापनबीजवापनलतागुल्मादिसंरोपणंसीमासा-
धनवस्त्रभूषणशुभोद्वाहादिकंविश्वभे ॥ १ ॥ उत्तराषाढागजशिरोष्टकम् ॥
बे बो जा जी उत्तराषाढा । रक्तवर्णः । अष्टतारा । गजशिरआकृतिः ।
स्त्री । मनुष्यगणः । गोषंडयोनिः । विश्वेदेवादेवताः । त्रिपात् । ऊर्ध्व-
मुखम् । मंदलोचनम् । पनसवृक्षः । पक्षीभारद्वाजः । स्थिरम् । स्थानं-
शून्यम् । इंद्रमंडलम् । मकाराक्षरः ॥ अस्मिनूशल्योजातः । विंश-
तिघटिकाभ्यःपरंविषनाड्यश्चतस्रः । सक्तुभक्षणंकृत्वापश्चिमदक्षि-
णप्रयाणेशुभम् । ज्वरेप्राणभयम् । अथवामासमरिष्टम् ॥–॥ तच्छां-
त्यैविश्वेदेवपूजाविधानम् । श्वेतवस्त्रम् । श्रीगंधः । पंचवर्णपुष्पम् ।
उशीरधूपः । पंचभक्ष्यनैवेद्यम् । विश्वेदेवासआगतइतिमंत्रेणषोडशोप-
चारैस्संपूज्य मुद्गान्नाज्येनगायत्र्या अष्टोत्तरशतंजुहुयात् । गंधमाल्यैः
क्षीरोदनबलिंहरेत् । मासात्सुखीभवति।श्वेतधेनुंदद्यात् ॥–॥ अस्मिन्नक्ष-
त्रेप्रथमरजस्वलापतिव्रतापुत्रवतीभवति ॥–॥ अस्मिन्नक्षत्रेकृतुपुंसवन-
सीमंतनामकरणान्नप्राशनकर्णवेधचौलोपनयनवेदशास्त्राभ्याससमावर्तन-
विवाहतैलाभ्यंगराज्यवस्त्रालंकारराजाभिषेकपुरग्रामादिशंकुस्थापनप्रवे-
शगुल्मादिबीजावापनधनधान्यसंग्रहसुरभिक्रयभूमिपरिग्रहतटाकादि-
स्थिरकार्याणिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः–सर्वज्ञः ।
सुखचित्तः । सुवृत्तः । पृथुलजघनः । विशालाक्षः । गुणाधिकः ।
हास्यशीलः । अल्पनिद्रः । कृपावान् । वाग्मी । धार्मिकः । शूरः ।
नवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## २१४ अथ अभिजिन्नक्षत्रस्य–

निर्गुणंब्रह्मभूयान्मेज्ञानैश्वर्यप्रदंसदा । अभिजित्तारकेशानंवेदांतकृत-
संश्रयम् ॥ १ ॥ ( अत्रैतावन्मात्रलेखोमातृकायाम् )

## २१८ अथ श्रवणनक्षत्रस्य–

शांताकारंचंतुर्हस्तंश्रोणानक्षत्रवल्लभम् ॥ विष्णुंकमलपत्राक्षंध्यायेद्गरुडवाहनम् ॥ १ ॥ नीलमेघश्मामः । विष्णुर्देवता ॥–॥ ( नक्षत्रचूडामणौ )–कुर्याद्धोमंयज्ञदीक्षाव्रतानिविद्यारंभंचौलमौंजीविधानम् ॥ गर्भाधानंकर्णवेधंप्रयाणंविष्णोर्धिष्ण्येदेवतासुप्रतिष्ठाम् ॥ १ ॥ श्रोणाहारत्रयम् ॥ शी शु शे शो श्रवणम् । कृष्णवर्णः । धनुराकृतिः । पुमान् । देवगणः । वानरयोनिः । विष्णुर्देवता । ब्राह्मणजातिः । चतुष्पात् । ऊर्ध्वमुखम् । सुलोचनम् । चरः । अंतर्बाह्यम् । पत्तनम् । स्थानम् । इंद्रमंडलम् । टोक्षरः । समतारा । अर्कवृक्षः । पक्षीसारसः ॥ अस्मिन्नक्षत्रेअंगारकविभीषणौजातौ । दशघटिकाभ्यःपरंविषनाड्यश्चतस्रः ।शालिपिष्टंभक्षयित्वादक्षिणपश्चिमप्रयाणेशुभम् । ज्वरेएकादशदिनान्यरिष्टानि ॥–॥ तच्छांत्यैविष्णुपूजाविधानम् । कृष्णवस्त्रम् । चंदनकस्तूरीकर्पूरकुंकुमगंधः । तुलसीपुष्पम् । दशांगधूपः । शाल्योदननैवेद्यम् । अतोदेवाइतिमन्त्रेणइदंविष्णुरितिमंत्रेणवाषोडशोपचारैस्संपूज्यअश्वत्थसमित्तंडुलाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैःक्षीरौदनबलिंहरेत् । एकादशाहात्सुखीभवति ॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलाभाग्यपुत्रवतीभवति ॥–॥ अस्मिन्नक्षत्रेऋतुपुंसवनसीमंतनामकरणान्नप्राशनकर्णवेधचौलोपनयनक्षौराभ्यंजनाक्षरग्रहणवेदशास्त्राभ्यासनववस्त्रभूषणमौक्तिकारंभराजाभिषेकपूर्णमासादिग्रहप्रवेशवैष्णवदेवतास्थापनयज्ञोपदेशशांतिकपौष्टिकमहोत्सवमंत्राभ्यासकृषिप्रारंभबीजावापनभैषज्यादीनिप्रशस्तानि ॥–॥ अस्मिन्नक्षत्रेजातगुणाः–कृष्णांगः । पुष्टिमान् । चित्रांबरगंः।धप्रियः।परसतीरतिप्रियः।उदारशीलः। बंधुजनरतः । बहुव्ययकरः । सुभगः । वाचकः । दुर्मंत्री । गुल्मादिरोगी । विदेशवासी । चपलः । मंत्रवादी । प्रभुः।गुह्यदेशेमत्स्यांकितः ॥ नवतिवर्षाणिपरमायुरित्यादिकंसर्वमस्मिन्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३१६ अथ [24]धनिष्ठानक्षत्रस्य-

श्रविष्ठादेवतांवंदेवसूनूवरधराश्रितान् ॥ शंखचक्रांकितकरान्किरीटांकितमस्तकान् ॥ १ ॥ श्वेतवर्णः । वसवोदेवताः ॥-॥ ( नक्षत्रचूडामणौ )--विद्यागमोपनयनांजनभेषजानिश्वेतातपत्रशयनासनभोजनानि ॥ यज्ञाभिषेकशुभशांतिकपौष्टिकानिसिध्यंतिहर्म्यनगराणिचवासवर्क्षे ॥ १ ॥ धनिष्ठामर्दलाकारंचतस्रः । गा गी गू गे धनिष्ठा । श्वेतवर्णः । चतुस्तारा । मृदंगाकृतिः । स्त्री । राक्षसगणः । सिंहीयोनिः । वसवोदेवताः । उपजीविजातिः । ऊर्ध्वमुखम् । अंधलोचनम् । अंतरिक्षम् । स्थानंग्रामः । इंद्रमंडलम् । शमीवृक्षः । पक्षीभ्रमरः । ञ्य ( ञिर ) क्षरः ॥ अस्मिन्नक्षत्रेदुंदुभिर्जातः । दशघटिकाभ्यः परंविषनाडयश्चतस्रः । तिलतंडुलभक्षणंकृत्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेमासमरिष्टम् ॥-॥ तच्छांत्यैवसुदेवतापूजाविधानम् । श्वेतवस्त्रम् । चंदनगंधः । शतपत्रपुष्पम् । गुग्गुलधूपः । पायसनैवेद्यम् । त्रातारमितिमंत्रेणषोडशोपचारपूजांकृत्वाऔदुंबरसमिदाज्येनगायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैःक्षीरौदनबलिंहरेत् । मासात्सुखीभवति ॥-॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीभवति ॥-॥ अस्मिन्नक्षत्रेस्त्रीसंभोगनामकरणान्नप्राशनकर्णवेधचौलोपनयनतैलाभ्यंगवस्त्राभरणधारणचतुरंगयानांदोलिकाच्छत्रचामरधारणदेवतासेवाप्रारंभयात्राप्रवेशशांतिकपौष्टिकमहोत्सवनृत्तगीतवाद्यकृषिप्रारंभबीजावापनगजादिशिक्षाक्रयविक्रयादीनिप्रशस्तानि ॥-॥ अस्मिन्नक्षत्रेजातगुणाः-अल्पशास्त्रज्ञः । तेजस्वी । उद्योगवान् । स्थूलतनुः । नृत्तगीतांगनाप्रियः । दीनः । अनृतवादी । नृपसेवकः । धातुवादी । कृपाहीनः । दुष्कृती । उष्णदेही । पिशुनः । पंचसप्ततिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

## ३१७ अथ [25]शतभिषङ्नक्षत्रस्य-

वरुणंसंततंवंदेसुधाकलशधारिणम् । पाशहस्तंशतभिषग्देवतांदेववं-

दितम् ॥ १ ॥ स्वर्णवर्णः । वरुणोदेवता ॥—॥ ( नक्षत्रचूडामणौ )—
॥ जलाशयोद्यानकृषिक्रियाश्वप्रवालमुक्तादिकसंग्रहंच ॥ तुरंगशां-
तिंजपहोमदानंकुर्याच्छतर्क्षेनयनांजनानि ॥ १ ॥ शतभिषक्शततारा ।
गोलाकृतिः । गो सा सी सू शतभिषक् । रक्तवर्णः । शततारा ।
पुष्पवर्षाकृतिः । नपुंसकम् । राक्षसगणः । तुरगीयोनिः। वरुणोदेवता ।
क्षत्रियजातिः । ऊर्ध्वमुखम् । मंदलोचनम्। चरम् । अंतः । समतारा ।
स्थानंशून्यम् । वरुणमंडलम् । कदंबवृक्षः । पक्षीकोकिलः । षकारा-
क्षरः ॥ अस्मिन्वरुणोजातः । अष्टादशघटिकाभ्यःपरंविषनाडचश्च
तस्रः । तंडुलंभक्षयित्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेप्राणभयम् ।
अथवाएकादशदिनान्यरिष्टानि ॥—॥ तच्छांत्यैवरुणपूजाविधानम् ।
श्वेतवस्त्रम् । शतपत्रपुष्पम् । मलयजगंधः । कर्पूरधूपः । घृतान्ननैवेद्यम् ।
अवतेहेडइतिमंत्रेणषोडशोपचारैःसंपूज्यजलजकुसुमैराज्येनगायत्र्याअ-
ष्टोत्तरशतंजुहुयात् ॥ गंधमाल्यैःक्षीरोदनबलिंहरेत् । एकादशाहात्सुखी-
भवति ॥—॥अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीकिंचित्कोपवतीचभवति
॥—॥ अस्मिन्नक्षत्रेस्त्रीसंभोगनामकरणान्नप्राशनचौलोपनयनाक्षरग्रहण-
वेदशास्त्राभ्यासतैलाभ्यंगराजाभिषेकगजाश्वादिमौक्तिकचक्षुरंजनप्रयोग
देवतास्थापनसेतुबंधनजलसूत्रप्रारंभपुत्रपरिग्रहवाणिज्यक्रयविक्रयकृ-
षिप्रयोगबीजावापनादिशुभकार्याणिप्रशस्तानि ॥—॥ अस्मिन्नक्षत्रेजात-
गुणाः—विपुलतनुः । लोकमान्यः । बहुपुत्रः । बंधुवर्गोपकारी । रिपु-
हंता । स्थिरायुः । व्यवहारी । रक्तरोगी । धूर्तगुणः । किंचिज्ज्ञानवान्।
चंचलः । वाचालः । श्यामलः । शूरः । धैर्यचित्तः । वरसुतजनकः ।
नीतिवैरी । अल्पविद्यावान् । अतिगर्वी । अशीतिवर्षाणिपरमायुरित्या-
दिकमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

२६

## ३१८ अथ पूर्वाभाद्रपदानक्षत्रस्य—

शिरसाहमजंवंदेह्येकपादंतमोपहम् । मुदेप्रोष्ठपदेशानंसर्वदेवनमस्कृ-

तम् ॥ १ ॥ रक्तवर्णः। अजैकपाद्देवता।। -- ॥ (नक्षत्रचूडामणौ)—विद्यारंभंकुंजरणांचबंधं बेतालाद्यावेशनंकल्पवादम् ॥ द्यूतारंभंचोर्ध्वयात्राप्रयोगं शास्त्राभ्यासंचैकपाद्भेविदध्यात् ॥ १ ॥ पूर्वाभाद्रोत्तराभाद्राचद्वेद्वेचतुरस्रम् । से सो दा दी पूर्वाभाद्रा । कृष्णवर्णः । द्वितारा ! त्रिपात् । खट्वाकृतिः । पुमान् । मनुष्यगणः। सिंहयोनिः । अजैकपाद्देवता । ब्राह्मणजातिः । अधोमुखम् । मध्यलोचनम् । उग्रम् । अंतः । समतारा । स्थानंपत्तनम् । इंद्रमंडलम् । चूतवृक्षः । पक्षीकपोतः । लकाराक्षरः ॥ अस्मिन्नक्षत्रेकिन्नरोजातः । षोडशघटिकाभ्यःपरंविषनाडचश्चतस्रः । यात्रावर्ज्या। अथवामधुपीत्वा पूर्वोत्तरप्रयाणेशुभम्। ज्वरेप्राणभयम्। अथवामासमरिष्टम्॥--॥ तच्छांत्यैअजैकपाद्देवतापूजाविधानम् । रक्तवस्त्रम् । कुंकुमगंधः । अर्कपुष्पम् । दशौषधीधूपः । दध्योदननैवेद्यम् । शमग्निरितिमंत्रेणषोडशोपचारैःसंपूज्यअन्नाज्येनगायत्र्याअष्टोत्तरशतंहुत्वा गंधमाल्यैःक्षीरोदनबलिंहरेत्। मासात्सुखीभवति॥ --॥ अस्मिन्नक्षत्रेप्रथमरजस्वलाविधवाभवति ॥—॥ अस्मिन्नक्षत्रेविद्यारंभग्रामसंग्रहाभिचारचौर्यकलहद्यूतव्यवहारबंधनवापीकूपतटाकखननमहाबिलप्रवेशरिपुभेदनभूतप्रेतपिशाचमंत्रप्रयोगोच्चाटनधातुवादप्रभृतिक्रूरकार्याणिप्रशस्तानि॥—॥ अस्मिन्नक्षत्रेजातगुणाः—कमलनेत्रः । वित्तवान् । अत्युदारः । स्त्रीप्रियः । दानशीलः । सुभगः । परिवेशसमाहितः । विख्यातः। अतिकोपी । दीर्घजीवी । बहुसुखविभवः । कंठरोगी । क्षुत्तृष्णाकर्मरहितः । षण्णवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥

### ३१९ अथ उत्तराभाद्रपदानक्षत्रस्य—[२६]

अहिर्मेबुध्नियोभूयान्मुदेप्रोष्ठपदेश्वरः ॥ शंखचक्रांकितकरःकिरीटोज्ज्वलमौलिमान् ॥ १ ॥ श्वेतवर्णः । अहिर्बुध्न्योदेवता ॥—॥( नक्षत्रचूडामणौ )—स्थिरक्रियापौष्टिकमंगलानिविवाहयज्ञादिपरिग्रहाणि ॥ नृपाभिषेकांबरभूषणानिसिध्यंत्यहिर्बुध्न्यगतेशशांके ॥ १ ॥ पूर्वाभाद्रो-

त्तराभाद्राचद्वेद्वेचतुरस्रम्। दुः शं झ था उत्तराभाद्रा। श्वेतवर्णः। द्वितारा। खड्गाकृतिः। पुमान्। मनुष्यगणः। गोयोनिः। अहिर्बुध्न्योदेवता। क्षत्रियजातिः। ऊर्ध्वमुखम्। सुलोचनम्। चतुष्पात्। समतारा। हलौ अक्षरौ। स्थानम्। ग्रामः। वायुमंडलम्। पिचुमंदवृक्षः। पक्षीकोकिलः॥ अस्मिन्नष्टायुर्जातः। चतुर्विंशतिघटिकाभ्यःपरंविषनाड्यश्चतस्रः। शालितंडुलभक्षणंकृत्वापूर्वोत्तरप्रयाणेशुभम्॥ ज्वरेसप्तदिनान्यरिष्टानि॥–॥ तच्छांत्यैअहिर्बुध्न्यदेवतापूजाविधानम्। श्वेतवस्त्रम्। अगरुगंधः। शतपत्रपुष्पम्। घृतगुग्गुलधूपः। गुडोदननैवेद्यम्। विष्णुर्योनिमितिमंत्रेणषोडशोपचारैःसंपूज्यक्षीरमिश्रमाषाज्येनगायत्र्याअष्टोत्तरशतं जुहुयात्। गंधमाल्यैर्गुडोदनबलिंहरेत्। सप्ताहात्सुखीभवति॥–॥ अस्मिन्नक्षत्रेप्रथमरजस्वलासौभाग्यपुत्रवती भवति॥–॥ अस्मिन्नक्षत्रेऋतुसीमंतपुंसवननामकरणान्नप्राशनकर्णवेधचौलोपनयनसमावर्त्तनभूषणालंकारराजाभिषेकशांतिकपौष्टिकसिंहासनचतुरंगानयनांदोलिकारोहणशय्यास्थापनपुरप्रवेशकृषिबीजावापनधनधान्यसंग्रहप्रभृतिशुभकार्याणिप्रशस्तानि॥–॥ अस्मिन्नक्षत्रेजातगुणाः—कर्मज्ञः। नृत्तगीतप्रियः। युवतिजनप्रियः। धैर्यवान्। पराक्रमी। दीर्घबुद्धिः। जनभीषणः। धनाढ्यः। अतिभोगी। गंधमाल्यप्रियः। मंदगमनः। कुब्जः। स्वदारद्वेषी। बंधुनिंदकः। नवतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथे द्रष्टव्यम्॥ १॥

## ३२० अथ रेवतीनक्षत्रस्य—

पूषणंसततंवंदेरेवतीशंसमृद्धये॥ वराभयोज्ज्वलकरंरत्नसिंहासनेस्थितम्॥ १॥–॥ पद्मवर्णः। पूषादेवता॥–॥ ( नक्षत्रचूडामणौ )— उपनयनक्षुरकर्मविवाहंगृहनगरादिकवास्तुनिवेशः॥ करितुरगाद्यधिरोहणमुक्तंतदपिशुभानिहिपौष्णशुभर्क्षे॥ १॥ रेवतीमत्स्याकारंद्वात्रिंशत्॥ दे दो चा चि रेवती। रक्तवर्णः। द्वात्रिंशत्तारा। मत्स्या-

कृतिः । देवगणः । स्त्री । गजीयोनिः । पूषादेवता । चतुष्पात् । तिर्यङ्मुखम् । अंधलोचनम् । मृदुः । बाह्यम् । समतारा । स्थानंशून्यम् । वरुणमंडलम् । मधूकवृक्षः । मयूरपक्षी । क्षकाराक्षरः । अस्मिन्नभिमन्युर्जातः । त्रिंशद्घटिकाभ्यः परंविषनाड्यश्चतस्रः । पिष्टंभुक्त्वापूर्वोत्तरप्रयाणेशुभम् । ज्वरेमासमरिष्टम् ॥-॥ तच्छांत्यैपूषदेवतापूजाविधानम् ॥ पद्मरागवस्त्रम् । रक्तचंदनगंधः । मंदारपुष्पम् । गुग्गुलधूपः । तिलोदननैवेद्यम् । हँसश्शुचिषदितिमंत्रेणषोडशोपचारैस्संपूज्यतिलोदनाज्यैर्गायत्र्याअष्टोत्तरशतंजुहुयात् । गंधमाल्यैस्तिलोदनबलिंहरेत् । मासात्सुखीभवति ॥-॥ अस्मिन्नक्षत्रेप्रथमरजस्वलापुत्रवतीभवति ॥-॥ अस्मिन्नक्षत्रेक्रतुपुंसवननामकरणान्नप्राशनचौलोपनयनवेदशास्त्राभ्यासाक्षरप्रारंभतैलाभ्यंगवस्त्राभरणसमावर्तनराजाभिषेकराजदर्शनसिंहासनांदोलिकागजाश्वारोहणशांतिकपौष्टिकमहोत्सवमंत्राभ्यासभैषज्यनृत्तगीतवाद्यप्रयोगबीजावापनयात्रादिशुभकार्याणिप्रशस्तानि ॥ ॥-॥ अस्मिन्नक्षत्रेजातगुणाः-सौभाग्ययुतः । तेजस्वी । स्थूलकायः । संपूर्णांगः । कोपवान् । भोगी । अर्थव्ययकरः । पंडितः । दीर्घजीवी । विचित्ररिपुगणः । पित्तवान् । अन्नदाता । मत्सरी । क्रूरकार्यः । धीरः । परदेशगः । रक्तकेशः । किंचित्तिलमत्स्यांकितः । चतुरशीतिवर्षाणिपरमायुरित्यादिकंसर्वमेतद्ग्रंथेद्रष्टव्यम् ॥ १ ॥ २७॥

---

अथ कृत्तिकादिसप्तविंशतिनक्षत्रेषुकर्तव्यकार्याणि-(ग्रंथांतरेनारदीये च)॥-॥दानानिच (दानचिंतामणौ महाभारते)-

(कृत्तिकायाम्)-अग्न्याधानास्त्रशस्त्रोग्रसंधिविग्रहदारुणम् ॥
संग्रामौषधवादित्रक्रियाः शस्ताश्ववह्निभे ॥ १ ॥-॥ (दानम्)-
कृत्तिकासुमहाभागेपायसेनसुसर्पिषा ॥ संतर्प्यब्राह्मणांत्साधूँल्लोकानाप्नोत्यनुत्तमान् ॥ १ ॥

( रोहिण्याम् )—सीमंतोन्नयनोद्वाहवस्त्रभूषास्थिरक्रियाः ॥ गजवास्त्वभिषेकाश्वप्रतिष्ठाब्रह्मभेशुभाः ॥–॥( दानम् )—रोहिण्यांपांडवश्रेष्ठमाषैरन्नेनसर्पिषा ॥ पयोनुपानंदातव्यमानृण्यार्थंद्विजातये ॥ १ ॥ १ ॥

( मृगशीर्षे )—प्रतिष्ठाभूषणोद्वाहसीमंतोपनयक्रियाः ॥ क्षौरवास्तुगजोष्ट्राश्वयात्राःशस्ताश्चचंद्रभे ॥ १ ॥–॥ ( दानम् )—दोग्ध्रींसवत्सांतुनरोनक्षत्रेसोमदैवते ॥दत्त्वादिव्यविमानस्थःस्वर्गंप्राप्नोत्यनुत्तमम् ॥ १ ॥

( आर्द्रायाम् )—ध्वजतोरणसंग्रामप्राकारास्त्रक्रियाःशुभाः ॥ संधिविग्रहवैतानरसाद्याःशार्वभेशुभाः ॥ १ ॥–॥ ( दानम् )—आर्द्रायांकृसरंदत्त्वातैलमिश्रंसमाहितः॥नरस्तरतिदुर्गाणिक्षुरधरांश्चपर्वतान्॥ १ ॥ १ ॥

( पुनर्वसौ )—प्रतिष्ठायानसीमंतवस्त्रवास्तूपनायनम् ॥ क्षौरास्त्रकर्मादितिभेविधेयंधान्यभूषणम् ॥ १ ॥–॥ ( दानम् )--पूपंपुनर्वसौदत्त्वाघृतपूर्णंतुपाचितम् ॥ यशस्वीरूपसंपन्नोबह्वन्नेजायतेकुले ॥ १ ॥ १ ॥

( पुष्ये )—यात्राप्रतिष्ठासीमंतव्रतबंधप्रवेशनम् ॥ करग्रहंविनासर्वकर्मदेवेज्यभेशुभम् ॥ १ ॥–॥ ( दानम् )--पुष्येतुकांचनंदत्त्वाकृतंचाकृतमेवच ॥ अनालोकेषुलोकेषुसोमवत्सविराजते ॥ १ ॥ १ ॥

( आश्लेषायाम् )—अमृतव्यसनद्यूतधातुवादौषधाहवाः॥ विवादरसवाणिज्यकर्मभौजंगभेशुभम् ॥ १ ॥–॥ ( दानम् )—आश्लेषासुतथारौप्यमृषभंवाप्रयच्छति ॥ ससर्वभयनिर्मुक्तःशास्त्रवानभिजायते ॥ १ ॥ १ ॥

( मघायाम् )—कृषिवाणिज्यगोधान्यव्रणोपकरणादिकम् ॥ विवाहनृत्तगीताद्यंनिखिलंकर्मपैतृभे ॥ १ ॥–॥ ( दानम् )—मघासुतिलपूर्णानिवर्धमानानिमानवः ॥ प्रदायपशुमांश्चैवपुत्रवांश्चप्रजायते ॥ १ ॥ १ ॥

( पूर्वफल्गुन्याम् )—विवादविषशस्त्राग्निदारुणोग्राहवादिकम् ॥ पूर्वत्रयेखिलंकर्मकर्तव्यंमांसविक्रयः ॥ १ ॥–॥ ( दानम् )—फल्गुनीपूर्वसमयेब्राह्मणेभ्यउपोषितः । भक्ष्यांश्चफाणितैर्युक्तान्दत्त्वासौभाग्यमश्नुते ॥ १ ॥ १ ॥

( उत्तरा[१०]फल्गुन्याम् )—वस्त्राभिषेकसीमंतविवाहव्रतबंधनम् ॥ प्रवेशस्थापनाश्विभवास्तुकर्मोत्तरात्रये ॥ १ ॥—॥ ( दानम् )—घृतक्षीरसमायुक्तंविधिवत्पिष्टकौदनम् ॥ उत्तराविषयेदत्त्वास्वर्गेलोकेमहीयते ॥ १ ॥ यद्वाप्रदीयतेदानमुत्तराविषयेनरैः ॥ सदाफलमनंतंचभवतीहविनिश्चयः ॥ २ ॥ १ ॥

( ह[११]स्ते )—प्रतिष्ठोद्वाहसीमंतयानवस्त्रोपनायनम् ॥ क्षौरवास्त्वभिषेकाश्वभूषणंकर्मभानुभे ॥ १ ॥—॥( दानम् )—हस्तेचतुर्हस्तिरथंदत्त्वायुक्तंह्युपोषितः ॥ नरस्तरतिदुर्गाणिक्षुरधाराश्वपर्वतान् ॥ १ ॥ १ ॥

( चित्रा[१२]याम् )—प्रवेशवस्त्रसीमंतप्रतिष्ठाव्रतबंधनम् ॥ त्वाष्ट्रभेवास्तुविद्यास्स्युःक्षुरभूषणकर्मयत् ॥ १ ॥—॥ (दानम्)—चित्रायामृषभंदत्त्वापुण्यांगांगांचभारत ॥ चरत्यप्सरसांलोकेरमतेनंदनेवने ॥ १ ॥ १ ॥

( स्वात्[१३]याम् )—प्रतिष्ठोपनयोद्वाहवस्त्रसीमंतभूषणम् ॥ पश्वंश्वश्वेभकृष्यादिक्षौरकर्मसमीरभे ॥ १ ॥—॥ ( दानम् )—स्वातीष्वथधनंदत्त्वायदिष्टतममात्मनः ॥ प्राप्नोतिलोकांश्वशुभानिहचैवमहद्यशः ॥ १ ॥ १ ॥

( विशाखा[१४]याम् )—वस्त्रभूषणवाणिज्यवसुधान्यादिसंग्रहम् ॥ इंद्राग्निभेनृत्तगीतशिल्पलेखनकर्मच ॥—॥ ( दानम् ) विशाखायामनड्वाहंधेनुंदत्त्वाचदुग्धदाम् ॥ सप्रासंगंचशकटंसधान्यंवस्त्रसंयुतम् ॥ १ ॥ पितॄन्देवान्प्रीणयतिप्रेत्यचानंत्यमश्नुते ॥ नचदुर्गाण्यवाप्नोतिस्वर्गलोकंचगच्छति ॥ २ ॥ दत्त्वायथोक्तंविप्रेभ्योवृत्तिमिष्टांसविंदति ॥ नारकीयांश्वसंक्लेशान्नप्राप्नोतीतिनिश्चयः ॥ ३ ॥ १ ॥

( अनूरा[१५]धायाम् )—प्रवेशस्थापनोद्वाहव्रतबंधादिमंगलम् ॥ वस्त्रभूषणवास्त्वाद्यंमैत्रभेसंधिविग्रहम् ॥ १ ॥—॥ ( दानम् ) अनूराधासुप्रावारंवस्त्रोत्तरमुपोषितः ॥ दत्त्वायुगशतंवापिनरःस्वर्गेमहीयते ॥ १ ॥ १ ॥

( ज्येष्ठा[१६]याम् )—क्षौरास्त्रशस्त्रवाणिज्यगोमहिष्यंबुकर्मच ॥ इंद्रभेनृत्तवादित्रशिल्पलोहाश्मलोचनम् ॥ १ ॥—॥ ( दानम् )—कालशा-

कंतुविप्रेभ्योदत्त्वामर्त्यःसमूलकम् ॥ ज्येष्ठायांमृत्युमुत्साद्यगतिमिष्टांचगच्छति ॥ १ ॥ १ ॥

( मूलायाम्[१७] )—विवाहकृषिवाणिज्यदारुणाहवभेषजम् ॥ निर्ऋतौनृत्तशिल्पास्त्रसंधिविग्रहलेखनम् ॥ १ ॥—॥ ( दानम् )—मूलेमूलफलंदत्त्वाब्राह्मणेभ्यःसमाहितः ॥ स्वपितॄन्प्रीणयेदेवगतिमिष्टांचगच्छति ॥ १ ॥

( पूर्वाषाढासु )—विवादविषशस्त्राग्निदारणोग्राहवादिकम् ॥ पूर्वाषाढासुकर्तव्यंमांसविक्रयकर्मवै ॥ १ ॥—॥ ( दानम् )—अथपूर्वास्वषाढासुदधिपात्राण्युपोषितः ॥ कुलवृत्तोपसंपन्नेब्राह्मणेवेदपारगे ॥ १ ॥ प्रदायजायतेश्रेष्ठकुलेबहुगुणोज्ज्वले ॥ पुत्रपौत्रैःपरिवृतःपशुमान्धनवांस्तथा ॥ २ ॥ १ ॥

( उत्तराषाढासु[१९]—अभिजितिच[२] )—वस्त्राभिषेकसीमंतविवाहव्रतबंधनम् ॥ प्रवेशस्थापनाश्वेभवास्तुकर्मोत्तरात्रये ॥ १ ॥—॥ ( दानम् )—उदमंथंससर्पिष्कंप्रभूतमधुफाणितम् ॥ दत्त्वोत्तरास्वषाढासुसर्वलोकानवाप्नुयात् ॥ १ ॥—॥ ( दानम् )—दुग्धंत्वभिजितायोगेदत्त्वामधुघृताप्लुतम् ॥ धर्मनिष्ठोमनीषिभ्यःस्वर्गलोकेमहीयते ॥ १ ॥ २ ॥ ( उत्तराषाढानक्षत्रचतुर्थपादश्रवणभस्याद्यघटिकाचतुष्टययुक्तःकालोऽभिजिद्योग इत्युच्यते ) ॥ १ ॥

( श्रवणे[२१] )—प्रतिष्ठाक्षौरसीमंतयानोपनयनौषधम् ॥ पुरारामगृहारंभंविष्णुभेपट्टबंधनम् ॥ १ ॥—॥ ( दानम् )—श्रवणेकंबलंदत्त्वावस्त्रांतरितमेवच ॥ श्वेतेनयात्वायानेनस्वर्गेलोकेमहीयते ॥ १ ॥ १ ॥

( धनिष्ठायाम्[२२] ) वस्त्रोपनयनक्षौरप्रतिष्ठायानभेषजम् ॥ वसुभेवास्तुसीमंतप्रवेशाश्वेभभूषणम् ॥ १ ॥—॥ (दानम्)—गोयुक्तंचधनिष्ठासुयानंदत्त्वासमाहितः ॥ वस्त्ररश्मिन्नवंदत्त्वाप्रेत्यराज्यंप्रपद्यते ॥ १ ॥ १ ॥

( शतभिषजि[२३] )—प्रवेशस्थापनक्षौरमौंजीबंधनभेषजम् ॥ अश्वाभरणसीमंतवास्तुकर्मजलेशभे ॥ १ ॥—॥ ( दानम् )—गंधंशतभिषग्यो-

गेदत्त्वाचागरुचंदनम् ॥ प्राप्नोत्यप्सरसांलोकंधत्तेगंधांश्चशाश्वतान् ॥ १ ॥ १

( पूर्वभाद्रपदायाम्[२४] )—विवादविषशास्त्राग्निदारणोग्राहवादिकम् ॥ पूर्वात्रयेखिलंकार्यंमांसविक्रयणादिकम् ॥ १ ॥—॥ ( दानम् )—पूर्वभाद्रपदायोगेराजमाषान्प्रदायवै ॥ सर्वभक्ष्यफलोपेतंसवैःप्रेत्यसुखीभवेत् १ ॥ १

( उत्तरभाद्रपदायाम्[२५] )—वस्त्राभिषेकसीमंतविवाहव्रतबंधनम् ॥ प्रवेशस्थापनाश्वेभवास्तुकर्मोत्तरात्रये ॥ १ ॥—॥ ( दानम् )—औरभ्रमुत्तरायोगेयस्तुमांसंप्रयच्छति। पितृन्प्रीणातिसकलान्प्रेत्यचानंत्यमश्नुते १ । १

( रेवत्याम्[२६] )—विवाहव्रतबंधाश्चप्रतिष्ठायानभूषणम् ॥ प्रवेशवस्त्रसीमंतक्षौरभेषजमंत्यभे ॥ १ ॥—॥ ( दानम् )—कांस्योपदोहिनींधेनुंरेवत्यांयःप्रयच्छति ॥ सप्रेत्यकामानादायदातारमुपतिष्ठते ॥ १ ॥ १ ॥

( अश्विन्याम्[२७] )—यात्रोपनयनक्षौरसीमंताभरणक्रियाः ॥ स्थापनाश्वेभयानास्त्रकृषिविद्यादयोश्विभे ॥ १ ॥—॥ ( दानम् )—रथमश्वसमायुक्तंदत्त्वाश्विन्यांनरोत्तमः ॥ हस्त्यश्वरथसंपन्नेवर्चस्वाजायतेकुले १ ॥ १

( भरण्याम्[२८] )—वापीकूपतटाकाग्निविषशस्त्रोग्रदारुणम् ॥ बिलप्रवेशगणितनिक्षेपायाम्यभेशुभाः ॥ १ ॥—॥ ( दानम् )—भरणीषुद्विजातिभ्यस्तिलधेनुंप्रदायवै ॥ गा प्रभूताअथामोतिनरःप्रेत्ययशस्तथा १ ॥ २८

---

## ३२१ अथ कृत्तिकादिसप्तविंशतिनक्षत्रेषुविषनाडीप्रवेशकालाः—

( ज्योतिषेविद्यामाधवीये )

त्रिंशद्[३०]द्विगुणितर्कांति[४०]र्मनु[१४] समिध[२१]स्त्रिंशत्[३०]कृति[२०]र्द्विजा[३२]स्त्रिंशत्[३०] ॥ कृति[२०]र्धृति[१८] समिधः[२१]कृति[२०]र्मनु[१४]र्मनु[१४]र्दिङ्[१०]मनु[१४]कृति[२०]र्जिनाः[२४]कृतिः[२०]ककुभः[१०] ॥ १ ॥ दश[१०]धृतयो[१८] नृपति[१६]र्जिना[२४]स्त्रिंशत्[३०]पंचाशतौ[५०]जिना[२४]स्तेभ्यः ॥ परतोघटीचतुष्कं[४]विषसंज्ञंकृत्तिकादिषुज्ञेयम् ॥ २ ॥ २७ ॥

---

## ३२२ अथ कृत्तिकादिसप्तविंशतिनक्षत्रेषुअमृतनाडीप्रवेशकालाः—( ज्योतिषेविद्यामाधवीये )

संकृत्या[२४]कृति[२२]र्नागवासरजि[१८] नैरि[२४]द्रोत्[१४]कृतिभ्यांजि[२७] नैर्मन्वर्के[२४][१४] [१२] स्ति[१८]

थिर्नागशंक्रवसुभिर्वेदाष्टशंकैः क्रमात् ॥ वि घेंद्राब्धियुंगाब्धिं
दिग्धृतिजिनैरर्कैः पुराणैर्युतानाडीस्त्रिंशदतीत्यभेषुपुरतोनाड्यश्चतस्रोऽ
मृतम् ॥ १ ॥ २७ ॥

---

अथ अश्विन्यादिनक्षत्रेषुजातगुणाःपुनरपि–( जातकाभरणे )

तत्रादौ ( अश्विन्याम् )–सर्वैसदैवाभ्युदितोविनीतःसत्यान्वितःप्राप्त
समस्तसंपत् ॥ योषिद्विभूषात्मजभूरितोषःस्यादश्विनीभेजननंप्रपन्नः ॥ १ ॥

( भरण्याम् )–सदापकीर्तिर्हिमदा ( हा ) पवादैर्नानाविनोदैश्चविनी-
तरागः ॥ जलात्तभीतिश्चपलःखलस्स्यात्प्राणिप्रणीतोभरणीभजातः ॥ १ ॥

( कृत्तिकायाम् )–क्षुधाधिकस्सत्त्वधनैर्विहीनोवृथाटनोत्पन्नमतिः
कृतघ्नः ॥ कठोरवाग्गर्हितकर्मकृत्स्याच्चेत्कृत्तिकाजन्मनियस्यजंतोः ॥ १ ॥

( रोहिण्याम् )–धर्मकर्मकुशलःकृषीवलःचारुशीलविलसत्कलेवरः
वाग्विलासकलिताखिलाशयोरोहिणीभवतियस्यजन्मभम् ॥ १ ॥

( मृगशीर्षे )–शरासनाभ्यासरतोविनीतःसदानुरक्तोगुणिनांगणेषु ॥
भोक्तानृपस्नेहभरेणपूर्णःसन्मार्गवेत्तामृगजातजन्मा ॥ १ ॥

( आर्द्रायाम् )–क्षुधाधिकोरूक्षशरीरकांतिर्बहु ( न्धु ) प्रियःकोप
युतःकृतघ्नः ॥ प्रसूतिकालेचभवेत्किलार्द्रादयार्द्रचेतानभवेन्मनुष्यः ॥ १ ॥

(पुनर्वस्वोः)–प्रभूतयत्नःकृतशास्त्रयत्नःसद्रत्नचामीकरभूषणाढ्यः ॥
दाताप्रतापीवसुधावसुश्चपुनर्वसूयस्यभवेत्प्रसूतौ ॥ १ ॥

( पुष्ये )–प्रसन्नगात्रःपितृमातृभक्तःस्वधर्मयुक्तोविनयाविमुक्तः ॥
भवेन्मनुष्यःखलुपुष्यजन्मा सन्माननानाधनवाहनाढ्यः ॥ १ ॥

( आश्लेषायाम् )–वृथाटनस्स्यात्परिदुष्टचेष्टःकष्टप्रदश्चापिवृथाज-
नानाम् ॥ सार्पेसदर्पोहिवृथार्पितार्थःकंदर्पसंतप्तमनामनुष्यः ॥ १ ॥

( अधिकंमूलानक्षत्रफलेविस्तरेणद्रष्टव्यम् )

( मघायाम् )–कठोरचित्तःपितृभक्तियुक्तस्तीव्रस्वभावस्त्वनवद्यहृ-
द्यः ॥ चेज्जन्मभंयस्यमघानघस्स्यान्मतिस्सदारातिविघातदक्षा ॥ १ ॥

(पूर्वफल्गुन्याम्)[११]—भूरित्यागीसाहसीभूरिभर्ताकोपाटोपीस्याच्छिखालोतिदक्षः॥ धूर्तःक्रूरोत्यन्तसंजातगर्वःपूर्वाफल्गुन्यस्तिचेज्जन्मकाले १ ॥

( उत्तरफल्गुन्याम् )[१२]—दातादयालुस्सुतरांसुशीलोविशालकीर्तिर्नृपतिप्रधानः॥ धीरोनरोत्यंतमृदूत्तरःस्याच्चेदुत्तराफल्गुनिकाप्रसूतौ ॥ १ ॥

( हस्ते )[१३]—दातामनस्वीसुतरांयशस्वीभूदेवदेवार्चनयज्ञकर्त्ता ॥ प्रसूतिकालेयदियस्यहस्तोहस्तोद्गतातस्यसमस्तसंपत् ॥ १ ॥

( चित्रायाम् )[१४]—प्रतापसंतापितशत्रुपक्षोनयेतिदक्षश्चविचित्रवासाः॥ प्रसूतिकालेयदियस्यचित्राबुद्धिर्विचित्राखलुतस्यशास्त्रे ॥ १ ॥

( स्वात्याम् )[१५]—कंदर्परूपःप्रभयासमेतःकांतापरप्रीतिरतिप्रसन्नः ॥ स्वातीप्रसूतौमनुजस्ययस्यभवेन्नृपःप्राप्तविभूतियुक्तः ॥ १ ॥

( विशाखायाम् )[१६]—सदानुरक्तोग्निसुरक्रियायांधातुक्रियायामपिचोग्रसौम्यः ॥ यस्यप्रसूतौचभवेद्विशाखासखानकस्यापिभवेन्मनुष्यः॥ १ ॥

( अनूराधायाम्)[१७]—सत्कांतिकीर्तिश्चसदोत्सवस्स्याज्जेतारिपूणांचकलाप्रवीणः॥ स्यात्संभवेयस्यकिलानुराधासंपद्विबाधाविविधाचतस्य॥ १ ॥

( ज्येष्ठायाम् )[१८]—सत्किर्तिकांतिर्विभुतासमेतोवित्तान्वितोत्यंतलसत्प्रतापः ॥ श्रेष्ठप्रतिष्ठोवदतांवरिष्ठोज्येष्ठोद्भवस्स्यात्पुरुषोविशेषात् ॥ १ ॥

( मूले )[१९]—मूलंविरुद्धावयवंसमूलंबलंहरत्येवबदंतिसंतः ॥ चेदन्यथातत्कुरुतेविशेषात्सौभाग्यमातु ( यु ) श्चकुलाभिवृद्धिम् ॥ १ ॥

( अथ मूले विशेषः )

३२३ तत्र अभुक्तमूलाख्यविरुद्धावयवमूलस्यस्वरूपम्[१९]—

ज्येष्ठांत्येघटिकैकाचमूलस्याद्यघटीद्वयम् ॥ अभुक्तमूलमित्युक्तम्॥

३२४ अथ अभुक्तमूलोत्पन्नेनजातदोषस्यवारणायशान्तिः[१९]—

( जातकाभरणे )

तत्रोत्पन्नशिशोर्मुखम्॥ अष्टवर्षाणिनालोकयंतातेनशुभमिच्छता॥ १ ॥ तद्दोषपरिहारार्थशांतिस्संप्रोच्यतेधुना॥ रत्नैश्शतौषधीमूलैःसप्तमृद्भिः प्रपू

रयेत् ॥ २ ॥ शतच्छिद्रंघटंतस्मान्निर्गतेनजलेनहि ॥ बालकांऽ
वापितृस्नानेविप्रैस्संपादितेसति ॥ ३ ॥ जपहोमप्रदानेचकृतेसन्मंगलंध्रु
वम् ॥ विरुद्धावयवेमूलेविधिरेवंस्मृतोबुधैः ॥ ४ ॥ मुनीनांवचनंसत्यं
मंतव्यंक्षेममीप्सुभिः ॥

अथ मूलाश्लेषयोःचरणभेदेनजन्मनिफलभेदाः–(जातकाभरणे)

मूलस्यपादत्रितयेक्रमेणपितुर्जनन्याश्वसुतस्यरिष्टम् ॥ चतुर्थपादश्शु
भदोनितांतंसार्पेविलोमंपरिकल्पनीयम् ॥ १ ॥

अथ मूलस्ययोगभेदेनजन्मनिफलभेदाः–( जतकाभरणे )

कृष्णेतृतीयादशमीवलक्षेभूतोमहीजार्किबुधैस्समेतः ॥ चेज्जन्मका-
लेकिलतत्रमूलमुन्मूलनंतत्कुरुतेकुलस्य ॥ १ ॥ दिवासायंनिशिप्रातः
पितुस्स्यान्मातुलस्यच ॥ पशूनांमित्रवर्गस्यक्रमान्मूलमनिष्टदम् ॥ २ ॥

३२९ अथ फलभेदसूचकयोःपुरुषाकृतिमूलाश्लेषयोःस्वरूपे–

मूर्ध्निपंचमुखेपंचस्कंधयोर्घटिकाष्टकम् ॥ गर्जाश्वभुजयोर्युग्मेहस्तयो
र्हृदयेष्टकम् ॥ १ ॥ युग्मंनाभौदिशोगुह्येषड्जान्वोष्षट्च पादयोः ॥ विन्य
स्यपुरुषाकारेमूलस्यफलमादिशेत् ॥ २ ॥ छत्रलाभश्शिरोदेशेवदनेपितृघात
नम् ॥ स्कंधयोर्धूर्वहत्वंचबाहुयुग्मेत्वकर्मकृत् ॥ ३ ॥ हत्याकरः करद्वंद्वेरा-
ज्याप्तिर्हृदयेभवेत् ॥ अल्पायुर्नाभिदेशेचगुह्येचसुखमद्भुतम् ॥ ४ ॥ जंघायां-
भ्रमणप्रीतिःपादयोर्जीवितात्पता ॥ घटीफलंकिलप्रोक्तंमूलस्यमुनिपुं-
गवैः ॥ ५ ॥ विज्ञेयंविबुधैस्सर्वंसार्पेतचविपर्ययात् ॥

अथ मूलाश्लेषामुहूर्तनायकानांनामानि–

राक्षसोयातुधानश्वसोमशुक्रौफणीश्वरः ॥ पितामातायमःकालोवि-
श्वेदेवामहेश्वरः ॥ १ ॥ सर्पाख्यश्वकुबेरश्वशक्रोमेघोदिवाकरः ॥ गंध-
र्वोयमदेवश्वब्रह्माविष्णुर्यमस्तथा ॥ २ ॥ ईश्वरोविष्णुरिंद्रश्वपवनोमुन-
यस्तथा ॥ षण्मुखोभृंगिरीटिश्वगौरीनाम्नासरस्वती ॥ ३ ॥ प्रजापतिश्व-
मूलस्यस्युर्मुहूर्ताधिनायकाः ॥ विपरीताःपुनर्ज्ञेयाआश्लेषाजातबालके ॥

॥ ४ ॥ द्वितीयेप्रथमेषष्ठेचाष्टमेद्वादशेतथा ॥ त्रयोविंशेचनवमेकुलक्षय करःशिशुः ॥ ५ ॥

### अथ मूलवृक्षस्य फलम्-( जातकाभरणे )

वेदाःसप्तगर्जाःकाष्ठांःखेटाबाणाभंषट्शिवाः मूलंभर्गस्त्वजः शाखा-

मूलवृक्षविभागेषुमंगलंहिफलेभवेत् ॥ १ ॥ मंगला ॥ मंगलं ( दले । अमंगलं फलं ) विंद्याच्छेषभागेनिश्चितम् ॥ पादेमूहूर्तेवेलायांवृक्षेचपुरुषाकृतौ ॥ २ ॥ अरिष्टमशुभाधिक्येशुभाधिक्येशुभंफलम् ॥

### अथ तातजन्मभेसुतेजातेतातर्जन्मभेमूलत्वातिदेशद्वाराफलशान्त्योर्निरूपणम्-

तातस्यजन्मभेयस्यप्रसूतिर्जायतेयदि ॥ तातंवाभ्रातरंज्येष्ठंरिष्टसात्कुरुतेध्रुवम् ॥ १ ॥ मूलवच्छांतिकंतत्रविधेयंहिविचक्षणैः ॥ भूमिरत्नान्नहेमादिदेयंविप्रेषुभक्तितः ॥ २ ॥ ( इति मूलर्क्षेऽधिकांशविचारः )

( मूले )-सुखेनयुक्तोधनवाहनाढ्योहिंस्रोबलाढचःस्थिरकर्मकर्त्ता ॥ प्रतापितारातिजनोमनुष्योमूलेकृतीस्याज्जननंप्रपन्नः ॥ १ ॥

( पूर्वाषाढायाम् )-भूयोभुयस्तोयपानानुरक्तोभोक्ताचंचद्वाग्विलासःसुशीलः ॥ नूनंसंपज्जायतेतस्यगाढापूर्वाषाढाजन्मभंयस्यपुंसः ॥ १ ॥

( उत्तराषाढायाम् )-दातादयावान्विजयीविनीतस्सत्कर्मचेताविभुनासमेतः ॥ कांतासुतावाप्तसुखोनितांतंलोकेसुवेषःपुरुषोमनीषी ॥ १ ॥

( अभिजिति )-अतिसुललितकांतिस्संमतस्सज्जानानामनुभवतिविनीतश्चारुकीर्तिःसुरूपः ॥ द्विजवरसुरभक्तिर्व्यक्तवाङ्मानवस्स्यादभिजितियदिसूतिर्भूपतिः स स्ववंशे ॥ १ ॥

( श्रवणे )-शास्त्रानुरक्तोबहुपुत्रमित्रस्सत्पात्रभक्तिर्विजितारिपक्षः ॥ प्राणीपुराणश्रवणप्रवीणश्चेज्जन्मकालेश्रवणंहियस्य ॥ १ ॥

(धनिष्ठा[२४]याम्)—आचारजात्यादिकचारुशीलोधनादिशालीबलवान्कृपालुः॥ यस्यप्रसूतौचभवेद्धनिष्ठामहान्प्रतिष्ठासहितोनरस्स्यात् ॥ १ ॥

( शत[२५]भिषजि )—शीतभीरुरतिसाहसीसदानिष्ठुरोतिचतुरोभवेत्सदा ॥ वैरिणामतिविशेषदारुणोवारुणोयदिचयस्यसंभवे ॥ १ ॥

( पूर्व[२६]भाद्रपदायाम् )—जितेंद्रियस्सर्वकलासुदक्षोजितारिपक्षःखलु तस्यनित्यम् ॥ भवेन्मनीषासुतरामपूर्वापूर्वायदाभाद्रपदाप्रसूतौ ॥ १ ॥

( उ[२७]त्तरभाद्रपदायाम् )—कुलस्यमध्येकिलभूषणंचभू(ना)त्युच्चदेहश्शुभकर्मकर्ता॥ यस्योत्तराभाद्रपदाचजन्यांधन्यांलभेन्मांचभवेद्वादान्यः १ ॥

( रेव[२८]त्याम् )—चारुशीलविभवोजितेंद्रियस्सद्धनानुभवनैकमानसः॥ मानवोननुभवेन्महामतीरेवतीभवतियस्यजन्मभम् ॥ १ ॥ २७ ॥

---

३२६ अथ विष्कंभादिसप्तविंशतियोगानांनामानि—(ज्योतिषार्णवे)

विष्कंभंप्रीतिरायुष्मान्सौभाग्यंशोभनस्तथा ॥ अतिगंडस्सुकर्माचधृतिश्शूलस्तथैवच ॥ १ ॥ गंडोवृद्धिर्ध्रुवश्चैवव्याघातोहर्षणस्तथा ॥ वज्रंसिद्धिर्व्यतीपातोवरीयान्परिघश्शिवः ॥ २ ॥ सिद्धःसाध्यःशुभःशुक्लोब्रह्मचैंद्रश्चवैधृतिः ॥ एतेयोगाः प्रकथितास्सप्तविंशतिसंख्यया॥ ३ ॥ २७॥

---

तत्रादौ विष्कंभादिसप्तविंशतियोगानांस्वरूपाणि—( शैवागमे )

एषुकर्तव्यकृत्यानि—( दैवज्ञविलासे) एषुकर्तव्यदानानि—(दानचिंतामणौ महाभारते )

---

३२७ तत्रादौविष्कंभयोगस्य स्वरूपम्—

विष्कंभंशिरसावंदेविष्णुगोत्रसमुद्भवम् ॥ प्राङ्मुखंप्रांजलिकरंत्रिकोणोपरिसंस्थितम् ॥ १ ॥ पाटलवर्णः ॥—॥ (कृत्यम्)—अस्मिन्योगेशुभकर्मवर्ज्यम्। अथवा घटीत्रयानंतरंशुभंकर्मकुर्यात् ॥ चौलंचबीजारोहंचस्त्रीसंगंदंतकल्पनम्। काष्ठकर्मरिपूच्चाटंविष्कंभेतु प्रकारयेत् ॥ ॥ १ ॥—॥ ( दानम् )—विष्कंभेसर्वधान्यानांदानंसर्वाघनाशनम् ॥ १ ॥

### ३२८ अथ प्रीतियोगस्य स्वरूपम्-

प्रीतिमीडेहमनिशंब्रह्मगोत्रसमुद्भवम् ॥ प्राङ्मुखंपुंडरीकाक्षंजपमालाधरंशुभम् ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगस्सर्वकर्मसुशुभः ॥ मित्रत्वंलेपनंचैवभूषणंभूतिसंग्रहम् ॥ राजवश्यंमहोत्साहंप्रीतियोगेचकारयेत् ॥ १ ॥-॥ (दानम्)-प्रीतौतथान्नस्वर्णानाम् ॥ १ ॥

### ३२९ अथ आयुष्मद्योगस्य स्वरूपम्-

आयुष्मंतमहंवंदेयोगंयोगिभिरीडितम् ॥ प्राङ्मुखंपंचकोणस्थंकौंडिन्यान्वयसंभवम् ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगस्सर्वकर्मसुशुभः ॥ बीजावापंवस्त्रबंधंयुद्धमारोग्यकर्मच ॥ विवादंपाणिपीडाश्चह्यायुष्मत्यपिकारयेत् ॥ १ ॥-॥ ( दानम् )-आयुष्मतिघृतस्य च ॥ १ ॥

### ३३० अथ सौभाग्ययोगस्य स्वरूपम्-

सौभाग्यंशिरसानौमिचतुष्कोणमुपाश्रितम् ॥ कौंडिन्यगोत्रजनितंप्राङ्मुखंजपतांवरम् ॥ १ ॥ पाटलवर्णः ॥-॥ (कृत्यम्)-अयंयोगस्सर्वकर्म सुशुभः ॥ भूषणांबरसौभाग्यविलेपनसुरार्चनम् ॥ यज्ञकर्मसुरापानंसौभाग्येकारयेद्बुधः ॥ १ ॥--॥ ( दानम् )-कुंकुमस्यचसौभाग्ये ॥ १ ॥

### ३३१ अथ शोभननामयोगस्य स्वरूपम्--

प्राङ्मुखंपंचकोणस्थंकौंडिन्यान्वयसंभवम् ॥ शोभनंशोभनकरंनमतामाश्रयेसदा ॥ १ ॥ पाटलवर्णः ॥--॥ ( कृत्यम् )-अयंयोगस्सर्वकर्मसुशुभः ॥ भूपरिग्रहवैवाहदानभूषणकर्मच ॥ नृपाभिषेकमारोग्यकर्मकुर्याच्चशोभने ॥ १ ॥--॥ ( दानम् )- यवदानंचशोभने ॥ १ ॥

### ३३२ अथ अतिगंडयोगस्य स्वरूपम्--

वाधूलान्वयसंभूतंपंचकोणोपरिस्थितम् ॥ अतिगंडाभिधंवंदेजपंतंप्राङ्मुखंसदा ॥ १ ॥ पाटलवर्णः॥-॥( कृत्यम्)-अयंयोगस्सर्वकर्मसुवर्ज्यः ॥ अथवाषड्घटिकानंतरंशुभकर्मकुर्यात् ॥ विग्रहनिग्रहभेदनव-

धवंधच्छेदनरिपूच्चाटाः ॥ क्षुद्रक्रियातिगंडेकार्यंविषशस्त्रवह्निकर्माद्यम् ॥ ॥ २ ॥—॥( दानम् )—अतिगंडेचवस्त्राणाम् ॥ १ ॥

## २३३ अथ सुकर्मयोगस्य स्वरूपम्—

सुकर्माणंयोगमहंदक्षिणामुखमाश्रये ॥ कौशिकान्वयसंभूतंजपंतंलोकपूजितम् ॥ १ ॥ पाटलवर्णः ॥—॥ ( कृत्यम् )—अयंयोगस्सर्वकर्मसुशुभः ॥ चित्रकर्मगृहस्थाप्यंकल्याणंभूपरिग्रहम् ॥ राजाभिषेककर्माणिसुकर्मणिचकारयेत् ॥ १ ॥—॥ (दानम्)—पायसस्यसुकर्मणि ॥ १ ॥

## २३४ अथ धृतियोगस्य स्वरूपम्—

धृतियोगस्सदाभूयादात्रेयान्वयसंभवः ॥ दक्षिणामुखमासीनोवेदाम्रेडनतत्परः ॥ १ ॥ पाटलवर्णः ॥—॥ ( कृत्यम् )—अयंयोगस्सर्वकर्मसुशुभः ॥ प्राकारतोरणादीनिदेवालयगृहाणिच ॥ व्रतबंधंगजारोहंधृतियोगेतुकारयेत् ॥ १ ॥—॥ ( दानम् )—धृतौरजतदानंच ॥ १ ॥

## २३५ अथ शूलयोगस्य स्वरूपम्—

शूलनामामहान्योगोभवेदिष्टार्थदोमम ॥ दक्षिणामुखआसीनःकुंडिनान्वयसंभवः ॥ १ ॥ पाटलवर्णः ॥—॥ ( कृत्यम्)—अयंयोगस्सर्वशुभकर्मसुवर्ज्यः ॥ अथवापंचघटिकाभ्यःपरंशुभकर्मकुर्यात् ॥ वधबंधावमानानिरिपूच्चाटनमारणे ॥ निवारणंक्रूरकर्मशूलयोगेविधीयते ॥ १ ॥—॥ ( दानम् )—शूलेमूलादिदानकम् ॥ १ ॥

## २३६ अथ गंडयोगस्य स्वरूपम्—

योगोस्तुगंडनामामेशांडिल्यान्वयसंभवः ॥ दक्षिणामुखआसीनोब्रह्मपाठपरायणः ॥ १ ॥ पाटलवर्णः ॥—॥ ( कृत्यम् )—अयंयोगस्सर्वशुभकर्मसुवर्ज्यः ॥ अथवाषड्घटिकाभ्यःपरंशुभकर्मकुर्यात् ॥ वापीकूपतटाकादिखातोच्चाटनमारणम् ॥ बाहुयुद्धंभृत्यकर्मक्षात्रंगंडेप्रशस्यते ॥ १ ॥ ॥—॥ ( दानम् )—गंडेमंडनदानंच ॥ १ ॥

## ३३७ अथ वृद्धियोगस्य स्वरूपम्-

वृद्धिर्वृद्धिप्रदोमेस्तुकौशिकोदक्षिणामुखः ॥ यश्चितयन्परंब्रह्मब्रसीमाश्रित्यतिष्ठति ॥ १ ॥ पाटलवर्णः ॥–॥ ( कृत्यम् )–अयंयोगस्सर्वकर्मसुशुभः ॥ बीजावापंधनंधान्यंविवाहव्रतबंधनम् ॥ तटाकसेतुबंधंचवृद्धियोगेतुकारयेत् ॥ १ ॥–॥ (दानम्)–वृद्धौगोदानमिष्यते ॥ १ ॥

## ३३८ अथ ध्रुवयोगस्य स्वरूपम्-

धृत्यैध्रुवोस्तुमेनित्यंयोगोयंदक्षिणामुखः ॥ करेबिभ्रन्नक्षमालांगायत्रीमादराज्जपन् ॥ १ ॥ पाटलवर्णः ॥–॥(कृत्यम्)–अयंयोगस्सर्वकर्मसुशुभः ॥ तटाकवस्त्रालंकाररत्नभूषागृहक्रियाः ॥ सेतुबंधनकर्माणिकुर्यायोगेध्रुवाह्वये ॥ १ ॥–॥ ( दानम् )–ध्रुवेचपंचरत्नानाम् ॥ १ ॥

## ३३९ अथ व्याघातयोगस्य स्वरूपम्-

व्याघातंशिरसानौमिव्यासान्वयसमुद्भवम् ॥ प्रत्यङ्मुखोपविष्टंतंप्रत्यग्ररविसन्निभम् ॥ १ ॥ पाटलवर्णः ॥–॥ ( कृत्यम् )–अयंयोगस्सर्वकर्मसुवर्ज्यः ॥ अथवानवघटिकाभ्यःपरंशुभकर्मकुर्यात् ॥ कुर्याद्व्याघातयोगेतुवधबंधनिरोधनम् ॥ सर्वाणिक्रूरकर्माणिभेदनोच्चाटनानिच ॥ ॥ १ ॥–॥ ( दानम् )–व्याघातेफाणितस्यच ॥ ( फाणितमित्यस्यगुडमिश्रापूपमित्यर्थः )॥ १ ॥

## ३४० अथ हर्षणयोगस्य स्वरूपम्-

हर्षणंहर्षदंवेदप्रत्यङ्मुखमुदर्चिषम् ॥ पठंतंवेदमनिशंकाश्यपान्वयसंभवम् ॥ १ ॥ पाटलवर्णः ॥–॥ (कृत्यम्)–अयंयोगस्सर्वकर्मसुशुभः॥ हर्षणयोगेकुर्याद्गजवाजिरथाधिरोहणंसततम् ॥ वैवाहिकास्त्रसंग्रहनृपाभिषेकाद्यमखिलशुभकर्म ॥ १ ॥–॥ (दानम्)–हर्षणेगंधदानंस्यात् ॥ १ ॥

## ३४१ अथ वज्रयोगस्य स्वरूपम्-

वज्रनामाभवेद्योगोभारद्वाजान्वयोद्भवः ॥ प्रत्यङ्मुखउपासीनःपठन्प्रणवमन्वहम् ॥ १ ॥ पाटलवर्णः ॥–॥ ( कृत्यम् )–अयंयोगस्सर्व-

शुभकर्मसुवर्ज्यः ॥ अथवाघटिकात्रयादूर्ध्वंशुभकर्मकुर्यात् ॥ वस्त्रभूषणभूकर्षसेनाधीशत्वमद्भुतम् ॥ शस्त्रसंग्रहणार्थंचवज्रयोगेप्रशस्यते ॥ १ ॥ ॥–॥ ( दानम् )–वज्रेदद्यान्मणीनपि ॥ १ ॥

## ३४२ अथ सि[16]द्धियोगस्य स्वरूपम्–

प्रत्यङ्मुखोब्रह्मवंश्यःसिद्धिस्सिद्धिप्रदोस्तुमे ॥ विष्टरोपरिसंविष्टोवेदांतपठनोन्मुखः ॥ १ ॥ पाटलवर्णः ॥–॥ ( कृत्यम् )–अयंयोगस्सर्वशुभकर्मसुग्राह्यः ॥ विद्याविवाहव्रतबंधयज्ञनृपाभिषेकक्रयविक्रयाश्च ॥ सुवर्णमुक्ताफलभूषणादिकर्माणिसिध्यंतिचसिद्धियोगे ॥ १ ॥–॥ ( दानम् )–सिद्धौसिद्धार्थकादेयाः ॥ १ ॥

## ३४३ अथ व्य[17]तीपातयोगस्य स्वरूपम्–

स्मराम्यहंव्यतीपातंवीतिहव्यान्वयोदितम् ॥ प्रत्यङ्मुखंपाठयंतंवेदाञ्छिष्यानहर्निशम् ॥ १ ॥ पाटलवर्णः ॥–॥प्रकारान्तरंदक्षः–(पराशरमाधवीये दानप्रकरणे )–शंकुकर्णःप्रलंबोष्ठोलंबभ्रूर्दीर्घनासिकः ॥ अष्टनेत्रश्चतुर्वक्त्रोविस्तीर्णःशतयोजनम् ॥ १ ॥ व्यतीपातनमस्तेस्तुसोमसूर्यात्मजप्रभो ॥–॥ ( कृत्यम् )–अयंयोगस्सर्वकर्मसुवर्ज्यः ॥ अथवात्रिंशद्घटिकापर्यंतंशुभंकर्मकुर्यात् ॥ दास्यंसुवर्णदानंचदानंतीर्थनिषेवणम् ॥ रिपुभेदोविषात्युग्रंकार्यंचव्यतिपातके ॥ १ ॥–॥ ( दानम् )–व्यतीपातेचकांचनम् ॥ १ ॥

## ३४४ अथ व[18]रीयोयोगस्य स्वरूपम्–

वरीयान्नामयोगोयंवरदोस्तुसदामम ॥ प्रत्यङ्मुखःप्रांजलिकस्सावेत सकुलोद्भवः॥ १ ॥ पाटलवर्णः ॥–॥( कृत्यम् )–अयंयोगस्सर्वकर्मसुशुभः॥मुक्तामणिकनकांबरसर्वालंकारकंकणादिचयत्॥ गजतुरगाद्यधिरोहणमखिलंचशुभंवरीयसिप्रोक्तम् ॥ १ ॥–॥ ( दानम् )–वरीयसितिलान्दद्यात् ॥ १ ॥

## ३४५ अथ [19]परिघयोगस्य स्वरूपम्-

उदङ्मुखोब्रह्मगोत्रोयोगःपरिघनामकः ॥ कैलासशिखरारूढोसामगायन्भवेन्मयि ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगस्सर्वशुभकर्मसुवर्ज्यः ॥ अथवात्रिंशद्घटिकाभ्यःपरंशुभंकर्मकुर्यात् ॥ विवाहयुद्धोद्यमदुष्टकर्मप्रद्वेषणोच्चाटविषप्रयोगम् ॥ क्रूरंसमस्तंपरिघस्यपूर्वदलेपिकार्यंशुभमन्यभागे ॥ १ ॥-॥ ( दानम् )-शस्त्राणिपरिघे तथा ॥ १ ॥

## ३४६ अथ [20]शिवंयोगस्यस्वरूपम्-

शिवश्शिवायमेभूयाच्छिवाराधनतत्परः ॥ विष्णुवंशसमुद्भूतः ऋगध्यापनतत्परः ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अस्मिन्योगेसर्वशुभकर्माणिकार्याणि॥रशनाकंठमालादिभूषणांबरधारणम्॥ विवाहाद्यखिलंयात्राशिवयोगेप्रशस्यते ॥ १ ॥-॥ ( दानम् )-जलकुंभा शिवेदेयाः ॥ १ ॥

## ३४७ अथ [21]सिद्धंयोगस्य स्वरूपम्-

सिद्धस्सिद्धिप्रदोभूयात्कुंडिनान्वयसंभवः॥ उदङ्मुखस्स्वशिष्येभ्योयजूंषिसततंपठन् ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगः सर्वकर्मसुशुभः॥ग्रहप्रतिष्ठापनमौंजीबंधविवाहदीक्षानृपतिप्रतिष्ठाः॥ देवप्रतिष्ठादिशुभंचकर्मसिद्धाह्वयेसर्वमुशंतियोगे ॥ १ ॥-॥ ( दानम् )-सिद्धेसिद्धान्नमिष्यते ॥ १ ॥

## ३४८ अथ [22]साध्ययोगस्य स्वरूपम्-

साध्यनामाभवेद्योगःशोकानामपनुत्तये ॥ उदङ्मुखोमहामंत्रमाथर्वणमनुस्मरन् ॥ १॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगःसर्वकर्मसुशुभः ॥ गुरुदेवताप्रतिष्ठापूजाकर्मादिहव्यकर्माणि ॥ स्थिरचरयात्राद्यखिलंकार्यंसाध्याह्वयेयोगे॥ १ ॥-॥(दानम्)-साध्येलंकरणानांच॥ १ ॥

## ३४९ अथ शुभ[23]योगस्य स्वरूपम्-

शुभःशुभायमेभूयाद्वसिष्ठान्वयसंभवः॥ उदङ्मुखोजपन्मंत्रंशैवंपंचाक्षरंशुभम् ॥ १ ॥ पाटलवर्णः ॥-॥( कृत्यम् )-अयंयोगस्सर्वकर्मसुशुभः ॥ ब्रह्मविद्यामहोत्साहबीजावापनभूषणम् ॥ धनधान्यगृहोद्योगंकार्यंयोगेशुभाह्वये ॥ १ ॥-॥ ( दानम् )-छत्रदानंशुभेशुभम् ॥ १ ॥

## ३५० अथ शुक्ल[24]योगस्य स्वरूपम्-

शुक्लोनाममहायोगोयोगीस्वयमुदङ्मुखः ॥ प्रत्यग्दृष्टिस्सदाभूयात्कौशिकान्वयसंभवः ॥ १ ॥ पाटलवर्णः ॥-॥ ( कृत्यम् )-अयंयोगस्सर्वकर्मसुशुभः॥लेपनंभूषणंचैवराजसंदर्शनंतथा ॥ कन्यादानंमहोत्साहंशुक्लयोगेचकारयेत्॥ १ ॥-॥ ( दानम् )-शुक्लेचोपानहोर्दानम् ॥ १ ॥

## ३५१ अथ ब्रह्म[25]योगस्य स्वरूपम्-

ब्रह्माब्रह्मकुलोद्भूतोमहानूर्ध्वमुखस्थितः ॥ ब्रह्मण्याहितदृष्टिस्सन्तपन्नस्तुसुखायमे ॥ १ ॥ पाटलवर्णः॥-॥ ( कृत्यम् )-अयंयोगः सर्वकर्मसुशुभः ॥ चौलोपनयनंचैवशांतिकंपौष्टिकंशुभम् ॥ कृषिविद्यासेतुबंधंयोगेब्रह्माह्वयेहितम् ॥ १ ॥-॥(दानम्)-शस्तंब्रह्मणिसर्पिषः॥ १ ॥

## ३५२ अथ ऐंद्र[26]योगस्य स्वरूपम्-

ऐंद्रायप्रणतिर्मेस्यादूर्ध्वप्रेरितदृष्टये ॥ वाधूलान्वयजातायवरदायसदानृणाम् ॥ १ ॥ पाटलवर्णः॥-॥ ( कृत्यम् )-अयंयोगस्सर्वकर्मसुप्रशस्तः ॥ कन्यादानंगजारोहः स्त्रीसेवावस्त्रभूषणम् ॥ काव्यनाटकसंगीतमैंद्रयोगेतुसिध्यति ॥ १ ॥-॥( दानम् )-ऐंद्रेचदीपकान्दद्यात् ॥ १ ॥

## ३५३ अथ वैधृति[27]योगस्य स्वरूपम्--

वैधृतिर्नामयोगोसावूर्ध्वदृष्टिश्शुभोस्तुमे ॥ कौंडिन्यगोत्रजोब्रह्मसंस्मरन्मनसान्वहम् ॥ १ ॥ पाटलवर्णः ॥-॥ प्रकारान्तरम्-( रुद्रयामलेशांतिप्रकरणे ) अतिरौद्रंमहाकायंशंखवर्णचतुर्भुजम् ॥ दधतंडमरुं-

शूलंखड्गखेटकधारिणम् ॥ १ ॥ ममपूजांगृहाणेमांचंद्रसूर्यात्मजप्रभो ॥ -॥ ( कृत्यम् )-अयंयोगः सर्वकर्मसुत्याज्यः ॥ अथवापंचचत्वारिंशद्धटिकापर्यंतंशूभकर्मकुर्यात् ॥ रिपुप्रभेदंगरलप्रयोगभेदाग्निशस्त्रादिकमुग्रकर्म ॥ उच्चाटनंवंचनशृंखलादिकार्यंहितंवैधृतिनामयोगे ॥ १ ॥-॥( दानम् )-वैधृतौकनकंहितम् ॥ १ ॥ २७ ॥

अथ विष्कंभादिसप्तविंशतियोगेषुजातगुणाः-( कालप्रकाशिकायाम् )-

( विष्कंभे )--दीर्घवैरोजितारिश्चकुब्जांगोमदनातुरः ॥ स्वतंत्रःपशुमान्मंत्रीविष्कंभेजायतेनरः ॥ १ ॥

( प्रीतौ )--भूतानांप्रियवादीचपरदाररतोत्सुकः ॥ गुरुदेवादिभक्तश्चप्रीतियोगोद्भवोनरः ॥ १ ॥

( आयुष्मति )--दीर्घजिह्वोविशालाक्षोधान्यगोमित्रपुत्रवान् ॥ आयुष्मद्योगसंजातः कीर्तिमान्पंडितस्सुखी ॥ १ ॥

( सौभाग्ये )-मत्स्यशंखकलांकश्चमृदुःकामिफलात्मकः ॥ सौभाग्ययोगसंजातोधनीस्यात्परदेशगः ॥ १ ॥

( शोभने )--सुखीभोक्ताधनीमानीमृदुकृत्योमहोद्यमः ॥ सुकोपीशोभनेयोगेजातोबुद्धिप्रियोदृढः ॥ १ ॥

( अतिगंडे )--कामीकलावित्सौम्यांगोदीर्घवैरीतनुःक्षमी ॥ परेंगितज्ञोमानीस्यादातिगंडोद्भवोनरः ॥ १ ॥

( सुकर्मणि )-सुशीलोगुणवान्भोक्ताबहुपुत्रकलत्रवान् ॥ पुण्यकर्मरतोयोगेसुकर्माख्येतुजायते ॥ १ ॥

( धृतौ )-कामांगोवाक्पतिश्श्रीमान्त्सौम्यः कामीचपंडितः ॥ धृतियोगोद्भवोधीरोबहुवित्तोन्नतश्शठः ॥ १ ॥

( शूले )-शूलयोगोद्भवःकोपीतेजस्वीकलहप्रियः ॥ बधिरोतितरांकामीधनीमानीदृढःप्रभुः ॥ १ ॥

( [10]गंडे )—दीर्घाशीदीर्घदर्शीचत्वग्दोषीश्यामलस्सुखी ॥ कुनखीश्रुतगोभोक्ताधनीगंडोद्भवःपुमान् ॥ १ ॥

( [11]वृद्धौ )—धनधान्यसमृद्धश्चपंडितःपरिवारवान् ॥ बहुपुत्रकलत्राढ्यस्त्रिदोषीवृद्धियोगजः ॥ १ ॥

( [12]ध्रुवे )—समकायोमहोद्योगीस्थिरवाक्श्लेष्मलःपटुः ॥ क्षमीचनिर्धनोमानीध्रुवयोगोद्भवोनरः ॥ १ ॥

( [13]व्याघाते )—क्षिप्रकोपीकृतघ्नश्चजनमान्यःप्रभुर्दृढः ॥ व्याघातयोगसंजातः पुत्रदाराधिकोगुणी ॥ १ ॥

( [14]हर्षणे )—परदाररतःकांतःकफात्मापिशुनःपरः ॥ परेंगितज्ञोधनवान्हर्षणेजायतेनरः ॥ १ ॥

( [15]वज्रे )—कठिनःकामिनीसक्तःकांतःकमललोचनः ॥ अजय्यः वित्तवाञ्छ्रीमान्वज्रयोगोद्भवोनरः ॥ १ ॥

( [16]सिद्धौ )—संकल्पसिद्धशिष्टांगोजयशीलः स्थिरः प्रभुः ॥ श्रीमान्धीमान्प्रजावांश्चसिद्धियोगोद्भवोनरः ॥ १ ॥

( [17]व्यतीपाते )—जयशीलोजितारिश्चस्त्रीस्वभावोमहोद्यमः ॥ व्यतीपातेनरोजातस्तेजस्वीशीतलः प्रियः ॥ १ ॥

( [18]वरीयसि )—वंशविद्वेषकोमानीनरःपरधनेच्छुकः ॥ पित्तात्मावित्तसंपन्नोवर्यान्योगेकलत्रवान् ॥ १ ॥

( [19]परिघे )—स्वतंत्रः परविद्वेषीकार्यविघ्नकरश्शठः ॥ वाचाचलश्चभीरुश्चश्रीमान्परिघयोगजः ॥ १ ॥

( [20]शिवे )—शांतःशुद्धमनाविद्वान्देवब्राह्मणपूजकः ॥ धनवान्परिवाराढ्यःशिवयोगोद्भवोनरः ॥ १ ॥

( [21]सिद्धे )—प्रसिद्धश्चैवसिद्धात्माकीर्तिधर्मपरायणः ॥ त्रिदोषात्माधनीभोक्तासिद्धयोगेतुपंडितः ॥ १ ॥

( साध्ये[२२] )—पीनगंडश्चपिशुनोमंत्रविद्देवताप्रियः ॥ धान्यवान्रोमशाकारस्साध्ययोगेतुपंडितः ॥ १ ॥

( शुभे[२३] )—सुभगोधार्मिकोविद्वान्कामिनीवल्लभः प्रभुः ॥ शुभयोगेभविष्यज्ज्ञःश्लेष्मलोधनधान्यवान् ॥ १ ॥

( शुक्ले[२४] )—कामीविद्वाञ्छठोमूर्खश्चंचलोधार्मिकोधनी ॥ शुक्लयोगेतुसंजातोवातश्लेष्मात्मकोनरः ॥ १ ॥

( ब्रह्मयोगे[२५] )—स्त्रीभावः पंडितोमानीगुप्तकार्योविवेकवान् ॥ ब्रह्मयोगोद्भवश्श्रेष्ठः कांतश्चधनधान्यवान् ॥ १ ॥

( ऐंद्रयोगे[२६] )—परोपकारशीलश्चभविष्यज्ज्ञश्चबुद्धिमान् ॥ वातात्माक्षिप्रकोपीचश्रीमान्माहेंद्रयोगजः ॥ १ ॥

( वैधृतौ[२७] )—तोयात्माचनरोमूर्खःकनकार्हःकफात्मकः ॥ सत्यवान्धनवान्त्यागीवैधृतौविकटेक्षणः ॥ १ ॥ २७ ॥

---

## ३९४ अथ योगाभिमानिदेवतानांनामानि—

( ज्योतिषरत्नाकरेनारदीये )

योगेशायमविष्णिवन्दुधातृजीवनिशाचराः ॥ इंद्रतोयाहिवह्न्यर्कभूमरुद्भगतोयपाः ॥ १ ॥ गणेशरुद्रधनदत्वष्टृमित्रषडाननाः ॥ सावित्रीकमलागौरीनासत्यौपितरोदितिः ॥ २ ॥ विष्कंभादिकयोगानामधिदेवतराअमी ॥ २७ ॥

---

## अथ योगाभिमानिदेवतानांस्वरूपाणि—( ज्योतिषरत्नाकरे )

## ३९५ तत्रादौ विष्कंभाभिमानियमस्य स्वरूपम्—

विष्कंभयोगनाथंतंयमंमहिषवाहनम् ॥ दंडपाशधरंवंदेदक्षिणाशापतिंविभुम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

## ३९६ अथ प्रीतियोगाभिमानिविष्णुस्वरूपम्—

प्रीतियोगपतिंविष्णुंगरुडोपरिसंस्थितम् ॥ शंखचक्रगदापाणिंवंदेसर्वार्थसिद्धये ॥ १ ॥ नीलवर्णः ॥ ( चतुर्विंशतिमूर्त्तिस्थविष्णुवत् २नि० ) ॥ १ ॥

३६७ अथ आयुष्मद्योगाभिमानिचंद्रस्वरूपम्-
आयुष्मद्योगनाथंत्वांसोमंसुरगणार्चितम् ॥ लक्ष्मीसहोदरंवंदेक्षीरसागर नंदनम् ॥ १ ॥ श्वेतवर्णः ॥ ( नवग्रहचंद्रवत् ५ नि० ) ॥ १ ॥

३५८ अथ सौभाग्ययोगाभिमानिधातुःस्वरूपम्-
सौभाग्ययोगनेतारंधातारंसर्वतोमुखम् ॥ अक्षस्त्रक्कुंडिकापाणिंध्याये त्वांपाहिमांप्रभो ॥ १ ॥ पाटलवर्णः ॥ ( बृहस्पतिप्रत्यधिदेवतावत् ५ नि० ) ॥ १ ॥

३५९ अथ शोभनयोगाभिमानिगुरुस्वरूपम्-
त्वंहिशोभनयोगस्यनाथोसिसुरपूजितः ॥ जीवमांपाहिसततमनया- पूजयाप्रभो ॥ १ ॥ ॥ कनकवर्णः ॥ (नवग्रहस्थगुरुवत् ५नि०)॥ १ ॥

३६० अथ अतिगंडयोगाभिमानिनिशाचरस्वरूपम्--
करालवदनंकृष्णंयातुधानंनृवाहनम् ॥ ऊर्ध्वकेशंविरूपाक्षमतिगंडे- श्वरंभजे ॥ १ ॥ नीलवर्णः ॥ ( दिक्पालनिर्ऋतिवत् ४ नि० ) ॥ १ ॥

३६१ अथ सुकर्मयोगाभिमानींद्रस्वरूपम्-
सुकर्मयोगनाथस्त्वमिंद्रदेवगणार्चितः ॥ शचीनाथनमस्तुभ्यंपाहिमां- स्वर्णनायक ॥ १ ॥ कनकवर्णः ॥ ( लोकपालेंद्रवत् ४ नि० ) ॥ १ ॥

३६२ अथ धृतियोगाभिमान्यब्देवतास्वरूपम्-
धृतियोगाधिपाआपःपावन्यःपापनाशिकाः ॥ प्राणदाःसर्वलोकस्यपां- तुमांविष्णुसंभवाः॥ १ ॥श्वेतवर्णाः॥(पंचभूतास्थाब्देवतावत् ४ नि०)१ ॥

३६३ अथ शूलयोगाभिमानिसर्पस्वरूपम्-
शूलयोगस्यनाथांस्तानहींस्तीक्ष्णविषान्वितान् ॥ नमस्कुर्मस्सदा- शांतिंप्रयच्छंतुफणाभृतः ॥ १ ॥ श्वेतवर्णः ॥ ( राह्वधिदेवतासर्पवत् ४ नि० ) ॥ १ ॥

३६४ अथ गंडयोगाभिमानिवह्निस्वरूपम्-
गंडयोगाधिपंवह्निंशक्तिस्रुक्स्रुवधारिणम् ॥ मेघवाहनमारूढंध्याये-

त्सर्वार्थसिद्धये ॥ १ ॥ लोहितवर्णः ॥ (पंचभूतस्थवह्निवत् ४ नि०) ॥ १ ॥

३६५ अथ वृद्धियोगाभिमान्यर्कस्वरूपम्-

अर्कमत्यद्भुताकारंवृद्धियोगपतिंशुभम् ॥ पद्मासनस्थंदेवेशंवंदेज्योतिर्गणेश्वरम् ॥ १ ॥ सिंदूरवर्णः ॥ (नवग्रहस्थार्कवत् ५ नि०) ॥ १ ॥

३६६ अथ ध्रुवयोगाभिमानिभूमिस्वरूपम्-

मातरंसर्वलोकस्यध्रुवयोगाधिदेवताम् ॥ भूमिदेवीमहंवंदेमहिषींशार्ङ्गधन्वनः ॥ १ ॥ श्वेतवर्णा ॥ ( पंचभूतस्थभूमिवत् ४ नि० ) ॥ १ ॥

३६७ अथ व्याघातयोगाभिमानिमरुत्स्वरूपम्-

द्विभुजंधूम्रवर्णंचपाशाभययुतंविभुम् ॥ व्याघातनाथंमरुतंमृगारूढमहंभजे ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

३६८ अथ हर्षणयोगाभिमानिभगस्वरूपम्-

हर्षणाधिपतिंवंदेभगंभार्याधिदैवतम् ॥ संपूजयिष्येसंतुष्टस्समभीष्टंप्रयच्छतु ॥ १ ॥ रक्तवर्णः ॥ ( उत्तरानक्षत्रदेवतावत् ५ नि० ) ॥ १ ॥

३६९ अथ वज्रयोगाभिमानिवरुणस्वरूपम्-

वज्रयोगाधिपंवंदेवरुणंवांछितार्थदम् ॥ नक्रवाहनमारूढंपाशपात्रमपांपतिम् ॥ १ ॥ कनकवर्णः ॥ १ ॥

३७० अथ सिद्धियोगाभिमानिगणेशस्वरूपम्-

सिद्धियोगेश्वरंवंदेगणेशंगिरिजासुतम् ॥ एकदंतंशूर्पकर्णंलंबोदरमहर्निशम् ॥ १ ॥ सिंदूरवर्णः ॥ १ ॥

३७१ अथ व्यतीपातयोगाभिमानिरुद्रस्वरूपम्-

व्यतीपाताभिधंरुद्रंवृषभोपरिसंस्थितम् ॥ त्रिणेत्रंत्रिपुरारातिंतंवंदेपार्वतीपतिम् ॥ १ ॥ रक्तवर्णः ॥ ( एकादशरुद्रवत् नि० ३ ) ॥ १ ॥

३७२ अथ वरीयोयोगाभिमानिधनदस्वरूपम्-

वरीयसोधिपंवंदेधनदंलोकपालकम् ॥ धनधान्याभिवृद्ध्यर्थंदेवंवैश्रवणंविभुम् ॥ १ ॥ कनकवर्णः ॥ ( लोकपालस्थकुबेरवत् नि० ४ ) ॥

३७३ अथ परिघाभिमानित्वष्टृस्वरूपम्–

परिघेशमहंवंदेत्वष्टारंशिल्पिनांवरम् ॥ वृत्रासुरप्रभृतयोयत्सुतास्तं-सदामुदा ॥ १ ॥ पाटलवर्णः ॥ ( विश्वकर्मब्रह्मवत् ४ नि० ) ॥ १ ॥

३७४ अथ शिवयोगाभिमानिमित्रस्वरूपम्–

शिवयोगाधिपंमित्रंसदाशांतंसुनिर्मलम् ॥ वंदेदेवगणश्रेष्ठंसमेभीष्टंप्र-यच्छतु ॥ १ ॥ रक्तवर्णः ॥ ( अनूराधानक्षत्रदेवतावत् ५ नि० ) ॥ १ ॥

३७५ अथ सिद्धियोगाभिमानिषडाननस्वरूपम्–

षडाननमहंवंदेसिद्धयोगाधिपंविभुम् ॥ पार्वतीनंदनंदेवंदेवसेनाधिपंगुहम् ॥ १ ॥ पाटलवर्णः ॥ अंगारकप्रत्यधिदेवतावत् नि० ५ ) ॥ १ ॥

३७६ अथ साध्ययोगाभिमानिसावित्रीस्वरूपम्–

साध्ययोगेश्वरींदेवींसावित्रींलोकमातरम् ॥ सप्तकोटिमहामंत्रश्रेष्ठांवं-देसुरार्चिताम् ॥ १ ॥ श्वेतवर्णा ॥ (माध्याह्निकसावित्रीवत् नि० ५) ॥ १ ॥

३७७ अथ शुभयोगाभिमानिलक्ष्मीस्वरूपम्–

शुभयोगेश्वरींदेवींकमलांकमलालयाम् ॥ वंदेरमांपद्ममुखींविष्णुव-क्षस्थलालयाम् ॥ १ ॥ कनकवर्णा ॥ (विष्णुपत्नीलक्ष्मीवत् नि० २) ॥ १ ॥

३७८ अथ शुक्लयोगाभिमानिगौरीस्वरूपम्–

शुक्लयोगेश्वरींवंदेसर्वलोकैकमातरम् ॥ गिरिराजसुतांगौरींपद्माभय-करान्विताम् ॥ १ ॥ मरकतवर्णा ॥ १ ॥

३७९ अथ ब्रह्मयोगाभिमानिनासत्यदेवतास्वरूपम्–

ब्रह्मयोगस्यनेतारौनासत्यावश्विनसुतौ ॥ वंदेतौदेवभिषजौपुस्तु (स्त) कौषधिपाणिकौ ॥ १ ॥ श्वेतवर्णौ ॥ १ ॥

३८० अथ ऐंद्रयोगाभिमानिपितृस्वरूपम्–

ऐंद्राभिमानिनोवंदेसर्वलोकैकपूजितान् ॥ पितॄन्पिंडाभयकरान्पुत्रा-युश्श्रीप्रदान्नृणाम् ॥ १ ॥ धूम्रवर्णाः ॥ १ ॥

## ३८१ अथ वैधृतियोगाभिमानिदितिस्वरूपम्-

वैधृत्यधीश्वरींदेवींदितिंदैत्येंद्रमातरम् ॥ द्विभुजांपद्महस्तांतामायुरारोग्यवृद्धये ॥ १ ॥ रक्तवर्णा ॥ १ ॥ २७ ॥

---

## अथ बवाद्येकादशकरणानांनामानि-( संहितार्णवे )

बवबालवकौलवतैतुलगारिजवणिक्प्रभद्रकाःशकुनिः ॥ अथचचतुष्पान्नागवकिंस्तुघ्नाख्यानिकरणानि ॥ १ ॥

## अथ बवाद्येकादशकरणानांस्वरूपाणि-( शैवागमे )

एषुकर्तव्यानिकृत्यानि- ( दैवज्ञविलासे ) एषुकर्त्तव्यदानानिच-( दानचिंतामणौविष्णुधर्मोत्तरे ) ॥

## ३८२ तत्रादौ बवकरणस्यस्वरूपम्-

सद्योजातंबवाख्यानंचंद्रार्धकृतशेखरम् ॥ तपस्विसंघसंसेव्यंकरणंप्रणमाम्यहम् ॥ १ ॥ श्वेतवर्णः ॥-॥ ( कृत्यम् )-चरस्थिरद्विजहितवस्त्रधान्याकरादियत् ॥ धातुवादवणिग्यानकर्मसर्वंबवेहितम् ॥ १ ॥-॥ ( दानम् )-बवेपायसदानंस्यात् ॥ १ ॥

## ३८३ अथ बालवकरणस्यस्वरूपम्-

करणंबालवाख्यंतद्वामदेवसमाह्वयम् ॥ नेत्रत्रयोज्ज्वलमुखंनमामिबलवृद्धिदम् ॥ १ ॥ श्वेतवर्णः ॥-॥ ( कृत्यम् )-मंगलोत्सवयानादिवास्तुकर्माखिलंचयत् ॥ नृपाभिषेकसंग्रामकर्मसिध्यतिबालवे ॥ १ ॥-॥ ( दानम् )-शय्यादानंचबालवे ॥ १ ॥

## ३८४ अथ कौलवकरणस्यस्वरूपम्-

अघोरंकौलवाख्यानंचर्मांबरधरंशुचिम् ॥ नमामिमोक्षदातारंवेदांतप्रतिपादितम् ॥ १ ॥ श्वेतवर्णः ॥-॥ ( कृत्यम् )-यानवाहनसौभाग्यंमित्रत्वंमंत्रसाधनम् ॥ बालवोक्ताखिलंकर्मकौलवेसिध्यतिध्रुवम् ॥ १ ॥-॥ ( दानम् )-कौलवेगोरसान्दद्यात् ॥ १ ॥

### ३८५ अथ तैतुलकरणस्यस्वरूपम्—

तैतुलाख्यंतत्पुरुषंगंगोद्भासितमस्तकम् ॥ सर्वगीर्वाणजंवन्देपुत्रपौत्राभिवृद्धये ॥ १ ॥ श्वेतवर्णः ॥—॥ ( कृत्यम् )—संधिविग्रहयानादिक्रयविक्रयकर्मयत् ॥ तटाककूपखननंकार्यंतैतुलसंज्ञके ॥ १ ॥—॥ ( दानम् )—तिलांस्तैतुलनामनि ॥ १ ॥

### ३८६ अथ गरजकरणस्यस्वरूपम्—

नमामिशिरसानित्यमीशानंगरजाह्वयम् ॥ वामांगनित्यसंविष्टहिमाद्रितनयोज्ज्वलम् ॥ १ ॥ श्वेतवर्णः ॥—॥ ( कृत्यम् )—बीजावापंकृषिंचैवविवाहंभूपरिग्रहम् ॥ वास्तुकर्मप्रवेशंचगरजेतुविधीयते ॥ १ ॥—॥ ( दानम् )—गराभिधानेलवणम् ॥ १ ॥

### ३८७ अथ वणिक्करणस्यस्वरूपम्—

शिवंवणिक्स्वरूपंतंशिरसाप्रणमाम्यहम् ॥ प्रमदाव्रतपर्यंकंशूलोज्ज्वलकरांबुजम् ॥ १ ॥ श्वेतवर्णः ॥—॥ ( कृत्यम् )—मूलकर्माखिलंधातुजीवकर्माखिलंचयत् ॥ उक्तानुक्ताखिलंकर्मवणिजेसिध्यतिध्रुवम् ॥ १ ॥—॥ ( दानम् )—वणिजेदेयमंबरम् ॥ १ ॥

### ३८८ अथ भद्रंकरणस्य स्वरूपम्—

भद्रायमहतेभूयाद्भद्राख्यःपार्वतीपतिः ॥ रुद्राक्षमालिकोद्भासिकंधरःशुभवर्धनः ॥ १ ॥ श्वेतवर्णः ॥—॥ प्रकारांतरेणस्वरूपमाह श्रीपतिः—( नारदीये )—असितजलदवर्णादीर्घनासोग्रदंष्ट्राविपुलहनुकपोलाबिंबिकोद्वंधजंघा ॥ अनलशतसहस्रंचोद्गिरंतीसमंतात्पततिभुवनमध्ये कार्यनाशायविष्टिः ॥ १ ॥ नीलवर्णा ॥ विष्टिर्भुजंगमाकारंकेचिदिच्छंतिदारुणम् ॥ भुजंगमोमुखेभीमोनतुपुच्छेद्विधोच्यते ॥ १ ॥—॥ ( कृत्यम् )—( दैवज्ञविलासे )—वधबंधविहाराग्निच्छेदनोच्चाटनानियत् ॥ तुरंगमहिषोक्षादिकर्मविष्टयांतुसिध्यति ॥ १ ॥ नकुर्यान्मंगलंविष्टयांदु-

रिताद्धिकदाचन ॥ शुभकर्माणिसर्वाणिभद्रायांसमुदीरयेत् ॥ २ ॥-॥ अस्यैव भुजंगाकारस्यकृत्येघटिकाः-( नारदीये- )-मुखेपंचगलेत्वेका वक्षस्येकादशस्मृताः ॥ नाभौचतस्रःकट्यांषट्पुच्छेतिस्रश्चनाडिकाः ॥ ॥ १ ॥-॥ ( फलम् )-कार्यहानिर्मुखेमृत्युर्गलेवक्षसिनिस्स्वता ॥ कट्यांबुद्धिप्रदानाभौच्युतिःपुच्छेध्रुवोजयः ॥ १ ॥ निशिपूर्वार्धजावि-ष्टिर्दिवाचाऽपरतःशुभा ॥ क्रमागतातुयाविष्टिःसैवहालाहलोपमा ॥ २॥ ॥-॥ ( दानम् )-दिष्टौचषष्टिकान्नानि ॥ १ ॥

## ३८९ अथ शकुंनिकरणस्य स्वरूपम्-

विरूपाक्षमहंवंदेशकुनीतिकृताह्वयम् ॥ आरोग्यदंप्रणमतांजटामं-डलमंडितम् ॥ १ ॥श्वेतवर्णः॥-॥ (कृत्यम्)-शांतिकंपौष्टिकंचैवमूलमं-त्रौषधानिच ॥ देवतापूजनंचैवशकुनौतुप्रशस्यते ॥ १ ॥-॥ ( दानम् )-शकुनौसर्पिरेवच ॥ १ ॥

## ३९० अथ चतुष्पात्करणस्य स्वरूपम्-

चतुष्पादितिसंज्ञायनीलकंठायशंभवे ॥ अमरस्तुत्यपादाब्जयुगला-यनमोनमः ॥ १ ॥ श्वेतवर्णः ॥-॥ ( कृत्यम् )-गोकार्यंतृणकार्यंचब्रा-ह्मणानांचभोजनम् ॥ तर्पणंदेवतानांचचतुष्पदिविधीयते ॥ १ ॥-॥ ( दानम् )-मधुदानंचतुष्पदि ॥ १ ॥

## ३९१ अथ नांगवकरणस्य स्वरूपम्-

नागचर्मांबरधरंनागवाख्यमुमापतिम् ॥ ध्यायेत्समस्तसिद्ध्यर्थमुत्तुं-गवृषवाहनम् ॥ १ ॥ श्वेतवर्णः ॥-॥ ( कृत्यम् )-उग्रकर्मरिपूच्चाटं-मारणंमोहनंतथा ॥ वेधस्तुवंचनंक्रूरंनागवेचात्रशस्यते ॥ १ ॥-॥ ( दानम् )-दानंनागेचवाससाम् ॥ १ ॥

## ३९२ अथ किंस्तुंघ्नकरणस्य स्वरूपम्-

नमस्यांकरवैनित्यंकिंस्तुघ्नाख्यायशूलिने ॥ भस्मोद्धूलितदेहायवेदां-

तकृतशर्मणे ॥ १ ॥ श्वेतवर्णः ॥–॥ (कृत्यम्)–नवान्नभोजनंचैव भूषणंभूपरिग्रहम् ॥ शोभनंशुभकर्माणिकिंस्तुघ्नेतुप्रशस्यते ॥ १ ॥–॥ (दानम्)–दानंप्रियंगोःकिंस्तुघ्ने ॥ १ ॥ ११ ॥

---

## अथ बवाद्येकादशकरणेषु जातानां गुणाः–

### (कालप्रकाशिकायाम्)

तत्रादौ (१ बवे)–प्रख्यातविभवाचारोमृदुश्चैवसुखीदृढः ॥ वक्रांगो नृपपूज्यश्चबवजातोधनाधिपः ॥ १ ॥

(२ बालवे)–बालवेकरणेजातोबालकृत्यःप्रतापवान् ॥ गोभूमिवित्तभृत्याढ्योनीचकृत्योमहोद्यमः ॥ १ ॥

(३ कौलवे)–गजाश्वारोहणेदक्षःसदाचारपरःप्रभुः ॥ मातापित्रोर्विधेयश्चदैष्टिकःकौलवोद्भवः ॥ १ ॥

(४ तैतुले)–स्निग्धांगःप्रभुसेवीचधर्मज्ञोदुष्टचेष्टितः ॥ तैतुलेकरणे जातोमृदुवाक्पाठकःसुखी ॥ १ ॥

(५ गरजे)–दूरदर्शीप्रतापीचनिर्भयोराजवल्लभः ॥ गरजेकरणेजातो जितशत्रुर्जनप्रियः ॥ १ ॥

(६ वणिजे)–चतुरःश्रुतवान्वीतक्रोधोविक्रयपंडितः ॥ गुप्तकृत्योतिमुंडश्चवणिजेकरणेनृपः ॥ १ ॥

(७ विष्टयाम्)–पापिष्ठोनिर्भयश्चैवत्वसहिष्णुःपराजितः ॥ स्वतंत्रःकरणेविष्टयांजातोलुब्धस्तुचंचलः ॥ १ ॥

(८ शकुनौ)–उन्नसश्चभविष्यज्ञःकुलद्वेषीखलःकृशः ॥ शकुनौ परितोषीचगोभूमिपरिवारकः ॥ १ ॥

(९ चतुष्पदि)–अस्थिरःकलुषोधूर्तःक्रूरवाक्चैवदुर्मतिः ॥ नानाचिंताकुलोरोगीकांतःस्याच्चचतुष्पदि ॥ १ ॥

(१० नागवति)–विद्वांश्चदीर्घवैरीचक्षिप्रकोपोधनान्वितः ॥ विकटांगोगुणीमानीनागेजातोल्पभुग्भवेत् ॥ १ ॥

( किंस्तुघ्ने )-हास्यकृत्यःकलाभिज्ञोद्यूतज्ञःशौर्यकृत्यवित् ॥ किंस्तुघ्नेकरणेजातोभोगीत्यागीनरःसुखी ॥ १ ॥ ११ ॥

---

अथ बवादिकरणाभिमानिदेवतानामानि-( ज्योतिषरत्नाकरेनारदीये )

क्रमशःकरणाधीशाःसहस्राक्षःप्रजापतिः ॥ मित्राख्यःपितरोभूमिः श्रीर्विष्णुश्चयमस्तथा॥ १ ॥ माणिभद्रोदंदशूकोवायुरेकादशस्मृताः॥ १ ॥

अथ बवादिकरणाभिमानिनां स्वरूपाणि-( ज्योतिषरत्नाकरे )

३९३ तत्रादौ बवाभिमानींद्रध्यानम्-

इंद्रंबवस्यनेतारंगजवाहनसंस्थितम् ॥ वज्रांकुशाभीतिकरंनौमींद्राणी मनोहरम् ॥ १ ॥ कनकवर्णः॥ ( लोकपालेंद्रवत् नि० ४ ) ॥ १ ॥

३९४ अथ बालवाभिमानिप्रजापतिध्यानम्-

बालवस्यचनेतारंप्रजानांपतिमव्ययम् ॥ अक्षस्रुक्स्रुवकुंडाढ्यंवंदे मांपातुसोन्वहम् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

३९५ अथ कौलवाभिमानिमित्रध्यानम्-

चंद्रंशीतलयंतंतंकौलवाधीश्वरंरविम् ॥ गदावरदहस्तंचवंदेहंदिवसेश्वरम् ॥ १ ॥ रक्तवर्णः ॥ १ ॥

३९६ अथ तैतुलाभिमानिपितृदेवताध्यानम्-

तैतुलाधीश्वरान्वंदेपितॄंल्लोकैकपूजितान् ॥ संतुष्टाःपितरोमह्यंभवेयुर्वाञ्छितार्थदाः ॥ १ ॥ नीलवर्णः ॥(मघानक्षत्रदेवतावत् नि०५)॥ १ ॥

३९७ अथ गरिजाभिमानिभूमिध्यानम्-

गरि(र)जाधीश्वरींभूमिंदेवींवाञ्छितदायिकाम्॥ नमस्यामिसदासामां रक्षताच्छुभकारिका॥ १ ॥श्वेतवर्णा॥ ( पंचभूतस्थभूमिवत् नि०४)१ ॥

३९८ अथ वणिजाभिमानिरमाध्यानम्-

वणिजेशीमहंवंदेरमांगरुडवाहनाम् ॥ शंखचक्रवराभीतिपाणिंसेष्टं प्रयच्छतु ॥ १ ॥ कनकवर्णा ॥ १ ॥

३९९ भद्राँभिमानियमध्यानम्-

यमंभद्रेश्वरंभीमंमहामहिषसंस्थितम् ॥ दंडपाशधरंवंदेदक्षिणाशापतिंविभुम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

४०० अथ शकुन्यभिमानिविष्णुध्यानम्-

विष्णुंदेवमहंवंदेखगेशंखगवाहनम् ॥ शंखचक्रगदाशार्ङ्गधारिणं नौमिसर्वदा ॥ १ ॥ नीलमेघवर्णः ॥ १ ॥

४०१ अथ चतुष्पादभिमानिमाणिभद्रध्यानम्-

माणिभद्रमहंवंदेचतुष्पात्तिथिनायकम् ॥ यक्षेश्वरस्यसैन्येशंसमेभीष्टंप्रयच्छतु ॥ १ ॥ नीलवर्णः ॥ १ ॥

४०२ अथ नागवांभिमानिसर्पध्यानम्-

नागवस्येश्वरान्नागान्नानाभीष्टप्रदान्नृणाम् ॥ वंदेतानायुरारोग्यपुत्रपौत्राभिवृद्धये ॥ १ ॥ शुभ्रवर्णः ॥ ( अष्टनागस्थशेषवत् नि० ४ ) ॥ १ ॥

४०३ अथ किंस्तुघ्नाभिमानिवायुध्यानम्-

किंस्तुघ्नस्याधिपान्वायून्सप्तसप्तमहाबलान् ॥ खड्गचर्मधरान्वंदेवाञ्छितार्थान्दिशंतुमे ॥ १ ॥ धूम्रवर्णः ॥ १ ॥ ११ ॥

---

४०४ अथ त्याज्यस्वरूपम्-( रुद्रयामलेकुहूकल्पे )

खराननंसिंहगलंत्रिपादंशुष्कोदरंकुद्धभुजंगनेत्रम् ॥ कपालपाशांकुशलांगलाढ्यहस्तंसदालोकभयंकरंच ॥ १ ॥ ऋक्षेषुराश्यादिषुनर्तयंतं नमामिवर्ज्यंशववाहनंतम् ॥ नीलवर्णः ॥-॥ प्रकारांतरम्-(शौनकीयेशांतिप्रकरणे ) ज्वलत्पावककेशांतांनीलमेघसमप्रभाम् ॥ भूषणैरायसैरेवभूषितांभीमरूपिणीम् ॥ १ ॥ दंष्ट्राकरालवदनांमहिषोपरिसंस्थिताम् ॥ संयुक्तामष्टभिर्हस्तैःखड्गशूलगदामिषाम् ॥ २ ॥ पाशदंडांकुशधरांनाराचाद्यायुधानिच ॥ धारयंतींमहाकायांमूर्तिंकृत्वाविभीषणाम् ॥ ३ ॥ दंष्ट्रादष्टाधरोष्ठांतांवराहारास्थिभूषणाम् ॥ एवंविधस्वरूपंवैकृत्वापात्रेन्यसेत्ततः ॥ ४ ( तत्रप्रथमघटिकादेवतारुद्रः ) ॥

( द्वितीयघटिकादेवतायमः ) ॥ ( तृतीयघटिकादेवताअग्निः ) ॥ ( तुरीयघटिकादेवतामृत्युः ) ॥ १ ॥

### ४०५ अथैतन्मृत्युस्वरूपम्-

दंष्ट्राकरालवदनोनीलांजनसमाकृतिः ॥ पाशखड्गांकुशगदापाणिर्मृत्युःसदावतु ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ४०६ अथ अमृतलक्षणम्-( आयुर्वेदतंत्रे )

मधुररससमेतंक्षुत्तृडाशानिवारंजननमरणवार्धक्यादिदोषापनोदम् ॥ दिविजजनसुसेव्यंशुक्लवर्णंमहौजस्तदमृतशुभदेवंसर्वदाभावयामि ॥ १ ॥ शुक्लवर्णम् ॥ १ ॥

### ४०७ अथ गुलिकस्वरूपम्-( ज्योतिषरत्नाकरे )

नीलांजनप्रकाशोरक्ताक्षोविमललोचनोदीर्घः ॥ पंचास्यःपृथुदंष्ट्रो भल्लकरःखरवहोगुलिकः ॥ १ ॥ नीलवर्णः ॥ १ ॥

### ४०८ अथ महापातस्वरूपम्-( ज्योतिषरत्नाकरे )

सकृष्णोदारुणवपुर्लोहिताक्षोमहोदरः ॥ सर्वारिष्टकरोरौद्रोभूयोभूयोस्तुमेहृदि ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

### ४०९ अथ व्यतीपातस्वरूपम्-( ज्योतिषार्णवे )

कंठांतेलोहितस्थानश्श्वेतग्रीवश्शुभाननः ॥ शुभमांजिष्ठवसनोनीलवर्णविभूषितः ॥ १ ॥ अष्टादशभुजोपेतोभ्रुकुटीकुटिलाननः ॥ पात्रं प्रथमहस्तेतुद्वितीयेलोष्ठभेदनम् ॥ २ ॥ अक्षसूत्रंतृतीयेतुतुरीयेणगदाधरम् ॥ पंचमेश्शृंखलांहस्तेषष्ठेकवचमेवच ॥ ३ ॥ सप्तमेमुद्गरंहस्तेपंकजंचाष्टमेकरे ॥ नवमेचैवकुद्दालंश्शृंगिकामादिमोत्तरे ॥ ४ ॥ पात्रंद्वितीयकेचैवश्शृंगंहस्तेतृतीयके ॥ चतुर्थेकार्मुकंपाणौपंचमेकर्त्रिकामपि ॥ ॥ ५ ॥ मुसलंतुकरेषष्ठेसप्तमेशरमेवच ॥ अष्टमेचध्वजंहस्तेनवमकुक्कुटं शये ॥ ६ ॥ दधानोवैरिविध्वंसीध्वस्तयेचैवमृत्यवे ॥ नीलवर्णः ॥ १ ॥

४१० अथ व्यप्रपातस्वरूपम्–( ज्योतिषार्णवे )

चंद्रार्कयोर्नयनवीक्षणजातमूर्तिःकालानलद्युतिनिभःपुरुषोतिरौद्रः ॥ शस्त्रान्वितोभुविपतन्विनिरीक्ष्यमाणःकार्यांतकान्वितनुतेव्यतिपातयोगः ॥ १ ॥ रक्तवर्णः ॥ १ ॥

४११ अथ वैप्रपातस्वरूपम्–( ज्योतिषरत्नाकरे )

दीर्घबाहुर्महारौद्रस्तीक्ष्णदंष्ट्रोमहोत्कटः ॥ वैप्रपातमिदंरूपंसद्योमरण कारणम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

४१२ अथ जन्मनक्षत्रस्वरूपम्–( ज्योतिषरत्नाकरे )

जन्मर्क्षंक्रूररूपंकरधृतकलशंप्रस्फुरल्लोलजिह्वंदीप्ताक्षंताम्रवर्णंज्वलद्गुरुदशनोदग्रदंष्ट्राकरालम् ॥ १ ॥ युक्तंभौमार्कमंदैरसकृदपिवराभीतिमालावहंतंपूजामंत्रैस्तुदानैर्द्विजवरवचनैःप्रीतिदंभावयामि ॥ २ ॥ रक्तवर्णः १

---

४१३ अथ पंचसंवत्सरात्मकयुगाभिमानिदेवतानांनामानि–( मुहूर्तगणपतौ )

आदौसंवत्सरोज्ञेयोयुगश्चानलदैवतः ॥ भानुमद्दैवतःप्रोक्तोद्वितीयः परिवत्सरः ॥ १ ॥ इदावत्सरसंज्ञश्चतृतीयःसोमदैवतः ॥ अनुवत्सरकश्चैवप्राजापत्यःसमीरितः ॥ २ ॥ तथैवेद्वत्सरोगौरीदैवतःसतुपंचमः ॥ युगैतैःपंचभिर्वर्षैःषष्टि द्वादशभिर्युगैः ॥ ३ ॥ ५ ॥

अथ द्वादशयुगाभिमानिदेवतानांनामानि–( मुहूर्तगणपतौ )

तद्वीशावह्निजीवेंद्रपाशभृत्त्वष्टृसंज्ञकाः ॥ अहिर्बुध्न्यश्चपितरोविश्वेदेवानिशाकरः ॥ १ ॥ पुरुहूतानलौदस्रौभगश्चैतेक्रमात्स्मृताः ॥ १२ ॥

अथ संवत्सरपरिवत्सरादिपंचनामानि–( महोग्ररथशांतौ-कालमाधवीयेच )

प्रभवादिवत्सराणांपञ्चानांचैवमेवसंज्ञास्स्युः । संवत्सरपरिवत्सरमितिचेदावत्सरश्चैव ॥ १ ॥ अनुवत्सरश्चतस्मात्परतश्चेद्वत्सरोंन्तेयः ॥ ५ ॥

अथ ब्राह्मादिमानभेदानाह-( सूर्यसिद्धांतेमानाध्याये )

ब्राह्मंदैवंतथापित्र्यंप्राजापत्यंचगौरवम् ॥ सौरंचसावनंचांद्रमार्क्षं-मानानिवैनव ॥ १ ॥ ९ ॥

अथ ब्राह्मादिमानानां स्वरूपाणि-

४१४ तत्रादौ ब्राह्ममानस्वरूपम्-

नक्षत्रयुनिशोच्छेदोब्राह्मःकल्पउदाहृतः॥ ततोमकरसंक्रांतेरवेस्स्या-दुत्तरायणम् ॥ १ ॥ १ ॥

४१५ अथ दैवमानस्य स्वरूपम्-

कर्क्यादेस्तुतथैवस्यात्षएमासादक्षिणायनम् ॥ सुरासुराणामन्योन्य-महोरात्रंविपर्ययात् ॥ १ ॥ १ ॥

४१६ अथ पित्र्यमानस्य स्वरूपम्-

पश्यंतिपितरस्सूर्यंपार्श्वयोस्त्रिग्र ( गृ ) हस्थितम् ॥ त्रिंशतातिथिभि-र्मासश्चांद्रःपित्र्यमहःस्मृतम् ॥ १ ॥ १ ॥

४१७ अथ प्राजापत्यमानस्य स्वरूपम्-

मन्वंतरव्यवस्थाचप्राजापत्यमुदाहृतम् ॥ १ ॥

४१८ अथ बार्हस्पत्यमानस्य स्वरूपम्-

बार्हस्पत्येनषष्ट्यब्दोज्ञेयोनान्यैस्तुनित्यशः॥-॥ प्रकारांतरेण-का-र्तिकादीनिवर्षाणिगुरुयुक्तोदयास्ततः ॥ १ ॥ १ ॥

(एतानिपंचमानानि धर्मशास्त्रानुपयुक्तानि॥ अन्यानितुचत्वार्युपयुक्तानि) चतुर्भिर्व्यवहारोत्रसौरचांद्रर्क्षसावनैरित्युक्तेः ॥

४१९ अथ सौरमानस्य स्वरूपम्-

सौरस्तुसंक्रांतिवशाद्दिनस्य ॥ १ ॥

४२० अथ नाक्षत्रमानस्य स्वरूपम्-

नाक्षत्रमिंदोर्भगणभ्रमाच्च ॥ १ ॥

४२१ अथ सावनमानस्य स्वरूपम्—

त्रिंशद्दिनंसावनमासः ॥ १ ॥

४२२ अथ चान्द्रमानस्य स्वरूपम्—

आद्यदिनादमांतंखलुचांद्रमाहुः ॥ १ ॥ ९ ॥

अथ प्रभवाद्यब्देषुमाननियमाः—

गृह्यतेगुरुमानेनप्रभवाद्यब्दलक्षणम् ॥ तत्तन्मासैर्द्वादशभिस्तत्तदब्दोभवेद्ध्रुवम् ॥ १ ॥

अथ सौरादिचतुर्मानोपयोगमाह—( वृद्धवसिष्ठः )

सौरेणद्युनिशोर्मानंषडशीतिमुखानिच ॥ अयनेविषुवेचैवसंक्रांतेः पुण्यकालता ॥ १ ॥ तिथिःकरणमुद्वाहक्षौरपर्वक्रियास्तथा ॥ व्रतोपवासयात्रादिक्रियाचांद्रेणगृह्यते ॥ २ ॥ नक्षत्रनाम्नामासास्तुज्ञेयाःपर्वांत्ययोगतः ॥ सावनानिस्युरेतानियज्ञकालविधिस्तुतैः ॥ ३ ॥ सूतकादिपरिच्छेदोदिनमासाब्दपास्तथा ॥ ४ ॥ ( विंध्यस्योत्तरदेशे बार्हस्पत्यमानाब्दोग्राह्यः— तद्दक्षिणदेशेचांद्रमानाब्दोग्राह्यः— द्रविडदेशेतुसौरमानाब्दोग्राह्यः ३ )

अथ मेषादिद्वादशराशिस्वरूपाणि—( शैवागमे )

वर्णादयः ( बृहज्जातके )

४२३ तत्रादौ मेषराशिस्वरूपम्—

तीक्ष्णशृंगधरंदीर्घंसदाघंटाविराजितम् ॥ रक्ताक्षंकुंचितपदंमेषंहृदिविभावये ॥ १ ॥ रक्तवर्णः ॥ १ ॥

४२४ अथ वृषभराशिस्वरूपम्—

मंदराचलसंकाशंतीक्ष्णशृंगद्वयान्वितम् ॥ ककुद्विराजमानांसंवृषभंहृदिभावये ॥ १ ॥ श्वेतवर्णः ॥ १ ॥

४२५ अथ मिथुनराशिस्वरूपम्—

परस्परानुरागाढ्यमन्योन्यसदृशाकृति ॥ अन्योन्याश्लिष्टहस्ताब्जंमिथुनंहृदिभावये ॥ १ ॥ हरिद्वर्णम् ॥ १ ॥

४२६ अथ कर्कटकराशिस्वरूपम्-

वारिपूरांतरचरंषडंघ्रिंलोहितेक्षणम् ॥ कुक्षिविन्यस्तवदनंध्यायामि-हृदिकर्कटम् ॥ १ ॥ पाटलवर्णः ॥ १ ॥

४२७ अथ सिंहराशिस्वरूपम्-

चंडाट्टहासंभयदंदंतिमस्तकभेदिनम् ॥ दीर्घलांगूलसंयुक्तंसिंहंहृदिवि-भावये ॥ १ ॥ धूम्रपांडरवर्णः ॥ १ ॥

४२८ अथ कन्याराशिस्वरूपम्-

पतिमुद्दिश्यसद्दर्शंतपस्यंतींभिताशनाम् ॥ पूर्णचंद्रमुखींकांतांकन्यां-हृदिविभावये ॥१॥ चित्रवर्णा ॥ १ ॥

४२९ अथ तुलाराशिस्वरूपम्-

पदार्थमानसिध्यर्थंब्रह्मणाकल्पितांपुरा ॥ तुलेतिनाम्नविख्यतांसंख्या-रूपामुपास्महे ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

४३० अथ वृश्चिकराशिस्वरूपम्-

हालाहलसमायुक्तंनीलतोयदसन्निभम् ॥ आतोल्यमानपुच्छाग्रं-वृश्चिकंहृदिभावये ॥ १ ॥ कनकवर्णः ॥ १ ॥

४३१ अथ धनूराशिस्वरूपम्-

ईषन्नमितकोट्यग्रदृढज्याभेदनान्वितम् ॥ आरोपितोग्रबाणाग्रंधनुर्हृ-दिविभावये ॥ १ ॥ पिंगलवर्णम् ॥ १ ॥

४३२ अथ मकरराशिस्वरूपम्-

अंभोधिघोरजठरकृतभूयिष्ठखेलनम् ॥ जलजंतुप्रतिभयंमकरंहृदि-भावये ॥ १ ॥ कर्बुरवर्णः ॥ १ ॥

४३३ अथ कुंभराशिस्वरूपम्-

सौवर्णरत्नखचितंसुधापूराभिपूरितम् ॥ वैनतेयजवानीतंकुंभंहृदिवि-भावये ॥ १ ॥ धूम्रवर्णः ॥ १ ॥

## ४३४ अथ मीनराशिस्वरूपम्–

निमेषहीननयनंस्फुरितंवारिधेर्जले ॥ ममाभीष्टस्यसिद्ध्यर्थंमीनंहृदि-विभावये ॥ १ ॥ श्वेतवर्णः ॥ १ ॥ १२ ॥

---

## अथ मेषादिद्वादशलग्नेषुकृत्यानि–( दैवज्ञविलासे )

तत्रादौ ( मेषलग्ने )–अभिषेकोविरोधश्चातोयकारानिबंधनम् ॥ दारुणंसाहसोराज्ञांमेषलग्नेप्रशस्यते ॥ १ ॥

( वृषभे )–स्थिरचरकार्यंह्यखिलंविवाहवास्तवादिकन्यकावरणम्॥ क्षेत्रारंभणमखिलंभूषणशिल्पादिकंवृषभे ॥ १ ॥

( मिथुने )–मेषवृषोक्तंकर्मद्विरदहयोष्ट्राधिरोहणंकर्म ॥ अधिकं-माहिषमेषक्षितिपतिसेवादिकंमिथुने ॥ १ ॥

( कर्कटे )–वापीकूपतटाकादिवारिबंधनमोक्षणम् ॥ पौष्टिकंकर्म-यत्किंचित्सर्वंसिध्यतिकर्किणि ॥ १ ॥

( सिंहे )–कृषिवाणिज्यपण्यादिनृपसेवाभिषेचनम् ॥ धात्वाक-रादिमेषोक्तंकुर्यात्सिंहोदयेसदा ॥ १ ॥

( कन्यायाम् )–भूषणमंगलकार्यंत्वौषधविज्ञानपण्यशिल्पादि ॥ उद्वाहशांतिपौष्टिकगजतुरगोष्ट्रादिकन्यायाम् ॥ १ ॥

( तुलायाम् )–कृषिकर्मवणिज्येहयात्राकर्मतुलोदये ॥ प्रसिध्यंति-चसर्वाणितुलाभांडाश्रितानिच ॥ १ ॥

( वृश्चिके )–दारुणंसाहसंचोग्रंराजसेवाभिषेचनम् ॥ चौर्यकृत्यं स्थिरारंभंकर्तव्यंवृश्चिकोदये ॥ १ ॥

( धनुषि )–मंगलाऽऽसेवसंग्रामाशिल्पचित्रकलाक्रियाः॥ वस्त्रास्त्रकृ-षिवाणिज्यंकर्तव्यंकार्मुकोदये ॥ १ ॥

( मकरे )–वारिबंधनमोक्षंचतयंत्राक्षेतुकर्मयत्॥ नारीचतुष्पादादी-नांग्रहणंस्यान्मृगोदये ॥ १ ॥

( ¹¹कुंभे )—वाजीभकृषिशिल्पाद्यंतोयरत्नाद्यकंचयत् ॥ स्थिरभूषणवास्तवाद्यंकर्तव्यंचघटोदये ॥ १ ॥

( ¹²मीने )—जलबंधनजलमोक्षणयात्रारत्नादिभूषणंकर्म ॥ रथतुरगोष्ट्रपशूनांकार्यंमीनोदयेश्रेष्ठम् ॥ १ ॥ १२ ॥

---

४३५ अथ राशीनांस्वरूपाणि—( बृहज्जातके )

मत्स्यौघटीनृमिथुनंसगदंसवीणंचापीनरोश्वजघनोमकरोमृगास्यः॥तौलीससस्यदहनाप्लुवगाचकन्याशेषास्स्वनामसदृशाःखचराश्चसर्वे १॥१२

---

अथ मेषादिद्रेक्काणस्वरूपम्—( बृहज्जातके )

४३६ तत्रादौ मेषप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि—

(आद्यः)—कट्यांसितवस्त्रवेष्टितः कृष्णः शक्तइवाभिरक्षणे॥रौद्रःपरशुंसमुद्यतंधत्तेरक्तविलोचनःपुमान् ॥ १ ॥ पुरुषः । कृष्णवर्णः ॥ १ ॥

( द्वितीयः)—रक्तांबराभूषणसक्तचित्ताकुंभोदरावाजिमुखीतृषार्ता॥चरैकपादेनचमेषमध्यद्रेक्काणरूपंयवनोपदिष्टम् ॥ १ ॥ स्त्री ।रक्तवर्णा॥ २॥

( तृतीयः )—क्रूरःकलाज्ञःकपिलःक्रियार्थीभग्नव्रतोह्युद्यतदंडहस्तः॥रक्तानिवस्त्राणिबिभर्तिचंडोमेषेतृतीयः कथितस्त्रिभागः ॥ १ ॥ पुमान् । कपिलवर्णः ॥ ३ ॥ १ ॥

४३७ अथ वृषभप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि—

( आद्यः )—कुत्सितलूनकचाघटदेहादग्धपटातृषिताशनचित्ता ॥ आभरणान्यभिवांछतिगौरीरूपमिदंप्रथमंवृषभस्य॥ १ ॥स्त्री।गौरववर्णा १

( द्वितीयः )—क्षेत्रधान्यगृहधेनुकलाज्ञोलांगलेसशकटेकुशलश्च ॥ स्कंधमुद्वहतिगोपतितुल्यंक्षुत्परोऽजवदनोमलवासाः ॥ १ ॥ पुरुषः । श्वेतवर्णः ॥ २ ॥

( तृतीयः )—द्विपसमकायःपांडरदंष्ट्रश्शरभसमांघ्रिःपिंगलमूर्तिः ॥ अविमृगलोमाव्याकुलचित्तोवृषभवरस्यप्रांतगतोयः ॥ १ ॥ पुरुषः । कनकवर्णः ॥ ३ ॥ २ ॥

४३८ अथ मिथुनप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि—

( आद्यः )—सूच्याश्रयंसमभिवांछतिकर्मनारीरूपान्विताभरणकार्यकृतादराच ॥ हीनात्मजाकृतुमतीमृदुदीर्घबाहुराद्यंतृतीयभवनस्यवदंतितज्ज्ञाः ॥ १ ॥ स्त्री । हरिद्वर्णा ॥ १ ॥

(द्वितीयः )—उद्यानसंस्थःकवचीधनुष्मान्छराम्रधारीगरुडोन्नसश्च ॥ क्रीडात्मजालंकरणात्तचित्तंकरोतिमध्येमिथुनस्यचायम् ॥ १ ॥ पुरुषः । हरिद्वर्णः ॥ २ ॥

( तृतीयः )—भूषितोवरुणवद्बहुरत्नैर्बद्धतूणकवचस्सधनुष्कः ॥ नृत्तवादनकलासुचविद्वान्काव्यकृन्मिथुनराश्यवसाने ॥ १ ॥ पुरुषः । हरिद्वर्णः ॥ ३ ॥

४३९ अथ कर्कटकप्रथमद्वितीयतृतीयदेक्काणानांस्वरूपाणि—

( आद्यः )—पत्रमूलफलभुग्द्विपकायःकाननेमलयजेशरभांघ्रिः ॥ क्रोडतुल्यवदनोहयकर्णःकर्कटेप्रथमरूपमुशंति ॥ १ ॥ पुरुषः।पाटलवर्णः १

( द्वितीयः )—पद्मार्चितामूर्धनिभाभियुक्तास्त्रीकर्कशारण्यतलेविरौति ॥ शाखांपलाशस्यसमाश्रिताचमध्यस्थिताकर्कटकाख्यराशेः ॥ १ ॥ स्त्री । पाटलवर्णा ॥ २ ॥

( तृतीयः )—भार्याभरणार्थमर्णवंनौस्थोगच्छतिसर्पवेष्टितः ॥ हैमैश्चयुतोविभूषणैश्चिपिटास्योंत्यगतश्चकर्कटे ॥ १ ॥ पुरुषः । पाटलवर्णः ॥ ३ ॥ ४ ॥

४४० अथ सिंहप्रथमद्वितोयतृतीयद्रेक्काणानांस्वरूपाणि—

( आद्यः )—शाल्मलेरुपरिगृध्रजंबुकौश्वानरश्चमलिनांबरावृतः ॥ रौतिमातृपितृविप्रयोगतस्सिंहरूपमिदमाद्यमुच्यते ॥ १ ॥ पुरुषः । धूम्रपांडुवर्णः ॥ १ ॥

( द्वितीयः )—हयाकृतिःपांडरमाल्यशेखरोबिभर्तिकृष्णाजिनकंबलंनरः ॥ दुरासदस्सिंहइवात्तकार्मुकोनताग्रनासोमृगराजमध्यः ॥ १ ॥ पुरुषः । धूम्रपांडुवर्णः ॥ २ ॥

( तृतीयः )-अजाननोवानरतुल्यचेष्टोबिभर्तिदंडंफलमामिषंच ॥ कूर्चीमनुष्यःकुटिलैश्चकेशैर्मृगेश्वरस्यांत्यगतत्रिभागः ॥ १ ॥ पुरुषः । धूम्रपांडुवर्णः ॥ ३ ॥ ५ ॥

४४१ अथ कन्याप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि-

( आद्यः )-पुष्पप्रकीर्णेनघटेनकन्यामालासुदीर्घांबरसंवृतांगी ॥ वस्त्रार्थसंयोगमभीप्समानागुरोः कुलंगच्छतिकन्यकाद्या ॥ १ ॥ स्त्री । चित्रवर्णा ॥ १ ॥

( द्वितीयः )-पुरुषःप्रगृहीतलेखनीश्यामोवस्त्रशिराव्ययायकृत् ॥ विपुलंचबिभर्तिकार्मुकंरोमव्याततनुश्चमध्यमः॥ १ ॥पुरुषः।श्यामवर्णः२

( तृतीयः )-गौरीसुधौताग्रदुकूलयुक्तासमुच्छ्रिताकुंभगताग्रहस्ता॥ देवालयंस्त्रीप्रयताप्रवृत्तावदंतिकन्यांत्यगतत्रिभागम्॥ १ ॥कनकवर्णः३।६

४४२ अथ तुलाप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि-

( आद्यः )-वीथ्यंतरापणगतोपुरुषस्तुलावानुन्मानमानकुशलःप्रतिमानहस्तः ॥ भांडंविचिंतयतितस्यचमूल्यमेतद्रूपंवदंतियवनाःप्रथमंतुलायाः ॥ १ ॥ पुरुषः। कृष्णवर्णः ॥ १ ॥

( द्वितीयः )-कलशंविनिगृह्यविनिष्पतितस्समभीप्सतिगृध्रमूखः पुरुषः ॥ क्षुधितस्तुषितश्चकलत्रसुतान्मनसैतितुलाधरमध्यगतः ॥ १ ॥ पुरुषः । कृष्णवर्णः ॥ २ ॥

( तृतीयः )-विभीषयंस्तिष्ठतिरत्नचित्रितेवनेमृगीकांचनतूणचर्मभृत् ॥ धनुर्धरोवानररूपभृन्नरस्तुलावसानेयवनैरुदाहृतः ॥ १ ॥ पुरुषः । कृष्णवर्णः ॥ ३ ॥ ७ ॥

४४३ अथ वृश्चिकप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि-

वस्त्रैरुपेताभरणैश्चनारीमहासमुद्रात्समुपैतिकूलम् ॥ स्थानच्युतासर्पनिबद्धपादामनोरमावृश्चिकराशिपूर्वा ॥ १ ॥ स्त्री । स्वर्णवर्णा ॥ १ ॥

(द्वितीयः)-स्थानसुखान्यभिवांच्छतिनारीभर्तृकृतेभुजगावृतदेहा ॥

कच्छपकुंभसमानशरीरावृश्चिकमध्यमरूपमुशंति ॥ १ ॥ स्त्री । स्वर्णवर्णा ॥ २ ॥

( तृतीयः )—पृथुलचिपिटकूर्मतुल्यवक्त्रःश्वमृगसृगालवराहभीतिकारी ॥ अवतिचमलयाकरप्रदेशंमृगपतिरंत्यगतश्ववृश्चिकस्य ॥ १ ॥ पुरुषः । स्वर्णवर्णः ॥ ३ ॥

४४४ अथ धनुःप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि—

( आद्यः )—मनुष्यवक्त्रोश्वसमानकायोधनुर्गृहीत्वायतमाश्रमस्थः ॥ क्रतूपयुक्तानितपस्विनश्चररक्षपूर्वोधनुषस्त्रिभागः ॥ १ ॥ पुरुषः । पिंगलवर्णः ॥ १ ॥

( द्वितीयः )—मनोरमाचंपकतुल्यवर्णाभद्रासनेतिष्ठतिमध्यरूपा ॥ समुद्ररत्नानिविघट्टयंतीमध्यस्त्रिभागोधनुषःप्रदिष्टः ॥ १ ॥ स्त्री । कनकवर्णः ॥ २ ॥

( तृतीयः )—कूर्चीनरोहाटकचंपकाभोवरासनेदंडधरोनिषण्णः ॥ कौशेयकान्युद्वहतेऽजिनंचतृतीयरूपंधनुषश्चराशेः ॥ १ ॥ पुरुषः । कनकवर्णः ॥ ३ ॥ ९ ॥

४४५ अथ मकरप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि—

( आद्यः )—रोमचितोमकरोपमदंष्ट्रस्सूकरकायसमानशरीरः ॥ योत्रकजालकबंधनधारीरौद्रमुखोमकरप्रथमश्च ॥ १ ॥ पुरुषः । कर्बुरवर्णः ॥ १ ॥

( द्वितीयः )—कलास्वभिज्ञाब्जदलायताक्षीश्यामाचचित्राणिचमार्गमाणा ॥ विभूषणालंकृतलोहकर्णायोषाप्रदिष्टामकरस्यमध्ये ॥ १ ॥ स्त्री । श्यामवर्णा ॥ २ ॥

( तृतीयः )—किन्नरोपमतनुस्सकंबलस्तूणचापकवचैस्समन्वितः ॥ कुंभमुद्वहतिरत्नचित्रितंस्कंधगंमकरराशिपश्चिमः ॥ १ ॥ पुरुषः । कर्बुरवर्णः ॥ ३ ॥ १० ॥

४४६ अथ कुंभप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि-

( आद्यः )—स्नेहमयजलभोजनामिषव्याकुलीकृतमनास्सुकंबलः ॥ कोशकारवसनोऽजिनावृतोगृध्रतुल्यवदनोघटादिकः ॥ १ ॥ पुरुषः । बभ्रुवर्णः ॥ १ ॥

( द्वितीयः )—दग्धेशकटेसशाद्वलेलोहाद्याहर तेंगनावने ॥ मलिनेनपटेनसंवृताभांडैर्मूर्धगतैस्समध्यमः ॥ १ ॥ स्त्री । बभ्रुवर्णा ॥ २ ॥

( तृतीयः )—श्यामस्सरोजश्रवणःकिरीटीत्वकपत्रनिर्यासफलंबिभर्ति ॥ भांडानिलोहव्यतिमिश्रितानिसंचारयत्यंत्यगतोघटस्य ॥ १ ॥ पुरुषः । श्यामवर्णः ॥ ३ ॥ ११ ॥

४४७ अथ मीनप्रथमद्वितीयतृतीयद्रेक्काणानांस्वरूपाणि-

( आद्यः )—स्रग्भांडमुक्तामणिशंखमिश्रैर्व्याक्षिप्तहस्तस्सुविभूषणश्च ॥ भार्याविभूषार्थमपांनिधानेनावंप्लुवत्यादिगतोझषस्य ॥ १ ॥ पुरुषः । श्वेतवर्णः ॥ १ ॥

( द्वितीयः )—अत्युच्छ्रितध्वजपताकमुपैतिपोतंकूलंप्रयातिजलधेः परिवारयुक्ता ॥ वर्णेनचंपकनिभाप्रमदात्रिभागोमीनस्यचैवकथितोमुनिभिर्द्वितीयः ॥ १ ॥ स्त्री । कनकवर्णा ॥ २ ॥

( तृतीयः )—श्वभ्रांतिकेसर्पविवेष्टितांगोवस्त्रैर्विहीनः पुरुषस्त्वटव्याम् ॥ चोरानलव्याकुलितांतरात्माविक्रोशतेचांत्यगतोझषस्य ॥ १ ॥ पुरुषः । श्वेतवर्णः ॥ ३ ॥ १२ ॥

---

४४८ अथ अहोरात्रस्य स्वरूपम्—( नृसिंहप्रासादे )

अहोरात्राभिधश्चात्रकृष्णग्रीवोद्विमूर्धकः ॥ आकंठपादांतकचोद्विभुजोदीर्घगोधिकः ॥ १ ॥ सामिचंद्रजटामौलिःपिंगलस्तुसुलोचनः ॥ भ्रूमंडलालकोपेतःकृष्णशुभ्रांशुकान्वितः ॥ २ ॥ अर्कंदक्षेदधानोयंवामेचैवविधुंतथा ॥ इष्टापूर्तस्यसिध्यर्थंपूजनीयोमनीषिभिः ॥ ३ ॥ कनकवर्णः ॥ १ ॥

४४९ अथ दिवास्वरूपम्–( मदनरत्ने )

वराभयकरंवेदेद्विभुजंपद्मसंस्थितम् ॥ श्वेतवस्त्रधरंदेवंजटावल्कलधारिणम् ॥ १ ॥ पारावतारोहिणंतंसर्वाभरणभूषितम् ॥ पद्मवक्त्रंशुक्लवर्णंदिवारूपंविभावयेत् ॥ २ ॥ ( दिवाधिदेवतासूर्यःप्रसिद्धः नवग्रहस्थसूर्यवत् नि० ५ ) ॥ १ ॥

अथ दिवाकर्तव्यकृत्यानि–( माधवीये )

नामपुंसवनंक्षौरंबीजोप्तिःस्थापनादिकम् ॥ राजाभिषेकमन्त्राद्यंविद्यारंभोपनायनम् ॥ १ ॥ गृहप्रवेशसीमंतश्राद्धाद्याश्चदिवोदिताः ॥

४५० अथ रात्रिस्वरूपम्–( मदनरत्ने )

चतुर्भुजांत्रिनयनांसर्वाभरणभूषिताम् ॥ पाशांकुशधनुर्बाणधरांचंद्रनिभाननाम् ॥ १ ॥ भेरुंडवाहनींध्यायेद्रात्रिमञ्जकलायुताम् ॥ ( तद्देवताचंद्रःप्रसिद्धः नवग्रहस्थचंद्रवत् नि० ५ ) ॥ १ ॥

अथ रात्रिकर्तव्यकृत्यानि–( स्मृतिमुक्ताफलेधर्मशास्त्रे )

मित्रस्यसंदर्शनमग्निकार्यंवधूप्रवेशंचविवाहकर्म ॥ गर्भान्तराधानबलिग्रहार्चाःकुंभप्रतिष्ठाह्यभिचारकर्म ॥ १ ॥ पिशाचबाधाविनिवर्तनंचजाततदाजातककर्मकुर्यात् ॥

४५१ अथ संध्यानां स्वरूपाण्याहभरद्वाजः–( माधवीये )

पैशाचीपश्चिमासंध्याप्राक्संध्यारौद्रिकोच्यते ॥ राक्षसीचार्धरात्रेस्याद्ब्राह्मीमध्याह्नउच्यते ॥ १ ॥ ४ ॥

अथ संध्यासुवर्ज्यकार्याण्याहमनुः–( भट्टभास्करीये )

चत्वारीमानिकर्माणिसंध्यायांपरिवर्जयेत् ॥ आहारंमैथुनंनिद्रांस्वाध्यायंचैवनित्यशः ॥ १ ॥ आहाराज्जायतेव्याधिर्गर्भस्रावश्चमैथुनात् ॥ निद्रातोजायतेऽलक्ष्मीःस्वाध्यायादायुषःक्षयः ॥ २ ॥

४५२ अथ प्रातस्संध्यायाः स्वरूपम्–( शैवागमे शेखरे )

प्रातस्संध्यामहंनौमिरविबिंबकरांशुभाम् ॥ श्वेतारुणाभांयुवतिंनानाभरणभूषिताम् ॥ १ ॥ पाटलवर्णा ॥ १ ॥

४५३ अथ सायंसंध्यायाः स्वरूपम्-( शैवागमे शेखरे )

सायंसंध्यामहंनौमिचंद्रबिंबकरांशुभाम् ॥ कुंकुमारुणवर्णाभामुन्नसांचित्रभूषणाम् ॥ १ ॥ सिंदूरवर्णा ॥ १ ॥

४५४ अथ महाकालस्वरूपम्-( शैवागमे )

विकीर्णवदनंकालंभयानकमरिंदमम् ॥ पाशहस्तालिरोमाणंनमामिशिरसाविभुम् ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

४५५ अथ उग्रदेवतायाः स्वरूपम्-( शैवागमे )

करालास्यंविरूपाक्षमुग्रंव्याघ्रवरास्थितम् ॥ शूलंचडमृगंपाणौविभ्राणंहृदिभावये ॥ १ ॥ रक्तवर्णः ॥ १ ॥

४५६ अथ मृत्युदेवतायाः स्वरूपम्-( शैवागमे )

पाशखड्गांकुशगदाभासमानकरांबुजम् ॥ गीर्वाणगणवंद्यांघ्रिंमृत्युंमहिषवाहनम् ॥ १ ॥ नीलवर्णः ॥ १ ॥

४५७ अथ कुह्वाः स्वरूपम्-( रुद्रयामले )

ध्यायाम्यहंकुहूंदेवींभीममूर्तिंयमोद्भवाम् ॥ ज्वलत्पावककेशांतांनीलमेघसमप्रभाम् ॥ १ ॥ भूषणैरायसैरेवभूषितांभीमरूपिणीम् ॥ दंष्ट्राकरालवदनांमहिषोपरिसंस्थिताम् ॥ २ ॥ त्रिणेत्रामष्टभिर्हस्तैःखड्गशूलवरांकुशान् ॥ खेटकाऽन्यभयाहींद्रान्दक्षवामक्रमेणहि ॥ ३ ॥ धारयंतींमहाकायामूर्ध्वभ्रूकुटिलेक्षणाम् ॥ कुहूंकुहूविषोद्भूतरूपिणींप्रणमाम्यहम् ॥ ४ ॥ नीलवर्णा ॥ १ ॥

४५८ अथ कृत्यायाः स्वरूपम्-( पांचरात्रे )

त्रिशूलभीषणांहस्तैस्सप्तभिस्त्रिभिरंघ्रिभिः ॥ जिह्वयारक्तयादीप्तंलेलिहानानिजंमुखम् ॥ १ ॥ उद्गिरंतीवनेत्राभ्यामाज्यसिक्तंहविर्भुजम् ॥ नरास्थिमालांबिभ्राणामेखलीकृतपन्नगाम् ॥ २ ॥ कपालकुंडलोपेतांप्रहसंतींभयानकाम् ॥ दंडंघंटांतथाशूर्पंमार्जनींपाशकुंडिके ॥ ३ ॥ बिभ्रतींलंबमानाभ्यांस्तनाभ्यांमुक्तमूर्धजाम् ॥ अधिरूढांनरस्कंधमंध-

कारसमाकृतिम् ॥ ४ ॥ स्फुलिंगमंडलस्थांचविमुक्ताटोपभीषणाम् ॥ एवंरूपधरांकृत्यांनमामिरिपुनाशिनीम् ॥ ५ ॥ कृष्णवर्णा ॥ १ ॥

### ४५९ अथ महाकृत्यायाः स्वरूपम्–(शावरतंत्रे)

कृष्णवर्णांमहाकायांकृष्णकुंचितमूर्धजाम् ॥ दक्षिणाधःकरेखड्गंद-क्षोर्ध्वेपरशुंतथा ॥ १ ॥ वामोर्ध्वेप्यंकुशंचैववामाधश्वगदांसदा ॥ बिभ्राणांचमहाकृत्यामर्चयेच्छत्रुनाशिनीम् ॥ २ ॥ कृष्णवर्णा ॥ १ ॥

### ४६० अथ राकायाः स्वरूपम्–( रुद्रयामले )

राकास्फटिकसंकाशाशशारूढाचतुर्भुजा ॥ वराभयामृतकलामुद्रा-अमृतकुंडिकाम् ॥ १ ॥ दधानासर्वदापातुमुक्ताहारविभूषिता ॥ श्वेतवर्णा ॥ १ ॥

### ४६१ अथ सिनीवाल्याः स्वरूपम्–( रुद्रयामले )

कृष्णवर्णांचतुर्हस्तामक्षसूत्रंकमंडलुम् ॥ वरदाभयपाणिंचसिनीवा-लीमहंभजे ॥ १ ॥ कृष्णवर्णा ॥ १ ॥

### ४६२ अथ कालराहोः स्वरूपम्–( शैवागमे )

कालराहुंसर्पपदंतरक्षवास्यंमहातनुम् ॥ लोकाभीष्टप्रदंध्यायेसर्वा-रिष्टनिवृत्तये ॥ १ ॥ कृष्णवर्णः ॥ १ ॥

### ४६३ अथ अपस्मारस्य स्वरूपम्–( सिद्धांतशेखरे )

श्यामाभोरक्तकेशश्वभूतरूपाकृतिस्तथा ॥ वामहस्तेतुफणिनंदक्षिणे फणिमुद्रिकम् ॥ १ ॥ वेदांगुलेनषट्त्रिंशत्र्यंगुलंतस्यचोन्नतिः ॥ श्यामवर्णः ॥ १ ॥

---

### अथ पञ्चदशानां दिवारात्रमुहूर्तानांस्वरूपाणि–( नृसिंहप्रासादे )

### ४६४ तत्रादौ दिवारौद्रमुहूर्तस्य स्वरूपम्–

तत्रादिमस्तुरौद्राख्यः श्यामः श्वेतारुणच्छविः ॥ श्वेतवस्त्रोमहातुंगो-दक्षिणेसर्पमादधत् ॥ १ ॥ वामेपात्रंसुधापूर्णंक्षुद्रकर्मप्रसिद्धये ॥ श्यामवर्णः ॥ १ ॥

### ४६५ अथ दिवाश्वेतमुहूर्तस्य स्वरूपम्-

श्वेताभिधेद्विदितीयस्तुश्वेतवर्णोमहोदरः ॥ श्वेतशोणाभवस्त्रोयंश्वेतमुक्ताविभूषणः ॥ १ ॥ दक्षिणेपंकजंशुभ्रंवामेचैवकमंडलुम् ॥ दधानोभूतयेपूज्योयोगवृद्ध्यैसुखायच ॥ २ ॥ शुभ्रवर्णः ॥ २ ॥

### ४६६ अथ दिवाजयमुहूर्तस्य स्वरूपम्-

तृतीयोत्रजयाख्यस्तुकृष्णशुभ्रोमहातनुः ॥ दक्षिणेपंकजंनीलंवामेसर्पंमहाफणम् ॥ १ ॥ बिभ्रद्विजयभोगायपूजनीयोजनाधिप ॥ नीलमेघवर्णः ॥ ३ ॥

### ४६७ अथ दिवाआर्यभट्टमुहूर्तस्य स्वरूपम्-

तुरीयश्चार्यभट्टाख्योनीलशुभ्रोमहाबलः ॥ दक्षिणेपुस्तकंहस्तेवामेचैवत्रिशूलकम् ॥ १ ॥ दधानःश्रेयसेभूत्यैविजयायसुखायच ॥ नीलमेघवर्णः ॥ ४ ॥

### ४६८ अथ दिवासावित्रमुहूर्तस्य स्वरूपम्-

अधुनैवंचसावित्रःपंचमःकथ्यतेमया ॥ श्वेतवस्त्रोमेचकाभोमहासत्त्वसमन्वितः ॥ १ ॥ पुस्तकंदक्षिणेहस्तेवामेकुंभंतुनिर्व्रणम् ॥ दधद्रोगविनाशायपूजनीयोह्यहर्निशम् ॥ २ ॥ कृष्णवर्णः ॥ ५ ॥

### ४६९ अथ दिवाविराजमुहूर्तस्य स्वरूपम्-

विराजश्चात्रवैषष्ठःश्यामवर्णोजटाधरः ॥ दक्षिणेतुकरेदंडंवामेचैवाभयंकरे॥ १ ॥ बिभ्रद्बलायसौख्यायपूजनीयोतिभक्तितः॥ श्यामवर्णः ।।६

### ४७० अथ दिवागंधर्वमुहूर्तस्य स्वरूपम्-

सप्तमश्चात्रगंधर्वस्ताम्रवर्णःकृशोजटी ॥ दक्षिणेवल्लकींपाणौवामेशक्तिंचकारयेत् ॥ १ ॥ सौख्यवृद्ध्यैयशोवृद्ध्यैपूजनीयोतिभक्तितः ॥ रक्तवर्णः ॥ १ ॥ ७ ॥

### ४७१ अथ दिवाअभिजिन्मुहूर्तस्य स्वरूपम्-

अधुनाचाभिजिन्नामकथ्यतेह्यष्टमःशुभः ॥ पीतवर्णोतिह्रस्वस्तुताम्र-

वस्त्रोमहोदरः ॥ १ ॥ तुलाहस्तद्वयोपेतःपूजनीयस्सुखाप्तये ॥ सएव-कुतुपो-नामविज्ञातव्योमनीषिभिः ॥ २॥ पितॄणांसुप्रियश्चैवपिंडहस्तो-थवाप्ययम् ॥ पीतवर्णः ॥ ८ ॥

४७२ अथ दिवारौहिणेयमुहूर्तस्य स्वरूपम्-

नवमोरौहिणेयाख्यो ( णाख्यस्तु ) मुहूर्तःकथ्यतेधुना ॥ शुभ्रवर्णो-विशालाक्षोनीलवद्धेमकुंडलः ॥ १ ॥ दक्षिणेपंकजंपाणौवामेमोदकमे-वच ॥ दधानश्शुभसंपत्त्यैविजयारोग्यसिद्धये ॥ २ ॥ शुभ्रवर्णः ॥९॥

४७३ अथ दिवागदाधरमुहूर्तस्य स्वरूपम्-

अधुनाकथ्यतेवत्सदशमस्तुगदाधरः ॥ गौरवर्णोरुणश्श्वेतवसनश्श्वेत-कुंडलः ॥ १ ॥ दक्षिणेतुकरेशंखंवामेपंकजमादधत् ॥ गौरवर्णः ॥ १० ॥

४७४ अथ दिवाविजयमुहूर्तस्य स्वरूपम्-

एकादशोधुनाज्ञेयोमुहूर्त्तोविजयाभिधः ॥ हेमवर्णोबृहत्फालःकृष्ण-श्वेतारुणांशुकः ॥ १ ॥ अक्षसूत्रंकरेदक्षेवामेचैवकमंडलुम् ॥ दधत्प्र-ज्ञासुखाप्त्यर्थंपूजनीयोविपश्चिताम् ॥ २ ॥ हेमवर्णः ॥ ११ ॥

४७५ अथ दिवानैर्ऋत्यमुहूर्तस्य स्वरूपम्-

नैर्ऋत्याख्योधुनाज्ञेयोद्वादशस्तुमुहूर्तकः ॥ नीलवर्णोजटामौलिःपीत-वस्त्रोमहाबलः ॥ १ ॥ दक्षिणेतुकरेचक्रंवामेचाभयमादधत् ॥ नीलवर्णः १२

४७६ अथ दिवाशतमखमुहूर्तस्य स्वरूपम्-

त्रयोदशोभवेदत्ररक्तःशतमखाभिधः ॥ रक्तवस्त्रोमहोरस्कोरत्नहेमसुकुं-डलः ॥ १ ॥ शोणपंकजदक्षस्तुवामेकुंडीसमन्वितः ॥ रक्तवर्णः ॥ १३ ॥

४७७ अथ दिवातरुणमुहूर्तस्य स्वरूपम्-

मुहूर्तःकथ्यतेचात्रतरुणाख्यश्चतुर्दशः ॥ मुक्ताफलनिभश्चैवमुक्ताहा-रविभूषितः ॥ १ ॥ धनुर्बाणधरश्चैवजानीयाच्चसुखाप्तये ॥ श्वेतवर्णः ॥ १४ ॥

४७८ अथ दिवासुभगमुहूर्तस्य स्वरूपम्-

अथपंचदशोज्ञेयःसुभगस्तुहरिप्रियः ॥ नीलश्वेतारुणप्रांतवसनोनी-

लकुंडलः॥ १ ॥ दक्षिणेतुध्वजोज्ञेयोवामेपात्रंसुधायुतम्॥ नीलवर्णः॥ १५

---

## ४७९ अथ रात्रिमुहूर्तानांस्वरूपाणि-

( नृसिंहप्रासादेवाक्यैः-शैवागमे-मयूखे-पाञ्चरात्रे-कारणागमेचश्लो० )

### ४८० तत्रादौरात्रौअतिरौद्रमुहूर्तस्य स्वरूपम्-

अतिरौद्रःप्रथमः-( रुद्रवत् नि० ३ ) ॥-॥ ( शैवागमे )-चंद्राव-तंसोजटिलस्त्रिणेत्रोभस्मपांडुरः ॥ हृदयस्थःसदाभूयाद्भर्गोभयविनाशनः ॥ १ ॥ श्यामवर्णः ॥ ( एकादशरुद्रस्थभर्गवत् नि० ३ )॥ १ ॥

### ४८१ अथ रात्रौमहागंधर्वराजमुहूर्तस्य स्वरूपम्-

महागंधर्वराजोद्वितीयः ( गंधर्ववत् नि० ४ ) ॥-॥ ( शैवागमे )-कल्याणरूपोगंधर्वोगांधर्वागमतत्परः ॥ वीणावादनतत्त्वज्ञोपक्षवानरुणः स्मृतः ॥ १ ॥ अरुणवर्णः ॥ २ ॥

### ४८२ अथ रात्रौद्रविणपरिवृढमुहूर्तस्य स्वरूपम्-

द्रविणपरिवृढःतृतीयः ( कुबेरवत् नि० ४ ) ॥-॥ ( मयूखे ) अश्वारूढः कुंतपाणिःकुबेरश्चित्रिणीप्रियः ॥ निधीश्वरःस्वर्णवर्णोधनदो-रूपवान्प्रभुः ॥ १ ॥ स्वर्णवर्णः ॥ ( दिक्पालकुबेरवत् नि० ४) ॥ ३॥

### ४८३ अथ रात्रौश्रावणमुहूर्तस्य स्वरूपम्-

श्रावणश्चतुर्थः ( विष्णुवत् नि०२ ) ॥-॥ (मयूखे)-विष्णुःकौमो-दकीपद्मशंखचक्रधरःक्रमात् ॥ प्रदक्षिणंदक्षिणाधःकरादारभ्यनित्यशः ॥ १ ॥ धौतवर्णः ॥ ( चतुर्विंशतिमूर्तिस्थविष्णुवत् नि० २ ) ॥४॥

### ४८४ अथ रात्रौवायुमुहूर्तस्य स्वरूपम्-

वायुःपंचमः ( वायुवत् नि० ४ ) ॥-॥ ( मयूखे )-प्राणबंधुर्हि जगतोवायुःकृष्णमृगासनः ॥ हेमदंडधरःश्यामोवर्णतोमोहिनीप्रियः- ॥ १ ॥ श्यामवर्णः ॥ ( दिक्पालवायुवत् ॥ नि० ४ ) ॥ ५ ॥

४८५ अथ रात्रौअग्निमुहूर्तस्य स्वरूपम्-

अग्निःषष्ठः ( अग्निवत् नि० ४ ) ॥-॥ ( मयूखे )-पिंगभ्रूश्मश्रुकेशश्चपिंगाक्षित्रितयोरुणः ॥ छागस्थःसाक्षसूत्रश्चसप्तार्चिःशक्तिधारकः ॥ १ ॥ रक्तवर्णः ॥ ( सूर्याधिदेवतावत् नि० ५ ) ॥ ६ ॥

४८६ अथ रात्रौराक्षसमुहूर्तस्य स्वरूपम्-

राक्षसःसप्तमः ( निर्ऋतिवत् नि० ४ ) ॥-॥ (मयूखे )-खड्गचर्मधरोनीलोनिर्ऋतिर्नरवाहनः ॥ ऊर्ध्वकेशोविरूपाक्षःकरालःकालिकाप्रियः ॥ १॥ नीलवर्णः ॥ ( लोकपालनिर्ऋतिवत् नि० ४ ) ॥ ७ ॥

४८७ अथ रात्रौधातृमुहूर्तस्य स्वरूपम्-

धाताष्टमः ( सूर्यवत् नि० ५ ) ॥-॥ ( मयूखे )-पद्मासनःपद्मकरः पद्मगर्भसमद्युतिः ॥ सप्ताश्वरथसंयुक्तोद्विभुजः स्यात्सदारविः॥ १ ॥ पाटलवर्णः ॥ ( नवग्रहस्थसूर्यवत् नि० ५ ) ॥ ८ ॥

४८८ अथ रात्रौसौम्यमुहूर्तस्य स्वरूपम्-

सौम्योनवमः ( बुधवत् नि० ५ ) ॥-॥ ( मयूखे )-पीतमाल्यांबरधरःकर्णिकारसमद्युतिः ॥ खड्गचर्मगदापाणिःसिंहस्थोवरदोबुधः ॥ १ ॥ ( नवग्रहस्थबुधवत् नि० ५ ) ॥ ९ ॥

४८९ अथ रात्रौब्रह्ममुहूर्तस्य स्वरूपम्-

ब्रह्ममुहूर्तोदशमः ( ब्रह्मवत् नि० ३ ) ॥-॥( शैवागमे )-चतुर्मुखश्चतुर्बाहुःकमंडल्वक्षसूत्रधृक् ॥ वराभयकरश्शुद्धोब्रह्माज्ञेयःसनातनः ॥ १ पाटलवर्णः ॥ ( रोहिणीनक्षत्रदेवतावत् नि० ५ ) ॥ १० ॥

४९० अथ रात्रौवाक्पतिमुहूर्तस्य स्वरूपम्-

वाक्पतिरेकादशः ( बृहस्पतिवत् नि०५)॥-॥( मयूखे )-देवदैत्यगुरूशुद्धौपीतश्वेतौचतुर्भुजौ ॥ दंडिनौवरदौकार्यौसाक्षसूत्रकमंडलू ॥ १॥ स्वर्णवर्णः ॥( नवग्रहस्थगुरुवत् नि० ५ ) ॥ ११ ॥

### ४९१ अथ रात्रौपैलमुहूर्तस्य स्वरूपम्-

पैलोद्वादशः ( पूषवत् नि० ५ ) ॥-॥ ( शैवागमे )-पूषातोषायमेभूयात्सर्वपापापनुत्तये ॥ सहस्रकरसंवीतस्समस्ताशांतरांतरः ॥ १ ॥ पाटलवर्णः ॥ ( द्वादशादित्यस्थपूषवत् नि० ५ ) ॥ १२ ॥

### ४९२ अथ रात्रौवैकुंठमुहूर्तस्य स्वरूपम्-

वैकुंठमुहूर्तस्त्रयोदशः ( नारायणवत् नि० २ ) ॥-॥ ( पांचरात्रे ) नारायणोघनश्यामःपद्मशंखगदारिभृत् ॥ पीतवासामणिमयैर्भूषणैरुत्तमैर्वृतः ॥ १ ॥ मेघश्यामवर्णः ॥ (चतुर्विंशतिमूर्तिस्थनारायणवत् नि० २) १३

### ४९३ अथ रात्रौसमीरणमुहूर्तस्य स्वरूपम्-

चतुर्दशःसमीरणः ( वायुवत् नि० ४ ) ॥-॥ ( मयूखे )-प्राणबंधुर्हिजगतोवायुःकृष्णमृगासनः ॥ हेमदंडधरःश्यामोवर्णतोमोहिनीप्रियः ॥ १ ॥ श्यामवर्णः ॥ ( दिक्पालवायुवत् नि० ४ ) ॥ १४ ॥

### ४९४ अथ रात्रौनिर्ऋतिमुहूर्तस्य स्वरूपम्-

निर्ऋतिःपंचदशः ( निर्ऋतिवत् नि० ४ ) ॥-॥ ( मयूखे )-खड्गचर्मधरोनीलोनिर्ऋतिर्नरवाहनः ॥ ऊर्ध्वकेशोविरूपाक्षःकरालःकालिकाप्रियः ॥ १ ॥ नीलवर्णः ॥ ( लोकपालनिर्ऋतिवत् नि० ४ ) ॥ १५ ॥

---

### ४९५ अथ घटिकास्वरूपाणि-( कारणागमे )

( तत्रसत्त्वरजस्तमोरूपेणत्रिविधाः )-साराद्याःसत्त्वयोगिन्योमायाऽऽद्यारजसायुताः ॥ उग्राद्यास्तमसायुक्ताः स्वानुरूपफलप्रदाः ॥ १ ॥ स्वस्ववारप्रवृत्यातुक्रमादनुचरंतिहि ॥ तासांनामानिरूपाणिश्रृणुपार्वतितत्त्वतः ॥ २ ॥ ६० ॥

### तत्रादौ सात्त्विकघटिकानांनामानि-

साराधाराकलाविश्वाविद्याशक्तिःप्रभाध्रुवा ॥ शांतिःक्षमाजयाप्रज्ञानुज्ञासौम्याऽभयावरा ॥ १ ॥ श्रद्धामेधाधारणाचप्रतिभासात्त्विकाइमाः। शुद्धस्फटिकवर्णाश्चज्ञानमुद्राऽभयान्विताः ॥ २ ॥ स्वस्वनामानुरूपाश्चसर्वाभरणभूषिताः ॥ श्वेतवर्णाः ॥ २० ॥

अथ राजसघटिकानांनामानि—

मायाबलाप्रमोदाचविजयामंगलाशुभा॥ पिंगलाभद्रकाधन्यासमृद्धिर्हर्षणाधृतिः ॥ १ ॥ रक्तिरासक्तिरुत्साहोविरुक्त्यनुमतीतथा ॥ रतिः पुष्टिश्चतुष्टिश्चयोगिन्योरजसायुताः ॥ २ ॥ एताश्चरक्तवर्णास्स्युः वराभयकरामताः ॥ रक्तवर्णाः ॥ २० ॥

अथ तामसघटिकानांनामानि—

तामसाःकालयोगिन्योकथ्यंतेश्रृणुपार्वति ॥ उग्राज्येष्ठाततोरौद्रीशेषरौद्रीततःपरम् ॥ १ ॥ कालीविकर्णीचतथाकलपूर्वाविकर्णिका ॥ बलपूर्वाविकर्णीचबलप्रमथिनीतथा ॥ २ ॥ दारुणाचतथातीक्ष्णामदासूयाचमत्सरा ॥ ईर्ष्यादंभाहंकृतिश्चभ्रामरीसंकटातथा ॥ ३ ॥ उल्किकाचेतिविज्ञेयायोगिन्यस्तमसायुताः ॥ एतासांलक्षणंवक्ष्येश्रृणुपार्वतितत्त्वतः ॥ ४ ॥ २० ॥ ६० ॥

( सात्विकराजसयोरनुल्लेखात्केवलतामसघटिकालक्षणोल्लेखात्तत्स्वरूपाण्येवाग्रे लिखितानि )—

४९६ तत्रादौ उग्रास्वरूपम्—

वृषस्थाजटिलात्र्यक्षाह्यग्निज्वालासमप्रभा ॥ कपालाभयहस्तोग्रावामावामफलप्रदा ॥ १ ॥ रक्तवर्णा ॥ १ ॥

४९७ अथ ज्येष्ठास्वरूपम्—

पाटलाभाशुभाज्येष्ठाकपालवरधारिणी ॥ पाटलवर्णा ॥ १ ॥

४९८ अथ रौद्रीस्वरूपम्—

रक्तवर्णातथारौद्रीकपालचमरीकरा ॥ रक्तवर्णा ॥ १ ॥

४९९ अथ शेषरौद्रीस्वरूपम्—

शेषपूर्वातुविज्ञेयाकृष्णवक्त्रातिभीषणा ॥ ( आयुधंशरीरवर्णश्चपूर्ववत् ) ॥ रक्तवर्णा देहे ॥ मुखेकृष्णवर्णा ॥ १ ॥

५०० अथ कालीस्वरूपम्—

घनश्यामाततः कालीत्वंवताम्रनिभानना ॥ कपालकर्त्रिकाहस्ताज्ञेयाभयनाशिनी ॥ १ ॥ मेघश्यामवर्णा देहे ॥ मुखेरक्तवर्णा ॥ १ ॥

५०१ अथ विकर्णीस्वरूपम्-

नीलाविकर्णीविज्ञेयामुंडशक्तिकरामता ॥ नीलवर्णा ॥ १ ॥

५०२ अथ कलविकर्णीस्वरूपम्-

शुभ्राकलविकर्णीस्याद्भयदैन्यहरासदा ॥ श्वेतवर्णा ॥ १ ॥

५०३ अथ बलविकर्णीस्वरूपम्-

चित्रवर्णाविशालाक्षीकपालजपमालिके ॥ बिभ्राणाशांतिदाभूत्यै- बलपूर्वाविकर्णिका ॥ १ ॥ चित्रवर्णा ॥ १ ॥

५०४ अथ बलप्रमथिनीस्वरूपम्-

ताम्राभाश्वेतवक्रास्याद्बलप्रमथिनीशुभा ॥ कपालपाशिनीसेयंसर्व- शत्रुभयंकरी ॥ १ ॥ रक्तवर्णा देहे ॥ मुखेश्वेतवर्णा ॥ १ ॥

५०५ अथ दारुणास्वरूपम्-

जपाकुसुमसंकाशादारुणाचमहोदरी ॥ कपालवज्रिणीप्रोक्तासर्वश- त्रुभयंकरी ॥ १ ॥ रक्तवर्णा ॥ १ ॥

५०६ अथ तीक्ष्णास्वरूपम्-

तीक्ष्णानीलाताम्रवक्रापृथुजंघाविभीषणा ॥ कपालखड्गिनीभूत्यै- शत्रूणांभयवर्धिनी ॥ १ ॥ देहे नीलवर्णा ॥ मुखेरक्तवर्णा ॥ १ ॥

५०७ अथ मदास्वरूपम्-

मदारक्तोन्मीलिताक्षीश्यामाकुंडोदरीमता ॥ कृपाणपालिकायुक्तक- रालोकभयंकरी ॥ १ ॥ श्यामवर्णा ॥ १ ॥

५०८ अथ असूयास्वरूपम्-

असूयाताम्रकेशांतालोहिताकुंचितानना ॥ कृशोदरीकरेपात्रंखड्गं- धत्तेविभीषणा ॥ १ ॥ रक्तवर्णा ॥ १ ॥

५०९ अथ मत्सरास्वरूपम्-

मत्सरानीलवर्णाभालोहितास्यामहोदरी ॥ खड्गंखेटंदधानाचदीर्घां- गाकुंचितानना ॥ १ ॥ देहे नीलवर्णा ॥ मुखेरक्तवर्णा ॥ १ ॥

## ८१० अथ ईर्ष्यास्वरूपम्-

ईर्ष्यावक्रितनेत्रांतानीलाभाधवलानना ॥ तुंदिलातुंगनासाचकपाल-मुसलांचिता ॥ १ ॥ देहे नीलवर्णा ॥ मुखेश्वेतवर्णा ॥ १ ॥

## ८११ अथ दंभास्वरूपम्-

दंभारक्तमुखीचित्रवर्णाकुब्जामहोदरी ॥ कृपाणंकुंडिकांधत्तेबद्धप-द्मासनेस्थिता ॥ १ ॥ चित्रवर्णा ॥ १ ॥

## ८१२ अथ अहंकृतिस्वरूपम्-

अहंकृतिःकुंचितास्याभ्रुकुटीकुटिलेक्षणा ॥ पाटलाभोन्नतनसाकृजु-कायामहोदरी ॥ १ ॥ कपालदंडपाणिश्चयोगपद्मासनेस्थिता ॥ पाटलवर्णा ॥ १ ॥

## ८१३ अथ भ्रामरीस्वरूपम्-

भ्रामरीनीलमेघाभादीर्घजंघाकृशोदरी ॥ घंटादंडकराक्रूराकराला-स्याजटाविला ॥ १ ॥ नीलवर्णा ॥ १ ॥

## ८१४ अथ संकटास्वरूपम्-

संकटाविकटग्रीवानिम्ननासाकृशोदरी ॥ कृष्णश्वेतच्छविश्श्यामाख-ड्गखेटकधारिणी ॥ १ ॥ कृष्णश्वेतवर्णा ॥ १ ॥

## ८१५ अथ उल्किकास्वरूपम्-

उल्किकाचोल्मुकाभासानीलग्रीवामहोदरी ॥ उल्मुकंचकरेदंडंद-धानालोकभीषणा ॥ १ ॥ रक्तवर्णा ॥ कंठेनीलवर्णा ॥ १ ॥

## ८१६ अथ कलादेवतास्वरूपम्-( नृसिंहप्रासादे )

शुक्लवर्णाकलाज्ञेयानीलवस्त्रात्रिलोचना ॥ व्योमवंध्यैकरुद्राक्षकच-लंबितमालिका ॥ १ ॥ मुक्ताक्षमालिकायुक्तावामेपंकजसंयुता ॥ पूजनीयाविशेषेणज्ञानविज्ञानहेतवे ॥ २ ॥ श्वेतवर्णा ॥ १ ॥

### ५१७ अथ काष्ठादेवतास्वरूपम्-( नृसिंहप्रासादे )

नीलवर्णाभवेत्काष्ठापीतवस्त्रात्रिलोचना ॥ अष्टादशभुजोपेताज्ञान-मुद्रासमन्विता ॥ १ ॥ नीलवर्णा ॥ १ ॥

### ५१८ अथ निमेषदेवतास्वरूपम्-( नृसिंहप्रासादे )

निमेषस्तुभवेदेवंकाकाभोह्यर्धनीलदृक् ॥ अक्षसूत्रंकरेदक्षेज्ञानमुद्रां तथोत्तरे ॥ १ ॥ दधानोयोगसंसिद्ध्यैपूजनीयोविपश्चिता ॥ कृष्णवर्णः ॥ १ ॥

### ५१९ अथ क्षणदेवतास्वरूपम्-( नृसिंहप्रासादे )

क्षणाभिधोभवेच्छुक्लोमुनिरूपः सुमौलिकः ॥ जटात्रिमौलिकोपेत-श्चंदनालिप्तविग्रहः ॥ १ ॥ मुक्तासूत्राग्रहस्तोयंवामेसन्नकमंडलुः ॥ शुभ्रवर्णः ॥ १ ॥

---

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्नाटकजनपदसंपदधिष्ठानभूत श्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपाल-प्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्री-मद्राजाधिराजराजपरमेश्वरप्रौढमतापामतिमवीरनरपतिबिरुदेंतेंबरगंडलोकैकवीरयदु-कुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडध-रणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितश्रीमन्महीशूरपुरवराधीशश्रीकृ-ष्णराजमहाराजविरचितश्रीतत्त्वनिध्याख्यग्रंथेनवग्रहयुगादिस्थूलसूक्ष्म कालभेदतत्तद्देवतास्वरूपनिरूपणंनामपंचमोग्रहनिधिस्संपूर्णः ॥

---

इति श्रीतत्त्वनिध्याख्यग्रन्थे—नवग्रहयुगादिस्थूल-सूक्ष्मकालभेदतत्तद्देवतास्वरूपनिरूपणंनाम पञ्चमोग्रहनिधिसंपूर्णः ।

अथ सालिग्राममूर्तीनांनामलक्षणशिलभेदादिविषयेषुप्रश्नः—
(नरसिंहपुराणे ब्रह्मनारदसंवादे)

देवादिदेवसर्वज्ञलोकेशकमलासन ॥ त्वत्प्रसादान्मयासर्वंज्ञातंज्ञेयं-
विधेधुना ॥ १ ॥ इदानींश्रोतुमिच्छामिसालिग्रामस्यलक्षणम् ॥ तस्यो-
त्पत्तिंनिदानंचवर्णक्षेत्रंफलाफलम् ॥ २ ॥ मूर्तिभेदंचसर्वस्याःसालिग्राम-
शिलातनोः ॥ तथार्चनायांयोग्यत्वंत्वद्वाक्येनचतुर्मुख ॥ ३ ॥ ब्रह्मो-
वाच ॥ साधुसाधुमहाप्राज्ञकृतःप्रश्नस्सुनिर्मलः ॥ मयोच्यतेविधानेनसा-
लिग्रामस्यलक्षणम् ॥ ४ ॥ उत्पत्तिंचनिदानंचवर्णक्षेत्रंफलाफलम् ॥
मूर्तिभेदंचपूजायांयोग्यत्वंमुनिपुंगव ॥ ५ ॥

३५ अथ सालिग्रामोत्पत्तिदेशक्रमाः—(तत्रैव)

आसीदवन्तीदेशेषुनाम्नातुहरिपर्वतः ॥ सालिग्रामइतिक्षेत्रेहरिचक्र-
शिलामये ॥ १ ॥ यस्यस्मरणमात्रेणसर्वपापक्षयोभवेत् ॥ तत्रैवगंड-
कयाख्यातानदीपापप्रणाशिनी ॥ २ ॥ यज्जलस्पृष्टिमात्रेणविष्णुसायु-
ज्यमश्नुते ॥ तस्मिन्पर्वतमूलेतुचक्रतीर्थंमहत्सरः ॥ ३ ॥ तस्यानद्या-
निदानंचप्रवदंतिपुराविदः ॥ तस्मिन्पर्वततीर्थेस्तिसाक्षाच्चक्रधरोहरिः ॥
॥ ४ ॥ लक्ष्म्याधरित्र्यासहितोसान्निध्यंकुरुतेमुने ॥ तच्छिलासुचस-
र्वासुहरिक्षेत्रगतासुच ॥ ५ ॥ शीतवातविनिर्मुक्तेशैलगर्भेमुनीश्वर ॥
सर्वलक्षणसंयुक्तासालिग्रामशिलाभवेत् ॥ ६ ॥ साक्षाल्लक्ष्मीपतेर्विष्णोः
प्रसादात्परमेष्ठिनः ॥ उत्पत्तिस्तच्छिलानांतुपुण्यकालेषुविद्यते ॥ ७ ॥

३६ अथ तेषुचक्रोत्पत्तिक्रमः—(तत्रैत)

पश्चात्सहस्रवर्षाणांसालिग्रामस्यचक्रके ॥ वज्रकीटइतिख्यातोजंतुर्भू-
त्वाहरिस्स्वयम् ॥ १ ॥ हिरण्मयोमहावीर्योविद्युल्लेखासमप्रभः ॥
सालिग्रामशिलागर्भमासाद्यकलनिस्स्वनः ॥ २ ॥ तत्रस्थश्चक्रचिह्ना-
निमुखेनकुरुतेमुने ॥ नानाविधानिचक्राणिनानारूपाणिलीलया ॥ ३ ॥
अन्तर्दधातितत्रैवबहुकालादनंतरम् ॥ सान्निध्यंकुरुतेतत्रसाक्षाल्लक्ष्मीप-

तिस्सदा ॥ ४ ॥ तदालोकनमात्रेणसर्वपापक्षयोभवेत् ॥ उत्पत्तिर्नारदोक्तैवंविज्ञेयामुनिपुंगव ॥ ५ ॥

३७ अथ सालिग्रामशिलानांवर्णरूपैर्बहुविधत्वम्-( तत्रैव )

श्वेतापीतातथारक्ताकृष्णाशाड्वलसन्निभा ॥ कपिलाचतथाधूम्राकलंकाबहुवर्णिनी ॥ १ ॥ अतिवर्णाविवर्णाचतथासंदिग्धवर्णिनी ॥ एवंविधैस्तथावर्णैरूपैर्नानाविधाशिला ॥ २ ॥

३८ अथ सालिग्रामक्षेत्राणांवर्णाः-( तत्रैव )

क्षेत्रंतुवासुदेवस्यश्वेतवर्णंप्रचक्षते ॥ पीताहैरण्यगर्भास्याद्रक्ताप्रद्युम्नरूपिणी ॥ १ ॥ कृष्णातुविष्णुसुक्षेत्रंस्याच्छिलामुनिपुंगव ॥ श्रीमन्नारायणक्षेत्रंहरितांगंविदुर्बुधाः ॥ २ ॥ कपिलानारसिंहीस्याद्वामनीत्वतसीनिभा ॥

अथ सालिग्रामक्षेत्रवर्णभेदानांफलानि-( तत्रैव )

श्रेष्ठास्यात्तुविशेषेणधूम्रातुयतिपूजने ॥ कलंकाक्षयकारीस्यादनंतोबहुवर्णभाक् ॥ १ ॥ अतिवर्णादुःखदास्याद्विवर्णाकुलनाशिनी ॥ संदिग्धवर्णाहंत्रीस्यादितिक्षेत्रफलंमुने ॥ २ ॥-॥ पत्नीघ्नीकपिलाचैवनीलालक्ष्मीप्रदायिनी ॥ पुष्टिदावृद्धिदाश्यामारक्ताराज्यकरीतथा ॥ ३ ॥ अतिरक्तामृत्युदास्याद्धौराधनकरीतथा ॥ बहुवर्णाश्रीकरीस्याद्विवर्णानिष्फलातथा ॥ ४ ॥ श्वेतवर्णामोक्षदास्यात्संदिग्धासर्वनाशिनी ॥

३९ अथ सालिग्रामरन्ध्रप्रमाणमाह-( तत्रैव )

सूत्रेणवेष्टयेन्मध्यंसालिग्रामस्यबुद्धिमान् ॥ तदष्टांशप्रमाणंस्यादुत्तमंयस्यगह्वरम् ॥ १ ॥-॥ वक्रेसूत्राष्टमोभागउत्तमामध्यमाउभौ ॥ भागत्रयंजघन्यस्यात्सालिग्रामस्यलक्षणम् ॥ १ ॥

अथ सालिग्रामेषुवक्रफलान्याह-( तत्रैव )

अधोवक्रंश्रीकरंचोर्ध्वास्यमुच्चाटनक्रियम् ॥ समवक्रंविशिष्टंस्यात्पार्श्वास्यंभाग्यहृद्भवेत् ॥ १ ॥ वक्रास्यंव्याधिजनकंदीर्घास्यंसर्वभक्षकम् ॥ मूर्तिभेदंसमाशोध्यपश्चाल्लक्षणमादिशेत् ॥ २॥

## अथ दशावतारमूर्तीनांनामानि—( तत्रैव )

मूर्तयश्चाथकथ्यंतेयथावच्छृणुसत्तम ॥ मत्स्यःकूर्मोवराहश्चनारसिंहोथवामनः ॥ १ ॥ रामोरामश्चरामश्चबुद्धःकल्किरिमेदश ॥ १० ॥

---

## ४० अथ सालिग्रामेषु मूर्तीनांलक्षणानि—( नृसिंहपुराणे )

तत्रादौ (१ मत्स्यमूर्तिः) मत्स्याकृतिमुखाकारांमुखसंदृश्यचक्रकाम् ॥ श्रीवत्सबिंदुमालाढ्यांमत्स्यमूर्तिंशुभांविदुः ॥ १ ॥

( २ महाकूर्ममूर्तिः )—वर्तुलःकमलाकारोवनमालाब्जचक्रवान् ॥ पालाशोहेमबिंदुश्रीर्महाकूर्मस्तुदुर्लभः ॥ १ ॥

( ३ वाराहमूर्तिः )—दीर्घास्यंश्यामलाकारंपृथ्वीवलयवेष्टितम् ॥ द्वारदेशेलसच्चक्रंवाराहंतद्विदुर्बुधाः ॥ १ ॥

( ४ बुद्धमूर्तिः )—रंध्रदृश्यद्वयोपांतअंतश्चक्रद्वयान्विताम् ॥ शिरोदृष्टोर्ध्वचक्रंचपार्श्वयोर्वापिदृश्यते ॥ १ ॥ नानावर्णमयींवापिबुद्धमूर्तिंप्रचक्षते ॥

( ५ नारसिंहमूर्तिः )—दीर्घास्यःकपिलाकारोदीर्घचक्रोमहोदरः ॥ नारसिंहइतिख्यातोयोग्योमस्करिपूजने ॥ १ ॥

( ६ लक्ष्मीनृसिंहमूर्तिः )—वामभागस्थचक्राढ्यःकृष्णवर्णस्सबिंदुकः ॥ लक्ष्मीनृसिंहआख्यातोभुक्तिमुक्तिफलप्रदः ॥ १ ॥

( ७ वामनमूर्तिः )—इंद्रनीलनिभाकारंवनमालांबुजोज्ज्वलम् ॥ ह्रस्वंसुवर्तुलंचैववामनंपरिचक्षते ॥ १ ॥

( ८ परशुराममूर्तिः )—लसत्परशुरेखाढ्योदूर्वाश्यामस्तथोन्नतः ॥ नाभिदेशलसच्चक्रोरामस्स्याज्जमदग्निजः ॥ १ ॥

( ९ श्रीराममूर्तिः )—रेखाकारधनुर्बाणंस्थूलंदीर्घंसबिंदुकम् ॥ नाभिचक्रंबहुच्छिद्रंश्यामंदाशरथिंविदुः ॥ १ ॥

( १० बलराममूर्तिः )—हलरेखोमुसलवाञ्छुक्लाभोवनदामवान् ॥ मधुबिंदुधरःश्रीमान्रामस्संकर्षणश्शुभः ॥ १ ॥

( श्रीघन[११]मूर्तिः )—सहस्रबिंदुसंयुक्तंधर्मचक्रसमन्वितम् ॥ श्वेतवर्णमतिश्लक्ष्णंसर्वज्ञंश्रीघनंविदुः ॥ १ ॥

( कल्कि[१२]मूर्तिः )—हयरेखासमायुक्तोरेखाकुंतायुधाकृतिः ॥ श्वेतवर्णोदीर्घमुखःकल्किरित्यभिधीयते ॥ १ ॥

(श्रीकृष्ण[१३]मूर्तिः)—रेखापंचायुधधरंवनमालाविभूषितम्॥ अब्जचिह्नंसूक्ष्मचक्रंकृष्णमेनंप्रचक्षते ॥ १ ॥

( श्रीगोपाल[१४]मूर्तिः )—एतल्लक्षणसंयुक्तंपंचायुधविलेखनम् ॥ नीरंध्रंवर्तुलंवापिदीर्घंवामालिकायुतम्॥ १ ॥एकैकंवापृथग्वापितत्तद्विग्रहवर्णकम् ॥ एवंलक्षणसंयुक्तंदीर्घाकारंमहोदरम् ॥ २ ॥ श्रीगोपालमिमंप्राहुस्सरेखावंशगह्वरम् ॥ १ ॥

( दधिवामन[१५]मूर्तिः )—अधश्चक्राग्रविलसद्दधिबिंदुसमन्वितम् ॥ वामनंनीलरक्तांगंवदंतिदधिवामनम् ॥ १ ॥

(दधिगोपाल[१६]वामनमूर्तिः )—ऊर्ध्वचक्राग्रविलसद्दधिबुब्दुदशोभिताम् ॥ मूर्तिंदधातिगोत्रीस्याद्दधिगोपालवामनः ॥ १ ॥

( सन्तानगोपाल[१७]मूर्तिः )—दंडशृंगयुतःपार्श्वेवेणुनाशोभितोमुखे ॥ तस्मात्संतानगोपालोपुत्रपौत्राभिवृद्धिदः ॥ १ ॥ इंद्रनीलनिभोदीर्घोवनमालाविभूषितः ॥ अंकुशाकारवदनोधर्मचक्रसमन्वितः ॥ २ ॥ १ ॥

( प्रद्युम्न[१८]मूर्तिः )—जपाकुसुमसंकाशंवनमालाविभूषितम् ॥ धनुर्बाणांबुजधरंप्रद्युम्नंचेष्टदंविदुः ॥ १ ॥

( अनिरुद्ध[१९]मूर्तिः )—प्रद्युम्नलक्षणैर्युक्तंसूक्ष्मचक्रलसन्मुखम् ॥ सुवर्णरूप्यरेखाढ्यमनिरुद्धंविदुर्बुधाः ॥ १ ॥

( हयग्रीव[२०]मूर्तिः )—अंकुशाकारवदनंदीर्घबिंदुसमज्ज्वलम् ॥ पक्वजंबूफलाकारंहयग्रीवंवदंत्यमुम् ॥ १ ॥

( श्रीधर[२१]मूर्तिः )—घनशाड्वलसंकाशंवनमालाविभूषितम्॥किंचिद्विषमचक्राढ्यंश्रीधरंश्रीकरंविदुः ॥ १ ॥

( लक्ष्मीनारायणमूर्तिः )[२२]—निम्नाकारंशिरश्चक्रंसुवृत्तंशीतलाकृति॥ द्वारद्वयेचतुश्चक्रंवामेवादक्षिणेपिवा ॥ १ ॥ श्रीवत्सशंखचक्राढ्यंलक्ष्मीनारायणंविदुः ॥ १ ॥

( पद्मनाभमूर्तिः )[२३]—नाभिचक्रोल्लसत्पद्मोजंबूफलसमप्रभः ॥ पद्मनाभइतिख्यातस्तंविदुर्नाकदंबुधाः ॥ १ ॥

( गोविन्दमूर्तिः )[२४]--नवदूर्वादलश्यामोवनमालाविभूषितः ॥ दशरंध्रसमायुक्तोविंशच्चक्रसमन्वितः ॥ १ ॥ गोविंदइतिविख्यातःसर्वकामफलप्रदः ॥ १ ॥

( विश्वरूपमूर्तिः )[२५]—ज्ञेयोद्वादशरंध्रस्तुचतुर्विंशतिचक्रकः ॥ विश्वरूपइतिख्यातोभुक्तिमुक्तिफलप्रदः ॥ १ ॥

(अनन्तमूर्तिः)[२६]—श्रीवत्सशंखचक्राढ्यंपंचायुधलसत्तनुम्।समंसूक्ष्मंलसच्चक्रंपंकजद्वयशोभितम् ॥ १ ॥ सदासुशीतलतनुमनंतमनलोज्ज्वलम्॥

( लक्ष्मीनारायणमूर्तिः )[२७]—द्वारदेशेलसद्रेखंपक्षिराजसुरेखकम् ॥ लक्ष्मीनारायणंप्राहुर्दुर्लभंशीघ्रसिद्धिदम् ॥ १ ॥

( नारायणमूर्तिः )[२८]—उक्तलक्षणसंयुक्तंशेषभोगेनवेष्टितम् ॥ नारायणमिमंप्राहुर्नारदेष्टफलप्रदम् ॥ १ ॥

( दामोदरमूर्तिः )[२९]—किंचिद्विषमचक्राढ्यमिंद्रनीलसमप्रभम् ॥ वनमालालसच्चक्रंप्राहुर्दामोदरंमुने ॥ १ ॥

( अनन्तमूर्तिः )[३०]—नानावर्णसमायुक्तोनागवेष्टनसन्निभः ॥ अनंतमूर्तिर्विज्ञेयोहरिर्लक्ष्मीप्रदायकः ॥ १ ॥

( त्रिविक्रममूर्तिः )[३१]—दीर्घाकारोमहातेजाश्शंखचक्रगदांकवान् ॥ वनमालाधरश्श्रीमान्त्रिविक्रमउदाहृतः ॥ १ ॥

( जनार्दनमूर्तिः )[३२]—शंखचक्राब्जमालांकोनीलश्शूलाकृतिश्शुभः ॥ जनार्दनइतिख्यातोहिमांशुपरिशीतलः ॥ १ ॥

( वासुदेवमूर्तिः )[३३]—रेखापंचायुधधरोहिमांशुसदृशप्रभः ॥ नाभिचक्रधरश्शांतोवासुदेवइतीरितः ॥ १ ॥

( श्रीविष्णु[३४]मूर्तिः )—विष्णुक्रांतनिभाकारोवनमालाऽब्जचिह्नकः ॥ पंचायुधधरश्श्रीमान्विष्णुरित्युच्यतेबुधैः ॥ १ ॥

( अच्युत[३५]मूर्तिः )—नीलस्थूलसमाकारोवनमालाविभूषितः॥सूक्ष्मचक्रस्समश्श्लक्ष्णोह्यच्युतस्समुदीरितः ॥ १ ॥

( उपेन्द्र[३६]मूर्तिः )—शंखचक्रगदाचिह्नानीलवर्णोलसत्तनुः ॥ उपेंद्रमूर्तिर्विख्याताहरिस्सौख्यशुभप्रदा ॥ १ ॥

( शिवनाभ[३७]मूर्तिः )—गजवृत्तास्थूलरेखादृश्यतेयस्यमध्यतः॥शिवनाभस्सविज्ञयोदुर्लभस्सर्वकामदः ॥ १ ॥

( हिरण्यगर्भ[३८]मूर्तिः )—द्वारंनदृश्यतेयस्यनीलवर्णस्सुशीतलः ॥ हिरण्यगर्भःख्यातोसौहेमगर्भःशुभप्रदः ॥ १ ॥

( मदनगोपाल[३९]मूर्तिः )—अर्धश्यामोर्धरक्तश्चशंखचक्रधनुश्शरी॥दीर्घस्सुषिरवान्वामेगोपालोमदनाह्वयः ॥ १ ॥

( जनार्दन[४०]मूर्तिः )—अंतर्लक्ष्यचतुश्चक्रंशीतलंचोत्पलप्रभम् ॥ जनार्दनंविजानंतिवनमालाभिवेष्टितम् ॥ १ ॥—॥ ( प्रकारान्तरम् )—द्वारषट्कसमायुक्तंचक्रद्वादशकोज्वलम् ॥ वनमालायुतंश्लक्ष्णमाहुस्तंचजनार्दनम् ॥ १ ॥

( लक्ष्मीनारायण[४१]मूर्तिः )—द्वेद्वेचक्रेत्वधश्चोर्ध्वंलक्ष्मीनारायणस्मृतः ॥ १ ॥

(श्रीमन्नारायण[४२]मूर्तिः)—द्वेद्वेचक्रेचपार्श्वस्थेश्रीमन्नारायणःस्मृतः ॥

( सुदर्शन[४३]मूर्तिः )—वृत्ताकारंतुदीर्घंवाद्वारदृष्टैकचक्रकम् ॥ १ ॥ सुदर्शनंविजानंतिविंदुयुक्तंविचक्षणाः ॥—॥ ( प्रकारान्तरम् ) चक्रद्वयंबिलेनस्तःयस्यमूर्ध्निसुदर्शनम् ॥रक्तमूर्ध्वमितिप्राहुर्महोग्रंयतिपूजने॥ १ ॥

( वनमालि[४४]मूर्तिः )—बिलपार्श्वस्थदंष्ट्रांकमंतश्चक्रद्वयोज्वलम् ॥ कपिलंवक्रवदनंतत्पार्श्वेवनमालिनम् ॥ १ ॥

( महाज्वालानृसिंह[४५]मूर्तिः )—स्थूलंचविवृतास्यंचनीलंवाकपिलंपृथुम् ॥ महाज्वालानृसिंहंतंयतिपूज्यंमहामुने ॥ १ ॥

( शिव[४६]नाभमूर्तिः )—ऊर्ध्वरंध्रलसल्लिंगंसुवृत्तंशीतलाकृतिम् ॥ श्रीकरंशिवनाभाख्यंसर्वसौभाग्यवर्धनम् ॥ १ ॥

( बुद्ध[४७]मूर्तिः )—रंध्रेष्वदृष्टचक्रंचपंकाकारंसबिंदुकम् ॥ बुद्धाकारं-विजानीयाच्चक्रंवामलिनावहम् ॥ १ ॥

( लक्ष्मीनृ[४८]सिंह्ममूर्तिः )—महच्चक्रांतिकलसन्सूक्ष्मचक्रबिलांत-रम् ॥ लक्ष्मीनृसिंहंकपिलंवर्णतःक्षेत्रभावना ॥ १ ॥

( श्वेतव[४९]राहमूर्तिः )—दीर्घघोणसमायुक्तमेकदंष्ट्रंसुनिर्मलम् ॥ वन-मालायुतंरम्यंश्वेतंवाराहमुच्यते ॥ १ ॥

( भूव[५०]राहमूर्तिः )—अधश्चक्रांतिकलसदेकदंष्ट्रंसमुच्छ्रितम् ॥ अंकु-शाकारवदनंभूवराहंशुभप्रदम् ॥ १ ॥

( कूर्म[५१]मूर्तिः )—स्थूलंचानिबिडाकारंश्यामवर्णंसचक्रकम् ॥ कर्बुरं-वाथकपिलंश्यामंकूर्मंविदुर्बुधाः ॥ १ ॥

( हृषीके[५२]शमूर्तिः )—पंचरंध्रसमायुक्तंदशचक्रसमन्वितम् ॥ श्याम लंकोमलाकारंहृषीकेशंप्रचक्षते ॥ १ ॥

( केश[५३]वमूर्तिः )—राजतैर्बिंदुभिर्हैमैरान्वितंसूक्ष्मचक्रकम् ॥ वनमा-लान्वितंश्यामंकेशवाख्यंविदुर्बुधाः ॥ १ ॥

( अच्यु[५४]तमूर्तिः )—बहिश्चक्रसमायुक्तमंतश्चक्रद्वयान्वितम् ॥ मूर्त-तमच्युतंज्ञेयंसूक्ष्मरंध्रंसुशीतलम् ॥ १ ॥

( वैकु[५५]ण्ठमूर्तिः )—रेखाष्टकायुधोपेतंपद्मनीकाशगह्वरम् ॥ वनमा-लान्वितंश्यामंवैकुंठंकोमलंविदुः ॥ १ ॥

( विष्टर[५६]श्रवोमूर्तिः )—पार्श्वरंध्रद्वयोपेतंवनमालाभिवेष्टितम् ॥ विष्ट रश्रवसंप्राहुस्थूलंदीर्घंचचक्रिणम् ॥ १ ॥

( हिरण्य[५७]गर्भः )—हिमांशुसदृशाकारंश्लक्ष्णंस्थूलंतथोच्छ्रितम् ॥ हिरण्यगर्भमाहुस्तंद्वारदृष्टसुदर्शनम् ॥ १ ॥

( हरिहर[५८]ब्रह्ममूर्तिः )—शंखचक्राहिकमलकमंडलुपरश्वधैः ॥ माला-त्रयेणसंयुक्तंमूर्तित्रयमिदंविदुः ॥ १ ॥

( कूर्मवराहमूर्तिः[५९] )—बिंदुद्वयसमायुक्तचक्रंवाशंखलांछनम् ॥ विष्णुलक्षणमास्यंचाप्यास्यचक्रंसमीपगम् ॥ १ ॥ तत्तल्लक्षणसंयुक्तंभानोर्विमलपंचकम् ॥ कूर्ममूर्तिर्वराहश्चदुर्लभंसर्वकामदम् ॥ २ ॥

( मत्स्यमूर्तिः[६०] )—मत्स्याकारंमहास्निग्धंबिंदुनोपरिभूषितम् ॥ दंष्ट्रेवाशक्तिलिंगंचवक्रेतुविषमस्थिते ॥ १ ॥

( वराहमूर्तिः[६१] )—इंद्रनीलनिभास्थूलात्रिरेखालांछिताशुभा ॥ वराहमूर्तिर्विज्ञेयासर्वकामफलप्रदा ॥ १ ॥

( कपिलानारसिंहमूर्तिः[६२] )—कपिलानारसिंहंतुदंष्ट्रेवास्थूलचक्रकम् ॥ वनमालासुनिष्पन्नंपृथुचक्रंसुदर्शनम् ॥ १ ॥ ब्रह्मचर्येणसंपूज्या भुक्तिमुक्तिप्रदायिनी ॥ १ ॥

( वामनमूर्तिः[६३] )—अतसीपुष्पसंकाशंबिंदुनोपरिभूषितम् ॥ क्षतंकुंडलसंयुक्तंवक्रेवाबिंदुपूर्वकम् ॥ १ ॥ ह्रस्वंचवर्तुलंचैववामनंपरिकीर्तयेत् १ ॥

( दधिवामनमूर्तिः[६४] )—ह्रस्वंसुवर्तुलंचैवबिंदुनोपरिभूषितम् ॥ श्यामलंकृष्णवर्णंचाप्यास्यचक्रंसमीपगम् ॥ १ ॥ दधिवामनमाहुस्तंदुर्लभंसर्वकामदम् ॥—॥ ( प्रकारान्तरम् )—बिंदुद्वयंचह्रस्वंचश्रीकरंवनमालया ॥ कृष्णवर्णंमहास्निग्धंबिंदुनोपरिभूषितम् ॥ १ ॥ दधिवामनमित्याहुर्भुक्तिमुक्तिफलप्रदम् ॥ १ ॥

( लक्ष्मीनृसिंहमूर्तिः[६५] )—वामेचक्रद्वययुतःकृष्णवर्णस्सबिंदुकः ॥ लक्ष्मीनृसिंहोविज्ञेयोभुक्तिमुक्तिफलप्रदः ॥ १ ॥

( रामाख्यमूर्तिः[६६] )—कदंबकुसुमाकारंबिंदुनापरिभूषितम् ॥ धनुर्बाणाख्यरेखाढ्यंपद्मरेखासमन्वितम् ॥ १ ॥ रामंरामंचरामंचदुर्लभंसर्वकामदम् ॥ १ ॥

( श्रीराममूर्तिः[६७] )—कोदंडकुक्कुटांडाभश्यामलोन्नतपृष्ठकम् ॥ सव्यापसव्यतूणीरंपृष्टेचापविराजितम् ॥ १ ॥ कल्पद्रुमसमायुक्तंपृष्टेच्छत्रसमन्वितम् ॥ रामंदाशरथिंविद्धिदुर्लभंभुवनत्रये ॥ २ ॥

( श्रीसीताराममूर्तिः )—कुक्कुटांडसमोपेत(माकार)मधोवक्रंसकुंडलम् ॥ द्वारदेशेसमेचक्रेकल्पवृक्षसुचिह्नकम् ॥ १ ॥ वामपार्श्वेशिरश्चक्रंरेखालांछितचिह्नकम् ॥ सीतारामंतुतंविद्धिभुक्तिमुक्तिफलप्रदम् ॥ २ ॥

( गोपालक्षेत्रम् )—जंबूफलसमाकारंकृष्णवर्णंसबिंदुकम् ॥ पृष्ठे सुषिरमारम्यवक्रेमकरकुंडलम् ॥ १ ॥ ललाटेवामबाणंतुबिंदुनाचापसंयुतम् ॥ गोपालक्षेत्रमुत्पत्त्यासरामंतस्यलक्षणम् ॥ २ ॥ शत्रुनाशकरंप्रोक्तंसर्वकामफलप्रदम् ॥ अपुत्रेपुत्रफलदंसर्वमंगलकारकम् ॥ ३ ॥

( ब्रह्ममूर्तिः )—परमेष्ठीतुशुक्लाभःचक्रमेकंतथांबुजम् ॥ सुवर्तुलंतथापीतंपृष्ठतस्सुषिरंध्रुवम् ॥ १ ॥ ब्रह्ममूर्तिस्तुविज्ञेयाभोगमोक्षफलप्रदा ॥ १ ॥

( वासुदेवमूर्तिः )—पूगीफलसमाकारोह्रस्वश्चपरिवर्तुलः ॥ द्वारदेशेसमेचक्रेदृश्येतेनांतरीयके ॥ १ ॥ वासुदेवस्सतुज्ञेयःशुक्लाभश्चस्वतेजसा ॥ अपमृत्युहरश्चैवसर्वकामफलप्रदः ॥ २ ॥ १ ॥

( महाविष्णुमूर्तिः )—सुदर्शनंमहाविष्णुंरेखाचक्रंमहाद्युतिम् ॥ कृष्णवर्णंसुविख्यातंसर्वमृत्युहरंशुभम् ॥ १ ॥

(नारायणमूर्तिः)—श्यामंनारायणंविद्धिनाभिचक्रमथोन्नतम् ॥ दीर्घरेखासमाक्रान्तंसुवर्णवनमालिकम् ॥ १ ॥ अयंनारायणोज्ञेयअपमृत्युहरश्शुभः ॥ १ ॥

( लक्ष्मीनारायणमूर्तिः )—ध्वजवज्रांकितंपीतंवामपार्श्वेतुवर्त्तुलम् ॥ दीर्घरेखासमाक्रान्तंचतुश्चक्रसमन्वितम् ॥ १ ॥ मुसलासिधनुर्मालाशंखचक्रगदान्वितम् ॥ लक्ष्मीनारायणाख्यंचमुखेनाभौचनारद ॥ २ ॥ सर्वसिद्धिप्रदंदिव्यंसर्वकर्मशुभप्रदम् ॥ सर्वसौभाग्यदंनृणांलक्ष्मीनारायणंविदुः ॥ ३ ॥ १ ॥

( श्रीधरमूर्तिः )—श्रीधरंतुततोदेवचिह्नितंवनमालया ॥ कदंबकुसुमाकारंसर्वसिद्धिप्रदंशुभम् ॥ १ ॥

( संकर्षणमूर्तिः [७६] )—द्वेचक्रेएकलग्नेतुपूर्वभागेतुपुष्कलम् ॥ संकर्षणंविजानीयाद्रक्ताभश्चातिशोभनम् ॥ १ ॥

( प्रद्युम्नमूर्तिः [७७] )—प्रद्युम्नःसूक्ष्मचक्रस्तुपीतोदीप्तस्तथैवच ॥ सुषिरैर्बहुलैश्चैवदीर्घाकारस्तुतद्भवेत् ॥ १ ॥

( विष्णुमूर्तिः [७८] )—अनिरुद्धंतुनीलाभंवर्तुलंचातिशोभितम् ॥ कृष्णवर्णंतथाविष्णुंस्थूलचक्रंसुशोभनम् ॥ १ ॥

( कृष्णमूर्तिः [७९] )—गदाकृतिःसदारेखालक्ष्यतेमध्यदेशतः ॥ कृष्णमूर्तिस्सुविज्ञेयाभोगमोक्षफलप्रदा ॥ १ ॥

( कूर्ममूर्तिः [८०] )—कूर्मश्चैवोन्नतःपृष्टेश्वेतभोगखुरान्वितः ॥ सकृष्णवर्णबिंदुस्स्यान्निर्मलःपरिकीर्तितः ॥ १ ॥ कूर्मस्त्वेवंसविज्ञेयस्सर्वकर्मशुभप्रदः ॥ १ ॥

( अनन्तमूर्तिः [८१] )—नानावर्णमनंतंचनागभोगसुचिह्नितम् ॥ ध्वजाकारातदारेखालक्ष्यतेमध्यदेशतः ॥ १ ॥ शेषाकारंमहास्थूलंसप्तचक्रसमन्वितम् ॥–॥ ( प्रकारान्तरम् )—अथवाचाष्टचक्रंतुदशचक्रंशुभावहम् ॥ चक्रत्रयोदशंपुण्यंचतुर्दशमहाफलम् ॥ १ ॥ पीतवर्णंतथाकृष्णंवहुवर्णंचनीलकम् ॥ चक्रशंखगदापद्मवनमालाविभूषितम् ॥ २ ॥ अनंतंतंविजानीयात्सर्वसौभाग्यदायिनम् ॥ १ ॥

( त्रिविक्रममूर्तिः [८२] )—कुक्कुटांडसमाकारःऊर्ध्वचक्रसुशोभनः ॥ द्वेचक्रेचैकभागेतुपूर्वभागेतुपुष्कलः ॥ १ ॥ ध्वजाकारसुबिंद्वाढ्यःशंखलांगलसंयुतः ॥ त्रिविक्रमस्सविज्ञेयोह्यपमृत्युहरःशुभः ॥ २ ॥ १ ॥

( लक्ष्मीगोपालमूर्तिः [८३] )—कुक्कुटांडसमाकारंश्रीधरंवनमालिनम् ॥ वेणुलांगलचिह्नंचकुंडलाभ्यांसुशोभितम् ॥ १ ॥ लक्ष्मीगोपालमाहुस्तंदुर्लभंभुवनत्रये ॥ पुत्रलाभंतथामोक्षंभुक्तिमुक्तिंददातिच ॥ २ ॥ १ ॥

( श्रीहरिमूर्तिः [८४] )—स्थूलचक्रोभवेद्देवोहरिर्लोहितवर्णकः ॥ १ ॥

(बलभद्रमूर्तिः [८५])—बलभद्रोभवेद्देवोकीर्तिगोत्रविवर्धनः॥ श्यामवर्णो-

महास्निग्धश्छत्राकारस्तथैवच ॥ १ ॥ सूक्ष्मद्वारेणबिंदूनांरक्तरेखाभिर न्वितः ॥ शीर्षेतुपुष्कलंबिभ्रन्महास्निग्धंचकोमलम् ॥ २ ॥

( गोपालमूर्तिः )—गोपालमूर्तिर्विज्ञेयादुर्लभाभुवनत्रये ॥ पुत्रलाभं- तथामोक्षंगवांवृद्धिंददातिसा ॥ १ ॥

( लक्ष्मीगोपालमूर्तिः )—सर्वशत्रुविनाशायलक्ष्मीगोपालकंसदा ॥ छत्राकारंमहास्निग्धंद्वारंनास्तिसबिंदुकम् ॥ १ ॥ स्थूलंश्रेष्ठंगुरुतथामहाते जःप्रकाशितम् ॥

( वराहक्षेत्रम् )—वराहरूपोदेवानांश्यामलोन्नतपृष्ठकः ॥ पृष्ठभागे- तथाहेमबिंदुनापरिभूषितः ॥ १ ॥ समेद्वेचक्रकेचाधःसूक्ष्मचक्रंसु- चिह्नितम् ॥ वाराहक्षेत्रमुक्तत्त्या ॥ १ ॥

( चतुश्चक्रंजनार्दनः )—चतुश्चक्रंजनार्दनः ॥ १८९ ॥

४१ अथ सुदर्शनादिमूर्तीनांलक्षणानि—( प्रकारान्तरेण )

एकंसुदर्शनेचक्रंलक्ष्मीनारायणेद्विकम्॥त्रिचक्रंचाच्युतेज्ञेयंचतुश्चक्रं- जनार्दने ॥१॥ पंचचक्रंवासुदेवेषट्कंसंकर्षणेतथा ॥ सप्तचक्रंतुवाँरा- हेचाष्टकंचपुरुषोत्तमे॥ २॥नवकंनारसिंहेचदशकंवामनेतथा॥ एकादशंतु प्रद्युम्नेत्वनंतेद्वादशस्मृताम्॥ ३ ॥अन्येषुवहुचक्रेषुपरमात्माप्रतिष्ठितः १२

अथ मूर्तिविशेषपूजाफलम्—

हिरण्यगर्भोविज्ञेयःपूजाकर्तुश्वशोभनः ॥ शिवनाभसहस्रंचसालि- ग्रामसहस्रकम् ॥ १ ॥ पूजाफलैःसमंप्रोक्तंभुक्तिमुक्तिप्रदायकम् ॥

४२ अथ कासांचिन्मूर्तीनांस्वरूपाणिदुर्निरूपाणि—(तत्रैव)

मूर्तयस्संतियावत्योविष्णोस्साक्षाच्छ्रियःपतेः ॥ तावत्योमूर्तयस्सं- तिसालिग्रामेषुनारद ॥ १ ॥ सालिग्रामशिलानांतुमूर्तीनांपृथगात्मता ॥ नशक्यतेमयावक्तुंकल्पकोटिशतैरपि ॥ २ ॥

४३ अथ पूजायांवर्ज्यमूर्तीनांस्वरूपाणि—( तत्रैव )

आकोणंदर्दुरंचैवदग्धमुष्णंकलंकितम् ॥ अचक्रंतुतथाघृष्टंवक्रास्यं-

भिन्नमेववा ॥ १ ॥ बहुचक्रंवक्रचक्रंतिर्यक्चक्रंतथात्यजेत् ॥ दीर्घ-
शोभितमच्छांगमसौम्याकृतिमेववा ॥ २ ॥ बहुबाणसमायुक्तंस्फुरि-
तालक्ष्यचक्रकम् ॥ ३ ॥ अपक्वपनसाकारंबभ्राकारंपरित्यजेत् ॥
बंधनंबद्धचक्रंचक्रूरचक्रंतथात्यजेत् ॥ ४ ॥–॥ करालंविकरालचवक्र-
तुंडंतथैवच ॥ दर्द्दुरंस्फुटितंदग्धंत्रिकोणंपरिवर्जयेत् ॥ १ ॥ अंतस्स्फुटितभग्नं
चबद्धचक्रंतथैवच ॥ बहुरेखंपरिच्छिद्रंतिर्यक्चक्रंतथात्यजेत् ॥ २ ॥

अथ वर्ज्यसालिग्रामपूजनेफलान्याह–

दर्द्दुरंदग्धमुष्णंस्याद्दुःखदारिद्यदायिच ॥ बंधकंबद्धचक्रंचत्रिकोणंबं-
धुनाशनम् ॥ १ ॥ अंतस्स्फुटितचक्रंचबंधुपुत्रविनाशकम् ॥ अर्थध्नी
विमलाचस्यात्कर्कशंक्षेत्रमेवच ॥ २ ॥ विकरालंमहादुःखंकरालंकुल-
नाशनम् ॥

४४ अथ पूजायांग्राह्यमूर्तिपरीक्षा–( तत्रैव )

क्षीरेवातंडुलेवापिसालिग्रामंनिवेशयेत् ॥ घनत्वंवृद्धमालोक्यगृह्णी-
याद्बुद्धिमान्नरः ॥ १ ॥

अथ सालिग्राममूर्तिदानतन्मन्त्रक्रयविक्रयनिषेधाः–( तत्रैव )

सालिग्रामेषुतिष्ठंतिभुवनानिचतुर्दश ॥ तस्मादस्यप्रदानेनप्रीतोभवतु-
माधवः ॥ १ ॥ अर्चितंप्रतिगृह्णीयाद्द्यादर्चितमेववा ॥ तावुभौपुण्यकर्माणौ-
नरकीक्रयविक्रयी ॥ २ ॥

अथ सालिग्राममात्रसन्निहितोदेशश्शुद्धः–(तत्रैव)

खंडितंस्फुटितंभिन्नंपार्श्वभिन्नंविभेदितम् ॥ सालिग्रामवपुर्यत्रतत्रदो-
षोनाविद्यते ॥ १ ॥–॥ ( अन्यत्रापि )–सालिग्रामशिलाभग्नापूजनी-
यासचक्रका ॥ खण्डितास्फुटितावापिसालिग्रामशिलाशुभा ॥ १ ॥

४५ अथ शूद्रस्त्रीपतितादिभिस्स्पृष्टाःपूजितावामू-
र्तयोनपूज्याः–( स्कान्दे )

शूद्रोवानुपतीतोवास्त्रियोवापतितोपिवा ॥ केशवंवाशिवंवापिस्पृष्ट्वा-

नरकमश्नुते ॥ १ ॥ प्रायश्चित्तविहीनानिपापानिशृणुभूपते ॥ यश्शूद्रे-
णार्चितंलिङ्गंविष्णुंवाप्रणमेन्नरः ॥ २ ॥ नतस्यनिष्कृतिर्दृष्टाप्रायश्चित्ता-
दिकल्पनैः ॥ससर्वयातनाभोगीयावदाचन्द्रतारकम्॥ ३ ॥कृत्वासंप्रोक्षणं-
तत्रयजेद्देवंविचक्षणः॥ (संप्रोक्षणविधिक्रमस्त्वागमादिग्रन्थेषुद्रष्टव्यः) ॥

## ४६ अथ ब्रह्मचारिगृहस्थयतिपूज्यमूर्तीनांविवेकः—

ब्रह्मचारीचसन्न्यासीबहुचक्रंप्रपूजयेत् ॥ पंकाभंवर्बरंचैवमृगेन्द्र-
सदृशाकृतिम् ॥ १ ॥ भीषणास्यंवह्निनिभंयतिस्संपूजयेन्मुने ॥ सौम्य-
श्चेद्गृहिभिःपूज्यह्योन्यथापूजनंनहि ॥ २ ॥

## ४७ अथ गृहेपूज्याशिवलिङ्गसालिग्रामादिसंख्यानिर्णयः—

गृहेलिङ्गद्वयंनार्च्यंशालिग्रामद्वयंतथा ॥ द्वेचक्रेद्वारकायास्तुनार्च्यं-
सूर्यद्वयंतथा ॥ १ ॥ गणेशशक्तित्रितयंद्वौशंखौनैवपूजयेत् ॥ भग्नांच-
प्रतिमांचैवमत्स्यादिदशकंतथा ॥ २ ॥ गृहेग्निदग्धभग्नाश्चनार्च्यालोकै-
र्वसुन्धरे ॥ एतासांपूजनान्नित्यमुद्वेगंप्राप्नुयाद्गृही ॥ ३ ॥सालिग्रामाःसमाः
पूज्यास्समेषुद्वितयंनहि॥विषमानैवपूज्यास्तुविषमेष्वेकएवहि ॥ ४ ॥

## ४८ अथ सालिग्रामतीर्थप्राशनमहिमा—(नृसिंहपु०)

सालिग्रामशिलातोयंयःपिबेद्विष्णुसन्निधौ ॥ सर्वपापविनिर्मुक्तोवि-
ष्णुसायुज्यमाप्नुयात् ॥ १ ॥

## अथ सालिग्रामलक्षणाध्यायश्रवणफलादिवर्णनम्—

नारदाऽद्यमयाप्रोक्तंसालिग्रामस्यवैभवम् ॥ धार्यंचमुनिनाभक्त्याल-
क्ष्मीपतिमुदेसदा ॥ १ ॥ शृणुयादिममध्यायंसालिग्रामगुणान्वितम् ॥
धर्मार्थकाममोक्षार्थंभक्तिमान्यस्समेप्रियः ॥ २ ॥ सायंप्रातःपठेन्नित्यं-
सालिग्रामस्यवैभवम् ॥ श्राद्धकालेविशेषेणपितॄणांदत्तमक्षयम् ॥ ३ ॥
श्रुत्वेत्थंद्रुहिणमुखेरितंचसालिग्रामस्यप्रभवमखंडपातकघ्नम् ॥ प्राणंसी-
त्पदयुगपंकजेविधातुस्तत्पूजामकुरुतनारदोपिभक्त्या ॥ ४ ॥ नारद-
उवाच ॥ सालिग्रामशिलाभेदलक्षणंमूर्तिनिर्णयः ॥ कथितोभवताब्रह्म-
न्क्षेत्रवर्णंशुभाशुभम् ॥ ५॥ ब्रह्मोवाच ॥ शृणुनारदवक्ष्याम्ययन्नोक्तं-
परिपृच्छसि ॥

## अथ तेषुवर्णभेदेनफलभेदाः-( तत्रैव )

सालिग्रामशिलाग्राह्यामंगलादेशकालतः ॥ श्यामंकृष्णंचनीलंचतथावैपीतवर्णकम् ॥ १ ॥ पांडुरंरक्तवर्णंचकपिलंशुक्लवर्णकम् ॥ धूम्रवर्णंतथादग्धमितिनानाविधाश्शिलाः ॥ २ ॥ पत्नीध्नीकपिलाप्रोक्तानीलालक्ष्मीप्रदास्मृता ॥ पुष्टिवृद्धिप्रदाश्यामाशुक्लामोक्षप्रदायिनी ॥ ३ ॥ पीताधनकरीज्ञेयारक्ताराज्यकरीस्मृता ॥ अतिरक्तामृत्युकरीकृष्णाकीर्तिप्रदायिनी ॥ ४ ॥ धूम्रवर्णामहादुःखंदारिद्र्यंचंददतीशिला ॥

## ४९ अथ वर्णभेदेनमूर्तिक्षेत्रभेदाः-

कपिलोनारसिंहस्स्यादतस्याभस्तुवामनः ॥ वासुदेवस्सितोज्ञेयोरक्तस्संकर्षणस्स्मृतः ॥ १ ॥ दामोदरस्तुनीलाभअनिरुद्धस्तथैवच ॥ श्यामोनारायणोदेवःकृष्णोवैष्णवउच्यते ॥ २ ॥ बहुवर्णअनंतश्चश्रीधरःपीतउच्यते ॥ पांडुरोवासुदेवश्चशुक्लशुक्लअधोक्षजः ॥ ३ ॥ मधुपिंगलवर्णोवैब्रह्ममूर्तिरितिस्मृता ॥ मयाक्षेत्रस्यकथितोविस्तारोमुनिपुंगव ॥ ४ ॥

---

इतिश्रीमत्समस्तभूमंडलमंडनायमाननिखिलदेशावतंसकर्नाटकजनपदसंपदधिष्ठानभूतश्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपालप्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्रीमद्राजाधिराजराजपरमेश्वरप्रौढमतापाप्रतिमवीरनरपतिबिरुदेतेंबरगंडलोकैकवीरयदुकुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडधरणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितश्रीमन्महीशूरपुरवराधीशश्रीकृष्णराजमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेविष्णुक्षेत्रवैष्णवसालिग्रामादिलक्षणनिरूपणंनामषष्ठोनिधिस्संपूर्णः ॥

---

इति श्रीतत्त्वनिध्याख्यग्रन्थे-विष्णुक्षेत्रवैष्णवसा (शा)
लिग्रामादिलक्षणादिनिरूपणंनाम
षष्ठोनिधिस्संपूर्णः ॥ ६ ॥

श्रीः ।

अथ

# श्रीतत्त्वनिधौ–

## सप्तमश्शैवनिधिः ।



### अथ त्रयोदशोत्तरशतस्वयंव्यक्तदिव्यशैवस्थलानि–
( ललितागमेज्ञानपादेशिवलिंगप्रादुर्भावपटले )

### १ अथ भूमेरन्यत्रस्वयंव्यक्तदिव्यशिवस्थलानिपञ्चत-त्त्वलिङ्गस्थलसहितानि–

त्रयोदशोत्तरशतंक्षेत्रंशैवमनूच्यते ॥ ( [1]कैलासाद्रौ ) परशिवः
( [2]सूर्यबिंबे ) सदाशिवः ॥ १ ॥ नारायणेशो ( [3]वैकुंठे ) ( [4]पाताले )
हाटकेश्वरः ॥ ( [5]सूर्यज्योतिषि ) सिद्धेशः पंचामुत्रवसंतिहि ॥ २ ॥ ५ ॥

### २ अथ भारतखण्डस्थाष्टोत्तरशतदिव्यशिवस्थलानि–
( ललितागमेज्ञान० )

अष्टोत्तरशतंभूमौस्थितंक्षेत्रंवदाम्यहम् ॥ ( [1]कैवल्यशैले ) श्रीकंठः
केदारो ( [2]हिमवत्य )–पि ॥ १ ॥ ( [3]काशीपुर्यां ) विश्वनाथः ( श्री [4]शैले )
मल्लिकार्जुनः ॥ ( [5]प्रयागे ) नीलकंठेशो ( [6]गयायां ) रुद्रनामकः ॥ २ ॥
नीलकंठेश्वरस्साक्षात् ( [7]कालंजरपुरे ) शिवः ॥ ( [8]द्राक्षारामे ) तुभीमेशो
( [9]मायूरे ) चांबिकेश्वरः ॥ ३ ॥ ( [10]ब्रह्मावर्ते ) देवलिंगं ( [11]प्रभासे )
शशिभूषणः ॥ वृषध्वजाभिधश्श्रीमान्–( [12]श्वेतहस्तिपुरे )–श्वरः ॥ ४ ॥
गोकर्णेशस्तु ( [13]गोकर्णे ) सोमेशः ( [14]सोमनाथके ) ॥ ( [15]श्रीरूपा )–ख्ये

त्यागराजो(वे[१६]दे)वेदपुरीश्वरः ॥५॥( भीमा[१७]रामे ) तुभीमेशो ( मं[१८]थने )
कालिकेश्वरः ॥ ( मधु[१९]रायां ) चोक्कनाथो ( मा[२०]नसे ) माधवेश्वरः ॥६॥
( श्रीवां[२१]छके ) चंपकेशः ( पंच[२२]वट्यां ) वटेश्वरः ॥ ( गजा[२३]रण्ये ) तुवै-
द्येशः ( ती[२४]र्थाद्रौ ) तीर्थकेश्वरः ॥ ७ ॥ ( कुं[२५]भघोणे ) तुकुंभेशो
( ले[२६]पाक्ष्यां ) पापनाशनः ॥ ( क[२७]ण्वपुर्यां ) तुकण्वेशो ( म[२८]ध्ये ) मध्या-
र्जुनेश्वरः ॥ ८ ॥ ( हरि[२९]हरपुरे ) श्रीशंकरनारायणेश्वरः ॥ ( विरिं-
चि[३०]पुरि ) मार्गेशः ( पंच[३१]नद्यां ) गिरीश्वरः ॥ ९ ॥ ( पं[३२]पापुर्यां ) विरू-
पाक्षः ( सो[३३]माद्रौ ) मल्लिकार्जुनः ॥ ( त्रि[३४]मकूटे ) त्वगस्त्येशः ( सु[३५]ब्र-
ह्मण्ये )-ऽहिपेश्वरः॥ १० ॥ महाबलेश्वरस्साक्षात् ( महा[३६]बलशिलोच्चये)॥
रविणापूजितो ( दक्षिणा[३७]वर्ते )-ऽर्केश्वरस्स्वयम् ॥ ११ ॥ ( वेदा[३८]रण्ये )
महापुण्यवेदारण्येश्वराभिधः ॥ मूर्तित्रयात्मकः ( सो[३९]मपुर्यां ) सोमेश्वरा-
भिधः ॥ १२ ॥ ( अवं[४०]त्यां ) रामलिंगेशः ( का[४१]श्मीरे ) विजयेश्वरः ॥
( महानंदिपु[४२]रे ) साक्षान्महानंदिपुरेश्वरः ॥ १३ ॥ ( कोटि[४३]तीर्थे )
तुकोटीशो ( वृ[४४]द्धे ) वृद्धाचलेश्वरः ॥ महापुण्येतत्र ( कं[४५]कुद्गिरौ ) गंगा-
धरेश्वरः ॥ १४ ॥ ( चामरा[४६]जाख्यनगरे ) चामराजेश्वरस्स्वयम् ॥
नंदीश्वरो ( नंदि[४७]गिरौ ) चंडेशो ( बधिरा[४८]चले ) ॥ १५ ॥ नंजुंडेशो
( गे[४९]रपुरे ) ( शत[५०]शृंगे )-ऽधिपेश्वरः ॥ ( घनानंदा[५१]चले ) सोमो ( न[५२]ल्लूरे )
विमलेश्वरः ॥ १६ ॥ ( नीडा[५३]नाथपुरे ) साक्षान्नीडानाथेश्वरस्स्वयम् ॥
( ए[५४]कांते ) रामलिंगेशः ( श्री[५५]नागे ) कुंडलीश्वरः ॥ १७ ॥ ( श्रीकन्[५६]या-
यां ) त्रिभंगीशः ( उ[५७]त्संगे ) राघवेश्वरः ॥ ( म[५८]त्स्यतीर्थे ) तुतीर्थेशः
( त्रि[५९]कूटे ) तांडवेश्वरः ॥ १८ ॥ ( प्रसन्ना[६०]ख्यपुरे ) मार्गसहायेशोवर-
प्रदः ॥ ( गं[६१]डक्यां ) शिवनाभस्तु ( श्री[६२]पतौ ) श्रीपतीश्वरः ॥ १९ ॥
( ध[६३]र्मपुर्यां ) धर्मलिंगं ( क[६४]न्याकुब्जे ) कलाधरः ॥ ( वाणि[६५]ग्रामे ) विरिं-
चेशो ( ने[६६]पाले ) नकुलेश्वरः ॥ २० ॥ मार्कंडेयो ( जग[६७]न्नाथे ) स्वयंभूः
( नर्म[६८]दातटे ) ॥ ( ध[६९]र्मस्थले ) मंजुनाथोव्यासेशस्तु ( त्रि[७०]रूपके )॥ २१ ॥

( स्वर्णावत्यां[७१] ) कलिंगेशो ( निर्मले[७२] ) पन्नगेश्वरः ॥ ( पुंडरीके[७३] ) जैमि-
नीशो–( ऽयोध्यायां[७४] ) मधुरेश्वरः ॥ २२ ॥ ( सिद्धवट्यां[७५] ) तुसिद्धेशः
( श्रीकूर्मे[७६] ) त्रिपुरांतकः ॥ ( मणिकुंडलतीर्थे[७७] ) तुमणिमुक्तानदीश्वरः ॥
॥ २३ ॥ ( वटाटव्यां[७८] ) कृत्तिवासाः ( त्रिवेण्यां[७९] ) संगमेश्वरः ॥
( स्तनिता[८०] )–ऽऽख्येतुमल्लेशः (इंद्रकीले[८१])–ऽर्जुनेश्वरः॥ २४ ॥( शेषाद्रौ[८२] )
कपिलेशस्तु ( पुष्पे[८३] ) पुष्पागिरीश्वरः ॥ भुवनेशः ( चित्रकूटे[८४] ) ( तूञ्जि-
न्यां[८५] ) कालिकेश्वरः ॥ २५ ॥ ( ज्वालामुख्यां[८६] ) शूलटंको ( मंगल्यां[८७] )
संगमेश्वरः ॥ बृहतीशः ( तंजापुर्यां[८८] ) रामेशो ( वह्निपुष्करे[८९] ) ॥ २६ ॥
( लंकाद्वीपे[९०] ) तुमत्स्येशः कूर्मेशो ( गंधमादने[९१] ) ॥ ( विंध्याचले[९२] )
वराहेशोनृसिंहस्स्याद् ( अहोबले[९३] ) ॥ २७ ॥ ( कुरुक्षेत्रे[९४] ) वामनेश-
स्ततः ( कपिलतीर्थके[९५] )॥ तथापरशुरामेशः ( सेतौ[९६] ) रामेश्वराभिधः॥
॥ २८॥ ( साकेते[९७] ) बलरामेशोबौद्धेशो ( वारणावते[९८] )॥ ( तत्त्वक्षेत्रे[९९] )
चकल्कीशःकृष्णेशस्स्यान् ( महेन्द्रके[१००] ) ॥ २९ ॥ १००॥

## ३ अथ पृथ्व्यादिपञ्चभूततंत्रादिलिङ्गानि–( तत्रैव )

एकांबरेश्वरः पृथ्वीलिंगं ( कांचीपुरे[१] ) शिवः ॥ जललिंगं ( जंबुना-
थे[२] ) तिरुवाननदीपतिः ॥ १ ॥ अरुणाचलेश्वरस्तेजोलिंगंतद् ( अरुणा-
चले[३] ) ॥ ( कालहस्तिगिरौ[४] ) वायुलिंगंनागाभिपूजितम् ॥ २ ॥
( चिदंबरे[५] ) व्योमलिंगंसदादेवैर्निषेवितम् ॥ ( छायावने[६] ) महापुण्येतत्र
च्छायावनेश्वरः ॥ ३ ॥ ( हिरण्यगर्भक्षेत्रे[७] ) तुमहादेवेश्वरस्स्वयम् ॥
क्षेत्रे–( ह्याम्रातका[८] )–रिण्ये सूक्ष्मेश्वरइतिस्थितः ॥ ४ ॥ पृथ्व्यादिपं-
चतत्त्वानांलिंगानिस्मरतांनृणाम् ॥ मुक्तिःकरस्थाभवतिनात्रकार्याविचा-
रणा ॥ ५ ॥ त्रयोदशोत्तरशतस्थानानिपरमेशितुः ॥ प्रातःकालेतुपू-
र्जातेस्मर्तव्यानिमनीषिभिः ॥ ६ ॥ पुण्यकर्माणिसर्वाणितैःकृतानी-
हजन्मनि ॥ तेषांफलप्रवचनेशक्तःशेषोपिनक्वचित् ॥७॥८॥ ११३॥

### ४ अथ शैवनवबेरनामानि-( स्कांदे )

विघ्नेशंचत्रिशूलाख्यमुमेशंचंद्रशेखरम् ॥ सोमास्कंदेश्वरंगौरींचंडेशं-
चकिरातकम् ॥ १ ॥ महानृत्तप्रवृत्तंचनवबेराःप्रकीर्तिताः ॥ ९ ॥

### ५ अथ लिंगभेदतत्पूजाक्रमतत्फलानि-( शिवरहस्ये )

अथवक्ष्येविशेषेणलिंगानिविविधानिच ॥ तत्तत्फलानिवक्ष्यामिशृणुदे-
विशुभानिच ॥ १ ॥ ईश्वर उवाच ॥ सैकतंतांडुलंचान्नंनदीमृद्गोमयंतथा ॥
नवनीतंचरुद्राक्षंभस्मचंदनकूर्चजम् ॥ २ ॥ पुष्पमालागुडंपि ष्टंक्षणिका-
श्चचतुर्दश ॥ क्षणिकेमंडलेतो येत्वात्मार्थयजनंस्मृतम् ॥ ३ ॥ तंडुला-
नांचलिंगेनपुत्रबाहुल्यमाप्नुयात् ॥ सर्वरोगविनाशायगोमयंतुप्रकीर्ति-
तम् ॥ ४ ॥ केशास्थिसंभवंलिंगंसर्वशत्रुविनाशनम् ॥ आसुरंलवणो-
त्थंचसर्वलोकवशंकरम् ॥ ५ ॥ स्तम्भनेरजनीपिष्टसंभवंलिंगमुत्तमम् ॥
तंडुलोद्भवपिष्टेनलिंगंविद्याप्रदंस्मृतम् ॥ ६ ॥ दधिदुग्धमयंलिंगंकीर्तिसा-
म्राज्यवर्धनम् ॥ दूर्वागुडूचीसंभूतमपमृत्युनिवारणम् ॥ ७ ॥ इक्षुदंडमयं-
लिंगंस्मृतमुच्चारणेपरम् ॥ इक्षुसारमयंलिंगंबहुद्रविणकामकृत् ॥ ८ ॥
स्फाटिकंबहुसौम्यत्वंतत्फलंमुनिभिःश्रुतम् ॥ पितॄणांमुक्तयेपूज्यंलिंगं-
रजतसंभवम् ॥ ९ ॥ हेमजंस्वर्गलोकस्यप्राप्तयेपूजयेत्पुमान् ॥ पूजयेत्तांम्र-
जंलिंगंपुष्टिकामस्तुसंततम् ॥ १० ॥ तथैवपूजयेन्मर्त्यःलिंगंपित्तलसं-
भवम् ॥ कीर्तिकामोर्चयेल्लिंगंसदाकांस्यसमुद्भवम् ॥ ११ ॥ शत्रुमार-
णकामस्तुलिंगंलोहमयंसदा ॥ शोणचंदनजंलिंगमायुष्कामोर्चयेत्पुमान्
॥ १२ ॥ ज्वरशांत्यैचंदनोत्थमर्चयेल्लिंगमुत्तमम् ॥ कस्तूरीसंभवंलिंगं-
ग्रंथकामःसमर्चयेत् ॥ १३ ॥ लिंगंगोरोचनोत्थंचरूपकामस्तुपूजयेत् ॥
कांतिकामस्तुसततंलिंगंकौंकुमकेसरम् ॥ १४ ॥ श्वेतागरुसमुद्भूतंमहा-
शक्तिविवर्धनम् ॥ सर्वेषांकामदंलिंगंकृष्णागरुसमुद्भवम् ॥ १५ ॥ यक्षकर्दम-
संभूतंलिंगंप्रीतिविवर्धनम् ॥ गोधूमपिष्टजंलिंगंगोकामोनित्यमर्चयेत् ॥
॥ १६ ॥ मुद्गपिष्टमयंलिंगंपूजयेदन्नमाप्नुयात् ॥ माषपिष्टमयंलिंगंनि-

त्यंपुष्टिविवर्धनम् ॥ १७ ॥ [४३]चणकोद्भवपिष्टेनलिंगंसिद्धिकरंपरम् ॥ लिंगं-
व्रीहि[४४]र्मयंपूज्यंयशस्कामेननित्यशः॥ १८॥ यावद्धान्य[४५]मयंलिंगंवसंतेपूज-
येन्नरः ॥ कामवत्सुप्रियोनित्यंभवेत्स्त्रीणांहिमानवः ॥ १९ ॥ ग्रीष्मे-
चमल्लि[४६]कापुष्पसंभवंलिंगमुत्तमम् ॥ पूजयित्वानरोभक्त्याप्राप्नोतिमहतीं-
कृषिम् ॥ २० ॥ वर्षासुपूजयेद्भक्त्यालिंगंकनक[४७]पुष्पजम् ॥ इहचामु-
ष्मिकेलोकेसुखीभवतिमानवः ॥ २१ ॥ नीलो[४८]त्पलमयंलिंगंकृत्वाशर-
दिमानवः ॥ पूजयापरमांसिद्धिंभक्त्याप्राप्नोतिमानवः ॥ २२ ॥ हेमं-
ते[४९]जातिकुसुमैःलिंगंकृत्वामनोरमम् ॥ भक्त्यासमर्च्यमतिमाञ्छिवेनसह-
मोदते ॥ २३ ॥ शिशिरेसर्वपुष्पो[५०]त्थंलिंगमभ्यर्च्यमानवः ॥ सर्वपापं-
विधूयाशुमोदतेब्रह्मणासह ॥ २४ ॥ पाषा[५१]णसंभवंलिङ्गंसंपूज्यपरया-
मुदा ॥ सर्वान्कामानवाप्याथप्राप्नोतिपरमांगतिम् ॥ २५ ॥ येनकेन-
प्रकारेणय[५२]स्यकस्यापिवस्तुनः ॥ कृत्वालिंगंसमभ्यर्च्यगाणापत्यमवाप्नु-
यात् ॥ २६ ॥ ( तथावक्ष्यमाणरीत्या[५३]पद्मरागका[५४]श्मीर पु[५५]ष्यरागेन्[५६]द्रनीलगो-
[५७]मेदक[५८]गारुत्मत[५९]विद्रुममौक्ति[६०]कहीर[६१]कपा[६२]रदबा[६३]णलिंगान्यपिपूज्यानि ) ॥ ६३

## ६ अथ शिवलिंगार्चनस्यावश्यकत्वम्–( शिवरहस्ये )

विनालिंगार्चनंयस्यकालोगच्छतिनित्यशः ॥ समहापातकीतस्य-
दुर्वृत्तस्यदुरात्मनः ॥ १ ॥ एकेनसर्वदानानिव्रतानिविविधानिच-
॥ तीर्थानिविविधायज्ञाःशिवार्चाचैकतःसमाः ॥ २ ॥ कलौ-
लिंगार्चनंश्रेष्ठंयथालोकेप्रशस्यते ॥ तथानास्तीतिनास्तीतिशास्त्राणामेष-
निश्चयः ॥ ३ ॥ भुक्तिमुक्तिप्रदंलिंगंविविधापन्निवारणम् ॥ पूज-
यित्वानरोभक्त्याशिवसायुज्यमाप्नुयात् ॥ ४ ॥

## अथ पाषाणाद्यादिलिङ्गेषूत्तरोत्तरश्रैष्ठ्यम्–( शिवरहस्ये )

पाषाणात्स्फाटिकंश्रेष्ठंस्फाटिकात्पद्मरागजम् ॥ पद्मरागाच्चकाश्मी
रंकाश्मीरात्पुष्यरागजम् ॥ १ ॥ इंद्रनीलंपुष्यरागादिंद्रनीलाच्चगो-
मेदम् ॥ ततोगारुत्मतंश्रेष्ठंविद्रुमंचततःपरम् ॥ २ ॥ मौक्तिकंरजतं-

तस्माद्रजताच्चसुवर्णजम् ॥ सुवर्णादधिकंश्रेष्ठंहीरकंपारदंपरम् ॥ ३ ॥ पारदस्यगुणंवक्तुंनशक्नोमिहिशंकरि ॥ पार्थिवेनतुलिंगेनबहवःसिद्धिमागताः ॥ ४ ॥ देवासुरमनुष्याश्चसिद्धगंधर्वयक्षकाः ॥ १० ॥

## अथ युगभेदेनलिंगभेदाः-

कृतेमणिमयंलिंगंत्रेतायांहेमसंभवम् ॥ द्वापरेपारदंश्रेष्ठंपार्थिवंतुकलौयुगे ॥ १ ॥ ४ ॥

## अथ पार्थिवलिंगस्यात्युत्तमत्वम्-

उक्तेष्वेतेषुलिंगेषुलिंगत्रयमनुत्तमम् ॥ मृद्बाणेरसैलिंगाख्यंतेषामाद्यमनुत्तमम् ॥ १ ॥ तदेवपार्थिवंलिंगंक्षिप्रसिद्धिप्रदंभुवि ॥ अष्टमूर्तिषुसर्वासुमूर्तिर्मेपार्थिवीवरा ॥ २ ॥ एतस्मात्पार्थिवंलिङ्गंलिंगेष्वन्येष्वनुत्तमम् ॥ यथासर्वेषुदेवेषुज्येष्ठःश्रेष्ठोमहेश्वरः ॥ ३ ॥ तथासर्वेषुलिंगेषुपार्थिवंलिंगमुत्तमम् ॥ यथासर्वेषुवेदेषुप्रणवोहिमहान्स्मृतः ॥ ४ ॥ तथैवपार्थिवंलिंगंसुसंपूज्यंमहेश्वर ॥ पार्थिवाराधनंधर्म्यमायुर्वर्धनमुत्तमम् ॥ ५ ॥ तुष्टिदंपुष्टिदंभुक्तिमुक्तिदंसिद्धिदंशुभम् ॥

## अथ स्त्रीणांशिवलिङ्गमूर्त्यादिपूजास्पर्शौ-

पंचाक्षरेणकर्तव्यंस्त्रीभिश्शङ्करपूजनम् ॥ षडक्षरेणकर्तव्यंपुरुषैस्तुप्रयत्नतः ॥ १ ॥ विहितश्चरलिङ्गेषुस्पर्शस्त्रीणांप्रयत्नतः ॥ स्थावरेष्वपिदिव्येषुसमन्त्रंपर्वणिस्पृशेत् ॥ २ ॥

## ७ अथ शिवनिर्माल्यानि-

देवस्वंदेवताद्रव्यंनैवेद्यंचनिवेदितम् ॥ चंडद्रव्यंबहिःक्षिप्तंनिर्माल्यंषड्विधंस्मृतम् ॥ १ ॥ ६ ॥

## अथ शिवनिर्माल्यंग्राह्यम्-( बृहज्जाबालोपनिषदादौ )

रुद्रभुक्तंतुभुञ्जीयात्।रुद्रपीतंपिबेत्।रुद्राघ्रातंजिघ्रेत्॥रुद्रेणपीतंपिबन्ति।तस्मान्निर्माल्यमेवभक्षयीत।निर्माल्यमेवनिषेवेत ॥ – ॥ बाणलिङ्गेचलौहेचसिद्धलिङ्गेस्वयंभुवि ॥ प्रतिमासुचसर्वासुनदोषोमाल्यधारणे ॥

॥ १ ॥ द्रव्यमन्यंफलं तोयंशिवस्वंनक्वचित्स्पृशेत्।निर्मलत्वाच (निर्माल्यं) नृणांनैर्मल्यकारणात् ॥ २॥ तिलषोडशभागंचतृणाग्र्यम्बुकणोपमम् ॥ पादोदकप्रसादान्नंसंगृह्णन्मोक्षमाप्नुयात् ॥ ३ ॥ लिङ्गेस्वयंभवेबाणेरत्नजेरसनिर्मिते ॥ सिद्धप्रतिष्ठितेताम्ररौप्यकाञ्चनलोहजे ॥ ४ ॥ प्रतिमासुचसर्वासुनचण्डाधिकृतिर्भवेत् ॥ चण्डाधिकारोनोयत्रभोक्तव्यंतत्रभक्तितः ॥ ५ ॥

८ अथ साष्टाङ्गप्रणतिलक्षणम्—

जानुबाहुशिरोवक्षोगण्डान्ताङ्गाष्टकंयदा॥दण्डवद्भुविदेवार्थंतदष्टाङ्गनतिर्भवेत् ॥ १ ॥ १ ॥

९ अथ पार्थिवचरस्थावरलिंगेषुपञ्चसूत्र्यावश्यकत्वादि—

पंचसूत्रीविधानंतुपार्थिवे नविचारयेत् ॥ यथाकथंचिद्रूपेणरमणीयंप्रकल्पयेत् ॥ १ ॥ अखंडंतद्धिकर्तव्यंनद्विखंडंतुकारयेत् ॥ द्विखंडंहिप्रकुर्वाणोनैवपूजाफलंलभेत् ॥ २ ॥ रत्नजंहीरजंलिङ्गंपारदंस्फाटिकंतथा ॥ पार्थिवंपिष्टजंपौष्पमखंडंतुप्रकारयेत् ॥ ३ ॥ अखंडंस्थावरं लिंगंद्विखंडंचरमेवच ॥ येकुर्वंतिनरामूढानपूजाफलभागिनः ॥ ४ ॥

१० अथ पार्थिवलिंगनिर्माणतत्पूजाक्रमः—

अथशंकरभक्तानांपार्थिवार्चानिगद्यते॥ वेदोक्तविधिनासम्यक्संपूर्णफलसिद्धये ॥ १ ॥ यथोक्तविधिनास्नात्वासंध्यांकृत्वायथाविधि ॥ ब्रह्मयज्ञंविधायादौततस्तर्पणमाचरेत् ॥ २ ॥ नित्यकर्मयथाशास्त्रंविधायानंतरंपुमान् ॥ पूजयेत्परयाभक्त्यापार्थिवंलिंगमुत्तमम् ॥ ३ ॥ नदीतीरेतटाकेचपर्वतेकाननेगृहे ॥ शिवालयेशुचौदेशेपार्थिवार्चाविधीयते ॥ ॥ ४ ॥ शुद्धप्रदेशसंभूतांमृदमाहृत्ययत्नतः ॥ श्वेताःशोणाःपीतकृष्णाः मृदोवर्णचतुष्टयाः ॥ ५ ॥ यथालब्धमृदाकार्यानलब्धेमृत्तिकोत्तमे ॥ आनीयमृत्तिकांशुद्धदेशात्स्निग्धांप्रयत्नतः ॥ ६ ॥ शोधितांसजलैर्युक्तां पिंडीकृत्यशनैश्शनैः॥पश्चाल्लिंगंविधायाशुक्रमेणानेनभक्तिमान्॥७॥—॥

हरोमहेश्वरश्शंभुः शूलपाणिर्महेश्वरः ॥ शिवः पशुपतिश्चैवमहादेवइतिक्रमात् ॥ १ ॥ मृदाहरणसंघट्टप्रतिष्ठावाहनंतथा ॥ स्नपनंपूजनंचैवक्षमापणविसर्जनम् ॥ २ ॥—ॐ हरायनमइति मृदाहरणमित्यादिप्रकारेण-षोडशोपचारपूजांकृत्वा पंचाक्षरंजप्त्वा—नमओंकाररूपायनमोक्षरवपुर्धृते ॥ नमोनादात्मनेतुभ्यंनमोबिंदुकलात्मने ॥ १ ॥ अलिंगलिंगरूपायरूपातीतायतेनमः ॥ त्वंमातासर्वलोकानांत्वमेवजगतांपिता ॥ २ ॥ त्वंभ्राातात्वंसुहृन्मित्रंत्वंपिताप्रपितामहः ॥ पार्थिवस्यास्यलिंगस्ययन्मयापूजनंकृतम् ॥ ३ ॥ तेनश्रीभगवान्रुद्रोवांछितार्थंप्रयच्छतु ॥ शिवोदाताशिवोभोक्ताशिवस्सर्वमिदंजगत् ॥ ४ ॥ शिवोयजतिसर्वत्रयश्शिवस्सोहमेवच ॥—एतानिशक्त्युपहृतानिमयात्रशंभोलिंगानिपूजनविधौसकलानिकृत्वा ॥ पूजाफलंममसमस्तमुपैत्वविघ्नंपूर्णंविधेहिपरमेश्वरपाहिमांत्वम् ॥ ५ ॥ हृत्पद्मकर्णिकामध्येचांबयासहशंकर ॥ प्रविशत्वंमहादेवसर्वैरावरणैस्सह ॥ ६ ॥ आवाहनंनजानामिनजानामिविसर्जनम् ॥ पूजाविधिंनजानामिक्षमस्वपरमेश्वर ॥ ७ ॥ यांतुदेवगणास्सर्वेपूजामादायमत्कृताम् ॥ इष्टकाम्यार्थसिद्ध्यर्थंपुनरागमनायच ॥ ८ ॥ इतिसंप्रार्थ्यनत्वाचजलेलिंगंविसर्जयेत् ॥

## ११ अथ बाणलिंगस्यलक्षणम्—

त्रिपञ्चसप्तधायत्तुतुलातुलितमास्तिकाः ॥ नयातिन्यूनतांतत्तुबाणलिङ्गमितीरितम् ॥ १ ॥ १ ॥

## अथ पूजायांनिषिद्धलिंगानि—

अक्षादल्पपरीमाणंनलिङ्गंकुत्रचिन्नरः ॥ कुर्वीताङ्गुष्ठतोह्रस्वंनकदाचित्समाचरेत् ॥ १ ॥ ( 'अक्षाः' ८० गुञ्जाः—"गुञ्जाः पञ्चाद्यमाषकाः। ते षोडशाक्षः" इत्यमरात् )

## १२ अथ नवविधचरलिंगानांलक्षणानि—

नवाष्टसप्तांगुलिकंलिङ्गंश्रेष्ठमिहोच्यते ॥ षट्पञ्चकचतुर्मानंमध्यमं-

त्रिविधंस्मृतम् ॥ १ ॥ द्वित्र्येकाङ्गुलिलिङ्गंयत्रिविधंतत्कनिष्ठकम् ॥ एवंनवविधंप्रोक्तंचरलिङ्गंयथाक्रमात् ॥ २ ॥ ९ ॥

१३ अथ पञ्चसूत्रीनिर्णयः–( सिद्धान्तशेखरेशैवागमेच )

लिङ्गमस्तकविस्तारोलिङ्गोच्छ्रायसमोमतः ॥ परिधिस्तत्रिगुणितस्तद्वत्पीठंव्यवस्थितम् ॥ १ ॥ प्रणालिकातथैवस्यात्पञ्चसूत्रीविनिर्णयः ॥–॥ (अस्यार्थः) ॥ लिङ्गमस्तकविस्तारंलिङ्गोच्चतासमंकृत्वातत्रिगुणसूत्रवेष्टनार्हंलिङ्गस्थौल्यंकृत्वातत्समंवृत्तंचतुरश्रंवापीठविस्तारमधश्चोर्ध्वंचकुर्यात् ॥ पीठोच्चतांतुलिङ्गोच्चताद्विगुणाम् ॥ पीठमध्येलिङ्गाद्विगुणस्थूलंपीठोच्चतातृतीयांशेनखण्डंकत्वातस्योर्ध्वमधश्चवप्रद्वयंत्रयंवाकृत्वालिङ्गविस्तारषष्ठांशेनपीठोपरिबाह्यमेखलांकृत्वातदन्तस्संलग्नंतत्समंखातंकृत्वापीठाद्बहिर्लिङ्गसमदीर्घांमूलेदैर्घ्यसमविस्तारामग्रेतदर्धविस्तारांतृतीयांशेनमध्यखातांपीठवत्समेखलांप्रनालिकांकुर्यात् ॥

अथ रसलिंगस्यापिसर्वेभ्यःश्रैष्ठ्यम्–

मृद्बाणरसलिङ्गानिश्रेष्ठान्येतेषुवस्तुतः ॥ त्रिष्वाद्यंबाणमुत्कृष्टंरसलिङ्गंततोधिकम् ॥ १ ॥

---

१४ अथ रुद्राष्टकाख्यदानेविशेषः–( हेमाद्रौदानखंडे )

शृणुदेवमुनेगुह्यंदानंसर्वार्थदंनृणाम् ॥ रुद्राष्टकमितिख्यातंतत्पत्नीपुत्रसंयुतम् ॥ १ ॥ मध्येचतुर्मुखोपेतामितिमेभगवान्हरिः ॥ यथाहपूर्वंतत्सर्वंवदामितवनारद ॥ २ ॥ रुद्रोभवश्चशर्वश्चापीशःपशुपतिस्तथा ॥ भीमउग्रोमहादेवएतेरुद्राःप्रकीर्तिताः ॥ ३ ॥ जटिनश्चर्मवसनास्सर्वेखट्वांगशूलिनः ॥ तेषांभार्याश्चपुत्राश्चनामानिकथयामिते ॥ ४ ॥ सौवर्चलाचदेवीचविकेशीचशिवातथा ॥ स्वाहाविशाचदीक्षाचरोहिणीचयथाक्रमात् ॥ ५ ॥ ता वै सुवेषधारिण्यःसर्वाभरणभूषिताः ॥ रुद्रपत्न्यइमाश्चाष्टौपुत्रांश्चशृणुनारद ॥ ६ ॥ शनैश्चरश्चशुक्रश्चलोहितांगोमनो-

जवः ॥ वसंतस्स्वर्गसंतानौर्बुधश्चैवयथाक्रमात् ॥ ७॥ तेबालवेषाःकर्तव्याःशिखिनोदंडपाणयः ॥ पुण्यकालेतुसंप्रातेशनौवाभूतिमिच्छता ॥ ॥ ८ ॥ जन्मर्क्षेषुविशेषेणदातव्यंमुनिसत्तम । चतुरश्रांसमांभूमिलिप्त्वागोमयवारिणा ॥ ९ ॥ चतस्रस्तस्यरेखाःस्युःप्राक्तिर्यक्चैवसर्वतः ॥ हस्तमात्रंद्विहस्तंवानवकोष्ठसमन्वितम् ॥ १० ॥ स्थंडिलंतत्रपद्मानितंडुलैश्चप्रकल्पयेत् ॥ ब्रह्माणंमध्यमेकोष्ठेसौवर्णंविनिवेशयेत् ॥ ११ ॥ छंदोदेवींचतत्पार्श्वेतदर्धेनप्रकल्पयेत् ॥ सौवर्णानष्टरुद्रांश्चब्रह्मार्द्धेनविनिर्मितान् ॥ १२ ॥ प्रागाद्युत्तरपूर्वांश्चपरितःपरिकल्पयेत् ॥ तस्याप्यर्धेनसौवर्णान्प्रत्येकंरुद्रपार्श्वतः ॥ १३ ॥ तेषांदेवीश्चपुत्रांश्चकल्पयित्वार्चयेत्पुमान् ॥ स्वस्वमंत्रेणपूजास्यान्नमस्कारयुतेनच ॥ १४ ॥ ब्रह्मादीन्पूजयेद्गंधपुष्पधूपदीपकैः ॥ प्रदक्षिणंततःकृत्वाप्रणम्यचयथाक्रमम् ॥ १५॥ प्रत्येकमेकंप्रागादीन्संपूज्यैवंप्रदापयेत् ॥ पूजयित्वोपदेष्टारंदद्यान्मंत्रेणमध्यमम् ॥ १६॥ प्रीयतांभगवान्ब्रह्मापरमेष्ठीपितामहः ॥ एवंरुद्राष्टकोपेतंदानंदद्याद्यथाविधि ॥ १७॥ सर्वपापविनिर्मुक्तःसर्वसिद्धिमवाप्यच ॥ आयुरारोग्यसंयुक्तःपुत्रबान्धववान्सुखी ॥ १८ ॥ भुक्त्वाभोगान्यथेच्छंचस्वर्गंमोक्षंचविंदति ॥ २५ ॥

## १५ अथ रुद्राष्टकान्तर्गतब्रह्मध्यानम्–( ब्रह्मांडपुराणे )

पद्मपत्रासनस्थश्चब्रह्माकार्यश्चतुर्मुखः ॥ अक्षमालांस्रुवंबिभ्रत्पुस्तकंचकमंडलुम् ॥ १ ॥ वासःकृष्णाजिनंतस्यपार्श्वेहंसस्तथैवच ॥ पाटलवर्णः ॥ १ ॥

## १६ अथ मैलारलिंगध्यानस्तोत्रम्–( स्कांदपुराणे )

मैलारंमालचीनाथंसर्वजंतुहितेरतम् ॥ भजामिभजतांकल्पपादपंपरयामुदा ॥ १ ॥ शुभ्रांगंभूषणैर्युक्तंहरिद्राचूर्णसंयुतम् ॥ पीतांबरमुदारांगंभजतांकामदंसदा ॥ २ ॥ त्रिशूलंडमृगंखड्गंवरदंचकरांबुजैः ॥ बिभ्राणंप्राणिरक्षार्थंसर्वकालमतन्द्रितम् ॥ ३ ॥ देवानांरक्षणार्थायदान-

वानांवधायच । मैलाररूपमास्थायशङ्करश्शंकरोभवत् ॥ ४ ॥ गजासिंहवराहर्क्षव्याघ्ररूपधरान्खलान् ॥ दुष्टाञ्छत्रून्विनिघ्नंतुंतुरगेणचचारह ॥ ५ ॥ शुकैःप्रभूतनिनदैःकंठबद्धकपर्दकैः ॥ द्वारदेशेस्थितैःशश्वत्सेव्यमानमतंद्रितैः ॥ ६ ॥ पूर्वदेवादिभिर्देवैरावृतंभक्तवत्सलम् ॥ सर्वदासर्वरक्षार्थमुद्यतंतंभजाम्यहम् ॥ ७ ॥ भानुवारेमनुष्याणामुत्सवेसार्वकालिके ॥ यस्यतोषंसंजनयेत्पायसेनगुडेनवा ॥ ८ ॥ यस्यसंसेवनान्नृणांधनधान्यादिसंपदः ॥ अक्लेशेनैवसिध्यंतिगोधनंवाजिनांचयः ॥ ९ ॥ तंवंदेवरदंदेवंवारिजस्थंमहेश्वरम् ॥ संसारदुःखसंतापनाशनायसुखायच ॥ १० ॥ स्मरणाद्यस्यदेवस्यमैलारस्यामितौजसः ॥ हारिद्रयाक्तंरम्यंभंडारंभजतांनृणाम् ॥ ११ ॥ सर्वकामफलावाप्तिः सद्यएवभविष्यति ॥ यस्यचिह्नंसुवर्णाढ्यंभंडारंभजतांसदा ॥ १२ ॥ हेमभंडारमतुलंभवेत्तस्यनसंशयः ॥

## १७ अथ मैलारस्त्रीमालाचीस्तोत्रम्–( स्कांदपुराणे )

मल्लारपत्नीमालाचीमहामायाचमालती ॥ मायालक्ष्मीर्महालक्ष्मीर्मायावत्यभिमानिनी ॥ १ ॥ मैलारयोगिनींचैवभैरवीचांबिकातथा ॥ द्वादशैतानिनामानिरहस्यानितवांबिके ॥ २ ॥ गोपनीयानियत्नेननवक्तव्यानिकस्यचित् ॥ नामानियानितेदेविप्रत्यहंभक्तिभावतः ॥ ३ ॥ अष्टवारंत्रिवारंवात्रिसंध्यंयोजपेन्नरः ॥ नतस्यभीतिःशत्रुभ्यःनव्याधिभ्यःकदाचन ॥ ४ ॥ नचाग्निशस्त्रचोरेभ्यःसनित्यंविजयीभवेत् ॥ तस्यचिंतितकार्याणिसिध्यंत्येवनसंशयः ॥ ५ ॥

---

## १८ अथ विभूत्यादिमाहात्म्यम्–( शिवरहस्ये )

वेदसिद्धेषुधर्मेषुत्रिपुंड्रंभस्मकुंठनम् ॥ रुद्रलिंगार्चनंचैवमुख्यमाहुर्द्विजास्तिकाः ॥ १ ॥ त्रिपुंड्रेणविनाश्राद्धंत्रिपुंड्रेणविनाहुतम् ॥ त्रिपुंड्रेणविनादानंराक्षसंतत्प्रकीर्तितम् ॥ २ ॥ वेदस्याध्ययनेशूद्रोनाधिकारीयथाभवेत् ॥ त्रिपुंड्रेणविनाविप्रोनाधिकारीशिवार्चने ॥ ३ ॥ धिग्भ-

स्मरहितंफालंधिग्ग्राममशिवालयम् ॥ धिगनीशार्चनंजन्मधिग्विद्यामशि-
वाश्रयाम् ॥ ४ ॥ शिवलिंगार्चनंश्रौतंनकार्यंभस्मनाविना ॥ यावंतिश्रौ-
तकर्माणिक्रियंतेप्रत्यहंद्विजैः ॥ ५ ॥ तावंत्यपिचकार्याणिभस्मधारण-
पूर्वकम् ॥ भस्मधारणहीनांगोयदिविप्रोभविष्यति ॥ ६ ॥ सविप्रःसर्व-
थाराज्ञानिर्वास्योनात्रसंशयः ॥ तस्मात्सर्वप्रयत्नेनत्रिपुंड्रंधार्यमन्वहम् ॥
॥ ७ ॥ मंत्रपूतंसितंभस्मललाटेयत्रवर्तते ॥ सएवब्राह्मणोराजन्सत्यंस-
त्यंनसंशयः ॥ ८ ॥ ब्राह्मणोपिस्वयंमोहादूर्ध्वपुंड्रंकरोतियः ॥ सपत-
त्येवनरकेयावदाचंद्रतारकम् ॥ ९ ॥ श्रीकरंचपवित्रंचशोकरोगनिवा-
रणम् ॥ लोकेवशीकरंप्रोक्तंभस्मत्रैलोक्यपावनम् ॥ १० ॥ विभूति-
र्यस्यनोफालेनांगेरुद्राक्षमालिकाः ॥ नास्येशिवमयीवाणीतंत्यजेदंत्यजं-
यथा ॥ ११ ॥-॥ ( स्कांदे )-संध्यावन्दनवन्नित्यंभस्मरुद्राक्षधारणम् ॥
श्रुतिस्मृतिपुराणादौसंघुष्टंनिश्चितंहितम् ॥ १ ॥ कदापिननिषिद्धंतदूर्ध्व-
पुंड्रादिवत्क्वचित् ॥-॥ येमामनन्यशरणास्सितभस्मफालारुद्राक्षकंकण-
लसत्करदण्डयुग्माः ॥ येपूजयन्त्यहरहश्श्रुतितत्त्वभूतंतानेवघोरनरकादह-
मुद्धरिष्ये ॥ १ ॥ पञ्चाक्षरजपंभस्मस्नानंलिङ्गार्चनंत्रयम् ॥ कदाचि-
दपिनत्याज्यंयथाशक्तिसमाचरेत् ॥ २ ॥ भूत्यैवोद्धूलनंतिर्यक्त्रिपुण्ड्र-
स्यचधारणम् ॥ नैवप्रमदितव्यंवैप्रमादपिकदाचन ॥ ३ ॥ द्विजःकुर्या-
त्तुमन्त्रेणतत्त्यागीपतितोभवेत् ॥ वहिष्ठस्सर्वधर्मेभ्यस्ततस्तन्नित्यमाच-
रेत् ॥ ४ ॥-॥ ( शिवपुराणे )-ब्रह्मकुंडसमुद्भूतंभस्मदद्याद्विजातये ॥
चतुरर्णवपर्यंतातेनदत्तावसुंधरा ॥ १ ॥-॥ ( पाराशरे )-प्राप्तेभोजन-
कालेतुमक्षिकाकेशदूषिते ॥ स्पृष्ट्वातुसलिलंभस्मप्रक्षेप्तव्यंविशुद्धये ॥ १ ॥
रुद्राक्षधारणाद्वापितथापंचाक्षरीजपात् ॥ भस्मत्रिपुंड्रकरणाद्ध्रुवंप्राप्तोभ-
विष्यति ॥ २ ॥ आयुरारोग्यमैश्वर्यंतत्त्वज्ञानमनामयम् ॥ भवति-
श्रीमहादेवंपूजयेत्यब्रवीच्छ्रुतिः ॥ ३ ॥-॥ ( शिवरहस्ये )-तज्ज-
लंभस्मसंयुक्तंकुरुभस्मविवर्जितम् ॥ नगृण्हातिजलंशंभुर्गांगंवाकिमुतेत-

रत् ॥ १ ॥ तस्मात्कुमाराःसर्वाणिपुष्पादीनिविशेषतः ॥ भूतियुक्तानि
देयानिमूलमंत्रेणशंभवे ॥ २ ॥ अपूतमपिपूतंस्याद्भस्मनासंयुतंयदि ॥
धारणंभस्मनोह्युक्तंमन्त्रपूर्वंद्विजन्मनाम् ॥ ३ ॥ तस्माद्भस्मयुतैःस्वच्छैर्बि-
ल्वैर्लिंगादिकंयजेत् ॥ यदिस्याद्भस्मरहितंपीयूषमपितत्परम् ॥ ४ ॥
विषमित्यवगंतव्यं यतोनेशार्पणेहितम् ॥ पाकागारेपिदेयंस्याद्भस्मकिं-
चिज्जलान्वितम् ॥ ५ ॥ शाकेजलेतंडुलेषुमुद्गादिष्वपियत्नतः ॥ तेनकी-
टादिसंबंधदोषोपिसुविनश्यति ॥ ६ ॥ भूतिर्नैवेद्यपात्रेपिप्रदेयाजलसंयु-
ता ॥ किंतयासुधयापुत्राःकिंचिद्भस्मान्वितंयदि ॥ ७ ॥ याशिवार्चन
सामग्रीसासर्वाभूतिपावना ॥ कर्तव्यामूलमंत्रेणतयातुष्टोभवेच्छिवः ॥
॥ ८ ॥ यदकार्यसहस्राणिकृत्वायःस्नातिभस्मना ॥ तत्सर्वंभस्मदहति
यथाग्निस्तेजसावनम् ॥ ९ ॥ अनेकजन्मसिद्धानांश्रौतस्मार्तानुवर्ति-
नाम् ॥ वेदोक्तेनैवमार्गेणत्रिपुंड्रेजायतेरतिः ॥ १० ॥ अतःसर्वंपरित्यज्य-
त्रिपुंड्रैर्देहकुंठनम् ॥ नित्यंप्रयत्नतःकुर्यान्मुमुक्षुर्मुच्यतेऽचिरात् ॥ ११ ॥-
(अन्यत्रापि)यत्रभुंजीतभस्मांगीमूर्खोवापंडितोपिवा ॥ तत्रभुंक्तेसपत्नीको-
वृषध्वज इति स्मृतः ॥ १ ॥ भस्मसंछन्नसर्वांगमनुगच्छतियःपुमान् ॥
सर्वपातकयुक्तोहिससद्यःपूयतेनरः ॥ २ ॥-॥ ( शंकरसंहितायाम् )-
भस्मसंलग्नसर्वांगंयस्तौतिश्रद्धयायुतः ॥ सर्वपातकयुक्तोपिपूयतेमानवो-
हिसः ॥ १ ॥ भस्मसंछन्नदेहायप्रणामंकुरुतेतुयः ॥ सर्वपातकयुक्तो
पिससद्यःपूयतेनरः ॥ २ ॥-॥ ( सौरसंहितायाम् ) यस्तारमाचरेन्नित्य-
माग्नेयंनियतेन्द्रियः ॥ कुलैकविंशमुत्तार्यसगच्छेत्परमांगतिम् ॥ १ ॥

## १९ अथ बिभूत्यादिपञ्चभेदोत्पत्तिवर्णादयः

नंदा[1]भद्रा[2]चसुरभिः[3]सुशीला[4]सुमना[5]स्तथा ॥ पंचगावःसमुत्पन्नाःताभ्यो-
भस्मो[1]त्थितंनृणाम् ॥ १ ॥ विभूति[1]र्भसितं[2]भस्म[3]क्षारो[4]रक्षे[5]तिभस्मनः ॥
भवंतिपंचनामानिहेतुभिः पंचभिःक्रमात् ॥ २ ॥ ऐश्वर्यकरणा-(द्भूतिः)
(भस्म) सर्वाघभक्षणात् ॥ (भसितं) सर्वपापानांभर्त्सनात् (क्षार) मापदाम्

॥ ३ ॥ क्षारणात्सर्वभूतेभ्यो (रक्षा) रक्षणतःशुभा ॥ दग्धगोमयमुत्कृष्टंतदप्यग्निमुखेपरम् ॥ ४ ॥ श्रौतेस्मार्तेकृतौतंत्रेश्रावण्यांविरजेवने ॥ — ॥ (वायवीयसंहितायाम्)—नंदाभद्राचसुरभिःसुशीलासुमनास्तथा ॥ पंचगावोविभोर्जाताःसद्योजातादिवक्रतः ॥ १ ॥ कपिलःकृष्णधवलौधूम्रोरक्तस्तथैवच ॥ नंदादीनांगवांवर्णाःक्रमेणपरिकीर्तिताः ॥ २ ॥ सद्योजाताद्विभूतिश्चवामाद्भसितमेवच ॥ अघोराद्भस्मसंजातंक्षारंतत्पुरुषात्तथा ॥ ३ ॥ रक्षाचेशानवक्राच्चनंदादिद्वारतोभवत् ॥ ५ ॥

अथ वर्णभेदेनधार्यभस्मभेदाः—( जाबालोपनिषदि )

त्रैवर्णिकानामग्निहोत्रजंविवाहाग्निजमौपासनाग्निजं वा ॥ ब्रह्मचारिणामग्निकार्यकृतम् ॥ वनस्थानांवन्यम् अथवा शिवाग्निजंवा ॥ शूद्राणांश्रोत्रियागारपचनाग्निजम् ॥ अन्येषांदावानलसमुद्भवम् ॥ यतीनांयथोचितम् ॥ त्रिवर्णाश्रमिणांचिताग्निजम् ॥ सर्वेषांदेवालयस्थितम् ॥ शिवाग्निहोत्रजाविभूतिः शिवालयमंत्रसंस्कारदग्धावा ॥ ८ ॥

२० अथ भस्मादिस्नानधारणमन्त्रांगुलिस्थानादिभेदाः—

स्नपनोपक्रमेपादौकरौप्रक्षाल्यवाग्यतः ॥ आचम्योक्तासनेस्थित्वाप्राङ्मुखोवाप्युदङ्मुखः ॥ १ ॥ पवित्रहस्तद्वितयःप्राणायामंसमाचरेत् ॥ ततोमूलेनभसितमष्टकृत्वोभिमंत्र्यच ॥ २ ॥ ईशानेनशिरोदेशंमुखंतत्पुरुषेणतु ॥ उरोदेशमघोरेणनाभिंवामेनगोपते ॥ ३ ॥ सद्येनपादौसर्वांगंप्रणवेनैवधूलयेत् ॥ एवंस्नानक्रमःप्रोक्तस्तस्मादेवंसमाचरेत् ॥ ४ ॥ भस्मवामकरेकृत्वादक्षिणेनाभिमंत्रयेत् ॥ सद्यःप्रभृतिभिर्मन्त्रैःभस्मान्युद्धूलयेच्छनैः ॥ ५ ॥ अथवा शिरसि अग्निरित्यादिनाभस्मगृहीत्वांगानिसंस्पृशेत्। व्रतमेतत्पाशुपतंपशुपाशविमोक्षणम् ॥ — ॥ ( कालाग्निरुद्रोपनिषदि)—सद्योजातादिपंचब्रह्ममंत्रैःपरिगृह्याऽग्निरित्यादिमंत्रैश्चाभिमंत्र्यमानस्तोकेइतिसंक्षुद्यशंनोदेवीरितिजलेनसंसृज्यमानोमहांतमित्यालोड्यत्र्यंबकमितित्र्यायुषमितिच शिरोललाटवक्षस्स्कंधेषुतिर्यक् तिस्रोरेखाः कुर्वीत ॥ व्रतमे-

तच्छांभवं सर्ववेदेषुवेदवादिभिरुक्तंभवति ॥ तस्मात्समाचरेन्मुमुक्षुरपुनर्भवाय ॥–॥ ( वायवीयसंहितायाम् )–भस्माग्निहोमजंचाथविरजाग्निसमुद्भवम् ॥ आदरेणसमादायशुद्धेपात्रेनिधायतत् ॥ १ ॥ प्रक्षाल्यपादौहस्तौचद्विराचम्यसमाहितः ॥ गृहीत्वाभस्मतत्पंचब्रह्ममंत्रैः शनैःकरे ॥ २ ॥ प्राणायामत्रयंकृत्वाह्यग्निरित्यादिमंत्रितम् ॥ तैरेवसप्तभिर्मंत्रैस्त्रिवारमभिमंत्रयेत् ॥ ३ ॥ भस्मधारणसंयुक्तः पवित्रोनियताशयः ॥ शिवाभिधानंयत्प्रोक्तंभासनाद्भसितंमतम् ॥ ४ ॥ महाभस्मेतिसंचिंत्यमहादेवंप्रभामयम् ॥ वर्ततेयेमहाभागामुख्यास्तेभस्मधारिणः ५ ॥–॥ ( अन्यत्राणि ) प्रक्षाल्यपादौहस्तौचद्विराचम्यसमाहितः ॥ गृहीत्वाभस्मतत्पंचब्रह्ममंत्रैःशनैःकरे ॥ १ ॥ प्राणायामत्रयंकृत्वायाग्निरित्यादिमंत्रितम् ॥ तैरेवसप्तभिर्मंत्रैस्त्रिवारमभिमंत्र्यतत् ॥ २ ॥ ओमापोज्योतिरित्युत्क्वाध्यात्वाविष्णुंजलाधिपम् ॥ संयोज्यभस्मनातोयमग्निरित्यादिभिःपुनः ॥ ३ ॥ निमृज्यसांबंध्यात्वासमुद्धूल्यापादमस्तकम् ॥ ईशानेनतुमंत्रेणस्वमूर्द्धनिविनिःक्षिपेत् ॥ ४ ॥ मुखेतसुरुषेणैवतवघोराख्येणवैहृदि ॥ गुह्येवामद्वयेनैवसद्योजातेनपादयोः ॥ ५ ॥ नवांगंप्रणवेनैवमंत्रेणोद्धूलयेत्ततः ॥ उद्धूलनस्यस्नानांतेप्रक्षाल्यकरमाचमेत् ॥ ६ ॥ ( त्रिपुंड्रांतेप्येवम् ) ॥–॥ ( तत्रविशेषाः )–अथभस्मादायाभिमंत्रयेत् ( ५ )–ईशानस्सर्वविद्यानाम्–शिवोम् ॥ १ ॥ तत्पुरुषाय–प्रचोदयात् ॥ २ ॥ अघोरेभ्यः–रुद्ररूपेभ्यः ॥ ३ ॥ वामदेवायनमः–मनोन्मनायनमः ॥ ४ ॥ सद्योजातं–भवोद्भवायनमः ॥ ५ ॥ पुनरेवाभिमृशति ॥ सद्योजातं–पंचभिः–( ५–४–३–२–१ ) ॥ मानस्तोकेतनयइतिमध्यमानामिकांगुष्ठैःसमादायतूष्णीमद्भिस्समुदादायत्रियायुषमितित्रिपुण्ड्रंधारयेत् ॥ (जुहुयात्स्वयमेवेति–मनुवाक्येनशिष्यमुखतोहोमकल्पनाकथंयुज्यतेइतिनशंक्यम् ॥ शिष्यस्यगुर्वधीनत्वात्स्वयंशब्दोत्रयुज्यते ॥ हस्तपादादिवच्छिष्याइतिशिष्टाब्रुवंतिहि ॥ १ ॥ सन्न्यासिविषयेइदम् ) ॥–॥

भस्मनावैत्रिसंध्यंचगृहिणांजलसंयुतम् ॥ धार्यंत्रिपुंड्रंस्त्रीणांचयतीनांजलवर्जितम् ॥ १ ॥ वनस्थव्रतिकन्यानांदीक्षाहीननृणांतथा ॥ मध्याह्नात्प्राग्जलैर्युक्तंपरतोजलवर्जितम् ॥ २ ॥ मध्यांगुलित्रयेणैवदक्षिणस्यकरस्यतु ॥ षडंगुलायतमपिचाधिकंमानतस्तथा ॥ ३ ॥ नेत्रयुग्मप्रमाणेनभालेदीप्तंत्रिपुंड्रकम् ॥ अकारोनामिकाप्रोक्तोह्युकारोमध्यमांगुलिः ॥ ४ ॥ मकारस्तर्जनीतस्मात्रिभिःकुर्यात्रिपुंड्रकम् ॥ मध्यमानामिकांगुष्ठैरनुलोमविलोमतः ॥ ५ ॥ धारयेद्यस्त्रिपुंड्रांकंसरुद्रोनात्रसंशयः ॥ मूर्द्धाचैवललाटंचकर्णौकंठस्तथैवच ॥ ६ ॥ हृदयंचैवबाहूचनाभिस्थानंनवोच्यते ॥ पंचांगुलैर्न्यसेमूर्द्धिप्रणवेनतुमंत्रतः ॥ ७ ॥ त्र्यंगुलैश्चन्यसेत्फालेशिरोमंत्रेणदेशिकः ॥ सद्येनदक्षिणेकर्णेवामदेवेनवामतः ॥ ८ ॥ अघोरेणतुकंठेचमध्यांगुल्यास्पृशेद्बुधः ॥ हृदयंहृदयेनैवत्रिभिरंगुलिभिस्स्पृशेत् ॥ ९ ॥ विन्यसेद्दक्षिणेबाहौशिखामंत्रेणदेशिकः ॥ वामबाहौन्यसेद्धीमान्कवचेनत्रियंगुलैः ॥ १० ॥ मध्येनस्पृशेन्नाभ्यामीशानाभिधमंत्रतः ॥

## अथ कार्यभेदैर्विभूत्यादिभेदाः-

धारयेन्नित्यकार्येतुविभूतिंवैप्रयत्नतः ॥ नैमित्तिकेषुभसितंरक्षाकार्येषुसर्वदा ॥ १ ॥ प्रायश्चित्तेषुभस्मानिधार्याणितुयथाविधि ॥ क्षारंचमोक्षकार्येषुप्रयोक्तव्यंसदाबुधैः ॥ २ ॥ ५ ॥

## २० अथ भस्मोत्पादनप्रकाराः-( वायवीयसंहितायाम् )

भस्मोत्पादनमुद्दिष्टंचतुर्धातंत्रवेदिभिः ॥ कल्पश्चैवानुकल्पश्चाप्युपकल्पमकल्पकम् ॥ १ ॥ तेषामादिममुत्कृष्टमन्येभ्यश्चप्रभावतः ॥ यथाशास्त्रोक्तविधिनागृहीत्वागोमयंनवम् ॥ २ ॥ सद्योजावामदेवाभ्यांकुर्यात्पिंडमकल्मषम् ॥ शोषयेत्पुरुषेणैवदहेद्घोराच्छिवाग्निना ॥ ३ ॥ (कल्पं) तद्भस्मविज्ञेयमनुकल्पमथोच्यते ॥ वनेषुगोमयंयच्चशुष्कंचूर्णीकृतंतथा ॥ ॥ ४ ॥ दग्धंचैवा(ऽनुकल्पा)ख्यमाख्याताधिगतंतुयत्(?) ॥ वस्त्रेणोत्तरितं

भस्मगोमूत्राद्भद्धपिंडितम् ॥५॥ दग्धंप्रागुक्तविधिनाभवेद्भस्मो–(पकल्प-क) म् ॥ देशकालोचितंभस्मगृहीत्वाऽशुचिवर्जितम् ॥ ६ ॥ पिंडीकृत्य दहेद्विद्वान्गोमूत्रक्षीरगोमयैः ॥ साधारणमिदं(भस्म)त्वकल्पमधुनाशृणु॥ ॥७॥ अन्यदुत्पादितंभस्मा–(प्यकॅल्प)मितिकीर्तितम् ॥ श्रौतस्मार्ता-ग्निदावाग्निविरजाग्निशिवाग्निजम् ॥ ८ ॥ वैदिकैरेवतद्ग्राह्यंभस्मपंचवि-धंचतत् ॥ ४ ॥ १ ॥ ५ ॥

अथोर्ध्वपुंड्रतिर्यक्पुंड्रादिधारणेव्यवस्था–( धर्मप्रवृत्तौ )

नैवतिर्यङ्मृदाकुर्यादूर्ध्वपुंड्रंनभस्मना ॥ चंदनेनोभयंकुर्यादितितन्म-नुरब्रवीत् ॥ १ ॥ त्रिपुंड्रंसुरविप्राणांवर्तुलंनृपवैश्ययोः ॥ अर्धचंद्रंतु-शूद्राणामन्येषामूर्ध्वपुंड्रकम् ॥ २ ॥ ब्राह्मणानांनृपाणांचभस्ममिश्रंचचं-दनम् ॥ नेत्रयुग्मप्रमाणंतुत्रिपुंड्रंधारयेद्द्विजः ॥ ३ ॥

२१ अथ त्रिपुण्ड्रस्यस्वरूपम्–( रत्नावल्याम् )

मध्यमानामिकांगुष्ठैर्ललाटेयत्रिपुंड्रकम् ॥ तत्त्रिपुंड्रंभवेच्छस्तंमहाप-तकनाशनम् ॥ १ ॥

अथ त्रिपुण्ड्रधारणफलम्–( स्मृतिसारे )

अशुचिर्वाप्यनाचारोमनसापापमाचरेत् ॥ शुचिरेवभवेन्नित्यंत्रिपुं-ड्रस्यचधारणात् ॥ १ ॥–॥ ( नारदः )–त्रिपुंड्रंपरमंपुण्यंब्रह्मविष्णु-शिवात्मकम् ॥ बेतालराक्षसाःप्रेताःयेचान्येक्षुद्रजंतवः ॥ १ ॥ त्रिपुंड्र-धारिणंदृष्ट्वापलायंतेनसंशयः ॥–॥ ( विष्णुः )–यस्यपङ्क्तौद्विजोभुङ्क्ते-शिवभक्तस्त्रिपुंड्रधृक् ॥ सतांपङ्क्तिंपुनात्येवसकलांचतुरानन ॥ १ ॥

२२ अथ भस्मधारणस्थानानि–( स्मृतिसारे )

त्रिपुंड्रंधारयेन्नित्यंभस्मनासजलेनच ॥ स्थानेषुपंचदशसुशरीरेसाध-कोत्तमः ॥ १ ॥ उत्तमांगेललाटेचश्रवर्णेद्वितयेतथा ॥ गलेभुजद्वयेचै-वहृदिनाभौचपृष्ठके ॥ २ ॥ बाहुयुग्मेककुद्देशेमणिबंधे द्वयेतथा॥ त्रिपुंड्रंभस्मनाधार्यंमूलमंत्रेणसाधकैः ॥ ३ ॥ १५ ॥

## २३ अथ वर्णाश्रमस्त्रीपुंभेदेनभस्मधारणेनियमाः-

धारणंभस्मनोह्युक्तंमंत्रपूर्वंद्विजन्मनाम् ॥ अमंत्रपूर्वमन्येषांशूद्राणां धर्मवेदिनाम् ॥ १ ॥ स्त्रीणामपितथाप्रोक्तंद्विजस्त्रीणांतुमंत्रतः ॥ यथाहियज्ञकर्मादौपत्नीसाध्येहिकर्मणि ॥ २ ॥ सर्वमंत्राधिकरोस्तितथाभस्मादि धारणे ॥ ३ ॥

## २४ अथ मुक्तौमुख्यसाधनानि-

शिवलिंगमणिस्साक्षान्मंत्रःपंचाक्षरस्तथा ॥ विभूतिरौषधंपुंसां मुक्तिस्त्रीवश्यकर्मणि ॥ १ ॥ ३ ॥

## २५ अथ भस्मस्नानस्यश्रैष्ठ्यम्-

भस्मस्नानंजलस्नानादसंख्येयगुणान्वितम् ॥ तस्माद्वारुणमुत्सृज्यस्नानमाग्नेयमाचरेत् ॥ १ ॥ भस्मस्नानात्परंस्नानंपवित्रंनैवविद्यते ॥ एवमुक्त्वा ऋषीन्देवान्स्नातोदेवःशिवःस्वयम् ॥ २ ॥ तदाप्रभृतिविष्णवाद्यामुनयश्च शिवार्थिनः ॥ सर्वकर्मसुयत्नेनभस्मस्नानंप्रकुर्वते ॥ ३ ॥ तस्मादेतच्छिव स्नानमाग्नेयंयस्समाचरेत् ॥ अनेनैवशरीरेणसरुद्रोनात्रसंशयः ॥ ४ ॥ आर्द्रस्नानाद्वरंभास्मंतवाद्रैर्जंतुवधोभवेत् ॥ आर्द्रंतुप्रकृतिंविद्यात्प्रकृतिंबंधनंविदुः ॥ ५ ॥ प्रकृतेस्तुप्रहाणार्थंभस्मनास्नानमिष्यते ॥

## अथ भस्मधारणाकरणेप्रत्यवायप्रशंसे-

धिग्भस्मरहितंफालंधिग्ग्राममशिवालयम् ॥ धिगनीशार्चकजनान्धिग्विद्यामशिवाश्रयाम् ॥ १ ॥ तद्भस्मधारणंशस्तंसर्वंतद्वत्त्रिलिंगकम् ॥ ब्रह्मविष्णुमहेशानांत्रय्यग्नीनांचधारणम् ॥ २ ॥ गुणलोकत्रयाणांचधारणंतेनवैकृतम् ॥-॥ (बोधायनसूत्रेपि)भूत्यैनप्रमादितव्यमित्युक्तम् ॥

## अथ भस्मत्रिपुण्ड्रेषुवेदाः-

ऊर्ध्वरेखाथऋग्वेदोमध्यरेखायजुर्भवेत् ॥ सामवेदअधस्ताच्चवेदत्रयधरोभवेत् ॥ १ ॥

२६ अथ विभूतिप्रतिनिधेरभावः—

धृतोपवीतैस्संध्यायाःकार्यैप्रतिनिधिर्भवेत् ॥ विभूतिधारणेत्वन्योनास्तिप्रतिनिधिर्ध्रुवम् ॥ १ ॥

२७ अथ भस्मादिपातनंभूमौनकार्यम्—

यावंतःपतिताभूमौभस्मनांपरमाणवः ॥ तावद्वर्षसहस्राणिरौरवंनरकंव्रजेत् ॥ १ ॥

---

२८ अथ रुद्राक्षोत्पत्तितद्भेदाः—( शिवरहस्ये )

पुरात्रिपुरसंहारेत्रिणेत्रोजगतांपतिः । उदपश्यत्पुरायोगमुन्मीलितविलोचनः ॥ १ ॥ निपेतुस्तस्यनेत्रेभ्योबहवोजलबिंदवः ॥ तेभ्योजातायतस्तस्माद्रुद्राक्षाइतिकीर्तिताः ॥ २ ॥ अष्टत्रिंशत्प्रभेदेनभवंत्युत्पत्तिभेदतः ॥ नेत्रात्सूर्यात्मनश्शंभोःकपिलाद्वादशोदिताः ॥ ३ ॥ श्वेताःषोडशसंजाताःसोमरूपाद्विलोचनात् ॥ कृष्णादशंविधाजताःवह्निरूपाद्विलोचनात् ॥ ४ ॥ एवमुत्पत्तितोभेदाद्रुद्राक्षाबहुधास्मृताः ॥ ३८ ॥

२९ अथ रुद्राक्षाणामधारणेदोषाः—

स्नानेदानेजपेहोमेवैश्वदेवेसुरार्चने ॥ रुद्राक्षरहितोविप्रोनरकेपततिध्रुवम् ॥ १ ॥

३० अथ रुद्राक्षाणांमुखसंख्याभेदेनधारणस्थानानि—

( सिद्धांतशेखरे )

यथास्थानंयथावक्त्रंयथायोगंयथाविधि ॥ रुद्राक्षधारणंवक्ष्येरुद्ररूपस्यसिद्धये ॥ १ ॥ शिखायामेकमेकास्यंरुद्राक्षंधारयेद्बुधः ॥ द्वित्रिद्वादशवक्त्राणिशिरसित्रीणिधारयेत् ॥ २ ॥ षट्त्रिंशद्धारयेन्मूर्ध्निनित्यमेकादशाननान् ॥ दशसप्तपंचवक्त्रान्षट्षट्कर्णद्वयेतथा ॥ ३ ॥ षडष्टवदनान्कण्ठेद्वात्रिंशद्धारयेत्सदा ॥ पंचाशद्धारयेद्विद्वांश्चतुर्वक्त्रांस्तुवक्षसि ॥ ४ ॥ त्रयोदशमुखान्बाह्वोस्तथाषोडशषोडश ॥ प्रत्येकंद्वा-

दशतथानवास्यान्मणिवंधयोः॥ ५॥ चतुर्दशमुखं यज्ञसूत्रमष्टोत्तरं शतम्॥ ॥-॥ ( प्रकारान्तरम् )-शिखायामेकमेवस्यात् करयोर्द्वादशैवतु ॥ द्वात्रिंशत्कंठदेशेतु चत्वारिंशच्चमस्तके॥ १ ॥एकैककर्णयोः षट्षट्वक्षस्य ष्टोत्तरंशतम् ॥ एकमेवोपवीतेतुधारयेद्भावयञ्छिवम् ॥ २ ॥

## २१ अथ मुक्ताप्रवालस्फटिकादियुतरुद्राक्षमालाश्रैष्ठ्यम्-

मुक्ताप्रवालस्फटिकपुष्पवैदूर्यकांचनैः ॥ समेतान्धारयेयस्तुरुद्राक्षान्सशिवोभवेत् ॥ १ ॥

## अथ रुद्राक्षादित्रयाणामतिश्रैष्ठ्यम्-

शैवंनामतथागंगाविभूतिर्यमुनामता ॥ रुद्राक्षाविधिजाःप्रोक्तास्सर्वपापविनाशकाः ॥ २ ॥ शारीरेतुत्रयंयस्यतत्फलंचैकतस्स्मृतम् ॥ एकत्रवेणिकायाश्चदर्शनेनफलंतुयत् ॥ ३ ॥ तदेवतुलितंपूर्वंब्रह्मणा हितकारिणा ॥ समतामेवतत्प्राप्तंतस्माद्धार्यंत्रयंबुधैः ॥ ४ ॥

## २२ अथ रुद्राक्षाणांमुखभेदेनलक्षणभेदाः-

चिह्नैरेतैश्शुभाज्ञेयाःप्रेक्षावद्भिर्मुनीश्वराः ॥ एकंमुखंतुयस्यस्यात्प्रतिपूरंव्रजेदिह ॥ १ ॥ द्विमुखीचतदाज्ञेयाधारकोनैवदह्यते ॥ त्रिमुखीचयदास्याद्वैशस्त्रघातादिकंनहि ॥ २ ॥ चतुर्मुखीतदाज्ञेयावेगैश्चाधोभवेदिह ॥ जलेतुमुच्यमानासानतरेन्मज्जतिक्षणात् ॥ ३ ॥ संप्रोक्तासापंचमुखीसर्वानर्थविनाशिनी ॥ जलेमज्जतिसाज्ञात्वाधार्याधर्मविवृद्धये ॥ ४ ॥ ५ ॥-॥ ( प्रकारान्तरम्-निर्णयसिंधौ ) एकवक्रेशिवस्साक्षाद्ब्रह्महत्यांव्यपोहति ॥ अवध्यत्वंप्रतिस्रोतोवह्निस्तंभंकरोतिच ॥ १ ॥ द्विवक्रोहरगौरीस्याद्गोवधाघनाशकृत् ॥ त्रिवक्रोह्यग्निजन्माथपापराशिंप्रणाशयेत् ॥ २ ॥ चतुर्वक्रस्स्वयंब्रह्मा नरहत्यांव्यपोहति ॥ पंचवक्रस्तुकालाग्निरगम्यागमपापनुत् ॥ ३ ॥ षड्वक्रस्तुगुहोज्ञेयोभ्रूणहत्यादिनाशयेत् ॥ सप्तवक्रस्त्वनंतस्स्यात्स्वर्ण-

स्तेयादिपापहृत् ॥ ४ ॥ विनायकोष्टवक्त्रः स्यात्सर्वानृतविनाशकृत् ॥ भैरवोनववक्त्रस्तुशिवसायुज्यकारकः ॥ ५ ॥ दशवक्त्रस्स्मृतोविष्णुर्भूतप्रेतभयापहः ॥ एकादशमुखोरुद्रोनानायज्ञफलप्रदः ॥ ६ ॥ द्वादशास्यस्तथादित्यः सर्वरोगनिबर्हणः ॥ त्रयोदशमुखः कामः सर्वकामफलप्रदः ॥ ७ ॥ चतुर्दशास्यश्श्रीकंठोवंशोद्धारकरस्स्मृतः ॥ १४ ॥

## अथ रुद्राक्षाणांप्रशंसा—

यत्ररुद्राक्षतरवोयत्ररुद्राक्षभूषणाः ॥ यत्रलिंगानिशैवानितत्रसन्निहितः शिवः ॥ १ ॥ नमोंतेनशिवायेतिस्त्रीणांपूजाप्रशस्यते ॥ विश्वेश्वरोवाविष्णुर्वाब्रह्मावानभविष्यति ॥ २ ॥ यतोनयोर्द्वयोरेकः प्रभुर्विश्वेश्वरः पिता ॥ नमस्तेअस्तुभगवन्नित्यादिश्रुतिभिस्सदा ॥ ३ ॥ विश्वेश्वरोमहानन्यइतिनिश्चीयतेमया ॥ सोमःपवतेइत्यादिश्रुत्यासोमः सदाशिवः ॥ ४ ॥ जनितापवनादीनांविष्णूनामितिहिश्रुतिः ॥ ईशानःसर्वविद्यानामित्यादिश्रुतिभिर्मुहुः ॥ ५ ॥ ईश्वरस्यैवकर्तृत्वंनिश्चितंनात्रसंशयः ॥ उमयासहितोदेवस्सोमइत्यभिधीयते ॥ ६ ॥ उमाज्ञानमयीशक्तिःसैवविद्येतिगीयते ॥ रुद्राक्षधारकस्सोमइतिशास्त्रविदोविदुः ॥ ७ ॥

## अथ रुद्राक्षधारणमहिमा—( पदार्थादर्शेबोप्पदेवः )

रुद्राक्षान्कंठदेशेदशनपरिमितान्मस्तकेविंशतिर्द्वेषट्षट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव ॥ बाह्वोरिंदोःकलाभिः नयनयुगकृतेप्येकमेकं शिखायांवक्षस्यष्टाधिकंयः कलयतिशतकंसस्वयंनीलकंठः ॥ १ ॥—॥(हरिदीक्षितीये )—नित्यानिकाम्यानिनिमित्तजानि कर्माणिसर्वाणिसदापिकुर्वन् ॥ अभस्मरुद्राक्षधरोयदिस्याद्द्विजोनतस्यास्तिफलोपपत्तिः ॥ १ ॥ सर्वेषुवर्णाश्रमसंगतेषुनित्यंसदाचारपरायणेषु ॥ श्रुतिस्मृतिभ्यामिहचोद्यमानाविभूतिरुद्राक्षधृतिस्समाना ॥ २ ॥—॥ ( सिद्धान्तशेखरे )—अच्छिद्रंकनकप्रख्यमनन्यधृतमुत्तमम् ॥ रुद्राक्षंधारयेत्प्राज्ञश्शिवपूजापरायणः ॥ १ ॥ रुद्राक्षधारणादेवमुच्यन्तेसर्वपातकैः॥

दुष्टचित्तादुराचारादुष्प्रजाअपिमानवाः ॥ २ ॥–॥ ( शिवभक्तिसुधार्णवे )–धृतरुद्राक्षकर्णाययस्त्वन्नंसंप्रयच्छति ॥ त्रिस्सप्तकुलमुद्धृत्यरुद्रलोकंसगच्छति ॥ १ ॥ शुचिर्वाप्यशुचिर्वापिह्यभक्ष्यस्यचभक्षकः ॥ म्लेच्छोवाप्यथचंडालोयुक्तोवासर्वपातकैः ॥ २ ॥ रुद्राक्षधारणादेवसरुद्रोनात्रसंशयः ॥ खादन्मांसंपिबन्मद्यंसंगच्छन्नंत्यजामपि ॥ ३ ॥ पातकेभ्योविमुच्येतरुद्राक्षेशिरसाधृते ॥ सर्वयज्ञतपोदानैर्वेदाभ्यासैश्चयत्फलम् ॥ ४ ॥ तत्फलंलभतेसद्योरुद्राक्षस्यतुधारणात् ॥ शिरसाधारणेकोटिः कर्णयोर्दशकोटयः ॥ ५ ॥ शतकोटिर्गलधृतौमूर्ध्निकोटिसहस्रकम् ॥ अयुतंचोपवीतेतुलक्षकोटिर्भुजेधृते ॥ ६ ॥ अमेयंमणिबंधेतुरुद्राक्षामोक्षसाधकाः ॥ रुद्राक्षधारणाच्छ्रेष्ठंनकिंचिदिहविद्यते ॥ ७ ॥ अमंत्रधारणस्यैवगुणाएतेप्रकीर्तिताः ॥ यःपुनर्मंत्रसंयुक्तंधारयेद्भक्तितोनरः ॥८॥ गुणानंतस्यमाहात्म्यंकथितुंनैवशक्यते ॥–॥ (श्रौतसिद्धांते)–लक्षंतद्दर्शनात्पुण्यंकोटिस्तत्स्पर्शनाद्भवेत् ॥ शतकोटिगुणंपुण्यंधारणाल्लभतेनरः ॥ १ ॥ लक्षकोटिसहस्राणिलक्षकोटिशतानिच ॥ जपाच्चलभतेपुण्यंनात्रकार्याविचारणा ॥ २ ॥ शिवभक्तायशांतायदद्याद्रुद्राक्षमुत्तमम् ॥ तस्यपुण्यफलस्यांतंनचाहंवक्तुमुत्सहे ॥ ३ ॥ पशवोपिहिरुद्राक्षधारणाद्यांतिरुद्रताम् ॥ किमुयेधारयंतिस्मनरारुद्राक्षमालिकाः ॥ ४ ॥ उच्छिष्टोवाविकर्मस्थोयुक्तोवासर्वपातकैः ॥ मुच्यतेसर्वपापेभ्योरुद्राक्षस्यचधारणात् ॥ ५ ॥ जपध्यानविहीनोपिरुद्राक्षान्यदिधारयेत् ॥ सर्वपापविनिर्मुक्तस्सयातिपरमांगतिम् ॥ ॥ ६ ॥ भस्मरुद्राक्षधारीयःसदेहांतेशिवंव्रजेत् ॥ अभिज्ञोवानभिज्ञोवारुद्राक्षस्यतुधारणात् ॥ ७ ॥ शिवलोकंप्रपद्येतकीटकोगर्दभोपिवा ॥

## ३३ अथ धारणेयोग्यायोग्यरुद्राक्षाः–( सिद्धान्तशेखरादौ )

अच्छिद्रंकनकप्रख्यमनन्यधृतमुत्तमम् ॥ रुद्राक्षंधारयेत्प्राज्ञश्शिवपूजापरायणः ॥ १ ॥–॥ ( तत्रैव सिद्धांतशेखरे )–क्रिमिदष्टंविभिन्नं

चजीर्णसूक्ष्ममर्कटकम् ॥ अवृत्तंयमलंवक्रमष्टावेतान्विवर्जयेत् ॥ १ ॥ अभिन्नंनिकषेहैममनन्यधृतमारुणम् ॥ नव्यंपरंपराप्राप्तंधार्यंरुद्राक्षमुत्तमम् ॥ २ ॥ कुलीनमकुलीनंवाभूतिरुद्राक्षधारिणम् ॥ दृष्ट्वोन्नतासनेस्थित्वारौरवंनरकंव्रजेत् ॥ ३ ॥

## ३४ अथ जपादौरुद्राक्षमालाआवश्यकाः-

अंगुल्याजपएकःस्याद्रेखयाष्टगुणोभवेत् ॥ जपस्तुशंखमणिनाशतमष्टोत्तरंभवेत् ॥ १ ॥ जपस्तुपुत्रजीवेनभवेदेवशतत्रयम् ॥ पद्माक्षेणसहस्रंस्यात्स्फाटिकेनायुतत्रयम् ॥ २ ॥ कोटिकोटिःकुशग्रंथ्यारुद्राक्षेणांतवर्जितः ॥ अतस्सर्वप्रयत्नेनरुद्राक्षैस्सर्वदाजपेत् ॥ ३ ॥

---

## ३५ अथ पुरुषपदार्थः-

पुरुषःपरमोरुद्रोदेवदेवोत्तमोत्तमः ॥ पुरुषोवैरुद्रइतिश्रुतिरेषायतोमता ॥१॥ सर्वान्तरशिरोग्रीवस्सर्वभूतगुहाशयः ॥ सर्वव्यापीचभगवान्तस्मात्सर्वगतःशिवः ॥ २ ॥ महान्प्रभुर्वैपुरुषस्सत्त्वस्यैवप्रवर्तकः ॥ सुनिर्मलमिदंशांतमीशानज्योतिरव्ययम् ॥ ३ ॥ मोहशाद्वाधनादन्यन्नास्तिसर्वार्थदायकम् ॥ मनसाकर्मणावाचाशिवंयोभजतेसदा ॥ ४ ॥ तंतारयतिगौरीशोघोरसंसारसागरात् ॥ मुक्तिमुक्तावर्षकोयंशिवमंत्रःश्रुतिश्रुतः ॥ ५ ॥ गोपनीयोपिमोक्षार्थंवेदांतैःप्रकटीकृतः ॥ मोक्षार्थीतुशिवादन्यंयःपूजयितुमिच्छति ॥ ६ ॥ सउन्मत्तइतिज्ञेयोवेदमार्गाद्बहिष्कृतः ॥ ७ ॥

## ३६ अथ शिवस्यप्राशस्त्यम्-( स्कान्दे )

तदेवकुलमुत्कृष्टंधन्यमित्यपिमन्महे ॥ यस्मिन्कुलेसमुत्पन्नःशिवपूजापरोभवेत् ॥ १ ॥शंकरोविष्णुतपसासंतुष्टोविष्णवेमुदा ॥ ददौवैकुंठममलमतोदेवोत्तमःशिवः ॥ २ ॥ वेदास्सर्वेमहादेवंस्तुवंतिविविधंमुदा॥ तदन्यंनस्तुवंत्येवमतोदेवोत्तमःशिवः ॥ ३ ॥ शिवान्नास्त्यधिकोदेवस्सत्यंस-

त्यंनसंशयः ॥ सत्यंसत्यंपुनस्सत्यमुद्धृत्यभुजमुच्यते ॥ ४ ॥ पाथेयंपरलोकस्यमोक्षोपायमनामयम् ॥ पुण्यसंघैकनिलयंशिवइत्यक्षरद्वयम् ॥ ५ ॥ विभूतिराशयोयत्रयत्रबिल्ववनान्यपि ॥ यत्रशैवाःशिवपरास्तत्रसन्निहितःशिवः ॥ ६ ॥

---

### ३७ अथ बिल्वमाहात्म्यम्-( शिवरहस्ये )

दुर्लभंशंकरंलिंगंदुर्लभाबिल्वमंजरी ॥ दुर्लभाशांभवीविद्याशिवेभक्तिश्चदुर्लभा ॥ १ ॥ बिल्वपत्रैर्महादेवंयोभ्यर्चयतिनित्यशः ॥ कालमृत्युर्नचायातिकिमुतान्येचमृत्यवः ॥ २ ॥

### ३८ अथ पूजायोग्यबिल्वपत्राणि-( शिवरहस्ये )

नित्यमार्द्रैरनार्द्रैर्वाबिल्वपत्रैःसदाशिवम् ॥ पूजयस्वमहादेवंतस्मान्मात्रमदोऽभवम् ॥ १ ॥ बिल्वपत्राणिशुद्धानिस्वतःपर्युषितान्यपि ॥ शंकरार्चनयोग्यानिभवंतीतिहिनःश्रुतम् ॥ २ ॥ सौवर्णंबिल्वपत्रंवारत्नजंराजतंतथा ॥

### ३९ अथ शिवपूजायांबिल्वपत्राण्यवश्यकानि-( शिवरहस्ये )

नहिपर्युषितंतस्माच्छुद्धमेवस्वयंयतः ॥ अर्पितान्यपिबिल्वानिप्रक्षाल्यचपुनःपुनः ॥ १ ॥ शंकरायार्पणीयानिननवानियदिक्वचित् ॥ शुष्कंखंडितमार्द्रंवाबिल्वपत्रंशिवप्रियम् ॥ २ ॥ चूर्णीकृतान्यपिप्राज्ञाबिल्वपत्राणिवैदिकाः ॥ संपाद्यपूजयंतीशंनवालाभेविचक्षणाः ॥ ३ ॥ अनाघ्रातंबिल्वपत्रंयादृशंतादृशंशिवे ॥ विनिक्षिप्यमहापापैर्मुच्यतेनात्रसंशयः ॥ ४ ॥ बिल्वपत्रार्चनात्प्रीतोयथाभवतिशंकरः ॥ तथानान्येनसुप्रीतोभविष्यतिनसंशयः ॥ ५ ॥ बिल्वपत्रार्चनेनैवसांगंशंकरपूजनम् ॥ बिल्वपत्रंविनापूजानसांगापार्वतीपतेः ॥ ६ ॥ धूपदीपोपचाराणामभावेपिमहीशितुः ॥ वस्त्रादिदानतोप्येतद्भवत्येवहिपुण्यदम् ॥ ७ ॥ सर्वार्थंबिल्वपत्राणिभविष्यंतिनसंशयः ॥

बिल्वपत्रार्थमन्यत्तुनभवत्येवसर्वथा ॥ ८ ॥ सहस्रार्बुदपुष्पाणांपूजयायत्फ-
लंभवेत् ॥ ततोपिकोटिगुणितंबिल्वपत्रार्चनेप्रभोः ॥ ९ ॥ कृत्वायत्नेनसत-
तंब्रह्महत्यार्बुदान्यपि ॥ सद्योनश्यंतिबिल्वेनपूजितेतुमहेश्वरे ॥ १० ॥ शिव-
लिंगंसमभ्यर्च्यबिल्वपत्रैःप्रयत्नतः ॥ भोक्तव्यमन्यथाविप्रैरन्वहंयांति-
यातनाः ॥ ११ ॥ यत्नेषुपूजनीयेषुबिल्वपत्रंविशिष्यते ॥ ३ ॥

४० अथ बिल्वपत्रंपर्युषितंच्छिन्नंभिन्नंवापूजायांयोग्यमेव—
( शिवरहस्यादौ )

आषण्मासाद्बिल्वपत्रंपुजायोग्यंशिवस्यतु ॥ आर्द्रंवायदिवाशुष्कं-
शीर्णंखंडितमेववा ॥ १ ॥ यादृशंतादृशंवापिबिल्वपत्रंशिवप्रियम् ॥ गौरीगौ-
रांगकोद्भूतस्वेदबिंदुसमुद्भवः ॥ २ ॥ ततःप्रियतमःशंभोर्बिल्ववृक्षोनचेतरः ॥
सायुज्यादिफलावाप्तिसाधनंतरुराड्यतः ॥ ३ ॥ सर्वस्वंपार्वतीशेनबिल्ववृ-
क्षेप्रतिष्ठितम् ॥ स्वोद्यानोद्भववृक्षस्यस्वहस्तोपार्जितैर्नरः ॥ ४ ॥ पूजयेत्पार्व-
तीनाथंबिल्वपत्रैस्सुकोमलैः ॥

४१ अथ देवेषुपत्रपुष्पफलबिल्वानांपूजायामर्पणक्रमः—
( शिवरहस्येनंद्यगस्त्येश्वरसंवादे )

अगस्त्यउवाच ॥ ॥ पत्रैःपुष्पैःफलैर्वापिसम्मुखैःपूज्यतेशिवः ॥
अधोमुखैर्बिल्वपत्रैरत्रमेसंशयोमहान् ॥ १ ॥ दक्षभागेस्थितोब्रह्मा-
वामभागेजनार्दनः ॥ मध्यपत्रेस्थितस्साक्षात्सांबस्सर्वार्थसाधकः ॥
॥ २ ॥ पूर्वभागेऽमृतंन्यस्तंदेवैर्ब्रह्मादिभिःपुरा ॥ पृष्ठभागे
स्थितायक्षाअभक्तानांनिषेधकाः ॥ ३ ॥ इंद्रादयोलोकपालावृंताग्रेपरिकी-
र्तिताः ॥ ततोवैपूर्वभागेनपूजयेद्गिरिजापतिम् ॥ ४ ॥ यत्रवायदिवापुष्पंफलं-
नेष्टमधोमुखम् ॥ अधोमुखंबिल्वपत्रंशिवस्यवचनंयथा ॥ ५ ॥ तर्जन्यंगुष्ठ-
योगेनगृहीत्वाबिल्वपत्रकम् ॥ पूजयेत्पार्वतीनाथंसिक्तंचंदनवारिणा ॥
॥ ६ ॥ विलयंयांतिपापानिकोटिजन्मार्जितान्यपि ॥ महाकैलासभवने

शिवेनसहमोदते ॥ ७ ॥ भूतिपूजोत्तरंबिल्वैःपूजनीयोमहेश्वरः ॥ प्रत्य-
हंनियमेनेतिप्राहुर्जाबालवादिनः ॥८॥ दर्शनाद्बिल्ववृक्षस्यस्पर्शनाद्वंदना-
दपि॥अहोरात्रकृतंपापंनश्यत्येवहिनारद ॥९॥ बिल्ववृक्षंसमासाद्यद्वाद-
श्यामह्निभोजनम् ॥ यःकुर्याद्भ्रूणहापापान्मुच्यतेनात्रसंशयः ॥ १० ॥
बिल्ववृक्षंसमासाद्यत्रिरात्रोपोषितोनरः ॥ हरनामजपँल्लक्षंब्रह्महत्यांव्ययो-
हति॥ ११ ॥शुष्कैःपर्युषितैःपत्रैःखंडैर्बिल्वस्यनारद ॥ पूजयेद्गिरिजानाथं-
मुच्यतेसर्वपातकैः ॥ १२॥ बिल्ववृक्षंसमासाद्ययोमंत्रान्विविधाञ्जपेत् ॥
येमामनन्यशरणास्सततंवरेण्यंसंपूजयंतिनवकोमलबिल्वपत्रैः ॥ तेनि-
र्गुणाअपिगुणांबुधयोभवंति विंदंतिमुक्तिमुपभुक्तसमस्तभोगाः ॥ १३ ॥

---

## ४२ अथ निषिद्धपुष्पाणिपूजासु-

दुर्गन्धान्युग्रगन्धानिकुसुमानिविवर्जयेत् ॥ गन्धहीनमपिग्राह्यंपवि-
त्रंयत्कुशादिकम् ॥ १ ॥ केशकीटोपबद्धानिशीर्णपर्युषितानिच ॥
स्वयंपतितपुष्पाणित्यजेदुपहतानिच ॥ २ ॥

## ४३ अथ सव्यप्रदक्षिणप्रकारचण्डवृषस्थानसोमसूत्रस्थान निर्णयाः-शिवलिङ्गेषु-

प्रदक्षिणप्रकारस्तुद्विविधोवेदसम्मतः ॥ सव्यापसव्यस्सव्यश्चतत्रा-
द्योविधिरुच्यते ॥ १ ॥ वृषंचण्डंवृषंचैवसोमसूत्रंपुनर्वृषम् ॥ चण्डंच
सोमसूत्रंचपुनश्चण्डंपुनर्वृषम् ॥ २ ॥-॥ (प्राग्द्वारेदेवदेवस्यवृषस्था-
नंप्रकीर्तितम् ॥ देवस्यनैर्ऋतेभागेचण्डस्थानंप्रकीर्तितम् ॥ ३ ॥ पश्चि-
माभिमुखेलिङ्गेस्थानमेतदुदीरितम् ॥ लिङ्गेतुप्राङ्मुखेस्थानंचण्डस्यै-
शान्यमेवहि ॥ ४॥ महेशस्योत्तरस्थानंसोमसूत्रस्थलंस्मृतम् ॥ पश्चि-
माभिमुखेलिङ्गेसोमसूत्रंतुपूर्वतः ॥ ५ ॥ ) त्रीण्येतानिस्थलान्येवनव-
स्थानानिसत्तम ॥ उपविश्यवृषस्थानेचण्डस्थानंततोव्रजेत् ॥ ६ ॥
पुनर्वृषंसमागत्यसोमसूत्रंव्रजेत्ततः ॥ पुनर्वृषेशमागत्यचण्डस्थानंततोव्र-

जेत् ॥ ७ ॥ ततोवृषेशमप्राप्यसोमसूत्रंव्रजेद्द्विजः ॥ सोमसूत्रमनुल्लं-
घ्यचण्डस्थानाद्वृषंव्रजेत् ॥८॥ स्थानान्येवंसमावृत्यवृषभेशंपुनर्यदा ॥
प्राप्नुयान्नियतोभूत्वातदेकंस्यात्प्रदक्षिणम् ॥ ९ ॥ सोमसूत्रंसमुल्लंघ्यग-
र्भेकार्याःप्रदक्षिणाः ॥ वृषोयदिभवेद्गर्भेनोचेत्तत्रनसर्वथा ॥ १० ॥
सोमसूत्रंसमुल्लंघ्यगर्भेसवृषभेहिसः ॥ विहितंवास्त्वविहितंसोमसूत्रंनलं-
घयेत् ॥ ११ ॥ बहिश्चापिहितत्सूत्रमुल्लंघ्यंनैवसर्वथा ॥ ९ ॥

---

## ४४ अथ महादेवभक्तानांलक्षणनामधेयवर्णादयः—

( स्कांदपुराणेवीरमाहेश्वरकांडेभक्तविलासे )

( सुंदरमूर्तिः )—ब्राह्मणः। बद्धांजलिः। पार्श्वयोर्नागवेत्रे। पार्श्वद्वये-
कमलिनीनंदिन्यौपद्महस्ते ॥ १ ॥

( अप्पः )—कुलालः । बद्धांजलिः । वामकरेभूदार्ढ्यकारकदंडव-
त्फलकवान् ॥ १ ॥

( माणिक्यवाचकः )—ब्राह्मणः । किरीटी । दक्षकरेक्षमाला ।
वामकरे पुस्तकम् ॥ १ ॥

( शिवज्ञानसंबंधः )—ब्राह्मणः। किरीटी। तालवादकनिभः ॥१॥

( नीलकंठः )—ब्राह्मणः । तपस्वी । बद्धांजलिः । उपविष्टः ।
वामेकमंडलुः ॥ १ ॥

( त्रिसहस्रभूसुरः )—ब्राह्मणः। बद्धांजलिः ॥ १ ॥

( महाधनः )—वैश्यः। बद्धांजलिः ॥ १ ॥

( सत्यार्थः )—क्षत्रियः। किरीटी। बद्धांजलिः। वामकरे खड्गः॥ १ ॥

( मारः )—शूद्रः। वक्रशिखः। बद्धांजलिः ॥ १ ॥

( वीरमंदिरः )—शूद्रः। जटाधारी। दक्षकरे परशुः ॥ १ ॥

( अमरनीतिः )—शूरः। बद्धांजलिः ॥ १ ॥

( दारुकः )—शूरः। दक्षकरे परशुः ॥ १ ॥

( येनदिनाथः[13] ? ) क्षत्रियः । वक्रशिखः । बद्धांजलिः । दक्षिण कक्षेऽधोमुखखड्गः ॥ १ ॥

( कर्न्नं[14] ( पण ) पः )—व्याधः । सांजलिबन्धः । वामेधनुर्बाणौ । वक्रशिखः । पदोःपाद्दौ ॥ १ ॥

( कलाँनाथः[15] )—ब्राह्मणः । सांजलिबन्धः । वामेगदा ॥ १ ॥

( मानकुंजः[16] )—क्षत्रियः । सांजलिबन्धः ॥ १ ॥

( गोनाथः[17] )—गोपः । वेणुवादकनिभः ॥ १ ॥

( शंकुलादायः[18] )—शूद्रः । दक्षकरे क्षुरिका ॥ १ ॥

( मूर्तिनाथः[19] )—वैश्यः । सांजलिबन्धः ॥ १ ॥

( रुद्रपशुपतिः[20] )—ब्राह्मणः । सांजलिबन्धः ॥ १ ॥

( स्कंदनाथः[21] )—ब्राह्मणः । द्वयोःकरयोः पुष्पमाला ॥ १ ॥

( नंदनः[22] )—पंचमः । सांजलिबन्धः ॥ १ ॥

( विचारवान्[23] )—क्षत्रियः । सांजलिबन्धः । द्वयोः कक्षयोः धौत-वस्त्रासनजपमालादिग्रन्थिः ॥ १ ॥

( चंडेश्वरः[24] )—ब्राह्मणः । सांजलिबन्धः । किरीटी । दक्षिणकक्षे परशुः ॥ १ ॥

( कुलपक्षकः[25] )—शूद्रः । सांजलिबंधः । वामे वस्त्रग्रन्थिः ॥ १ ॥

( पूतवती[26] )—वैश्यकन्या । सांजलिबंधा ॥ १ ॥

( विद्याशूरः[27] )—ब्राह्मणः । सांजलिबंधः ॥ १ ॥

( अभूतिचरः[28] ) । ब्राह्मणः । सांजलिबंधः ॥ १ ॥

( नीलनग्रः[29] )—शूद्रः । सांजलिबंधः ॥

( नवनंदः[30] )—ब्राह्मणः । सांजलिबंधः ॥ १ ॥

( कलिकामः[31] )—पंचमः। किरीटी । सांजलिबंधः । वामे खड्गः १ ॥

( दत्रांकः[32] )—बुरुडः । वस्त्रकम्बलादिनिर्मितवस्तुविशेषेणावृतकर्णा-न्तमस्तकः।वामकक्षे वाशिका । सांजलिबंधः ॥ १ ॥

(श्रीमूलः[३३])—ब्राह्मणः। सांजलिबंधः। जटामकुटधारी ॥ १ ॥

(मारसुकुमारः[३४])—शूद्रः। सांजलिबंधः ॥ १ ॥

(कश्यनाथः[३५])—क्षत्रियः। वक्रशिखः। वामकरे शिलापुत्रकवान्। प्रसृतपद्भ्यामुपविष्टः ॥ १ ॥

(मुर्खनंदनः[३६])—व्याधः। दक्षकरे ह्रस्वं काष्ठादिच्छेदकं खड्गसदृशमायुधंदधानः ॥ १ ॥

(निरुद्धशार्दूलः[३७])—ब्राह्मणः। सांजलिबंधः ॥ १ ॥

(मतंगः[३८])—ब्राह्मणः। सांजलिबंधः ॥ १ ॥

(चरभूपतिः[३९])—क्षत्रियः। किरिटी। सांजलिबंधः। वामेखड्गः ॥ १ ॥

(गणनाथः[४०])—ब्राह्मणः। सांजलिबंधः ॥ १ ॥

(परान्तकः[४१])—क्षत्रियः। किरीटी। सांजलिबंधः। वामे खड्गः ॥ १ ॥

(धर्मकेतनः[४२])—क्षत्रियः। सांजलिबंधः। किरीटी। वामकरे खड्गः

(सत्यार्थः[४३])—ब्राह्मणः। सांजलिबन्धः ॥ १ ॥

(अतिभक्तः[४४])—ब्राह्मणः। जटामुकुटधारी। सांजलिबंधः। कक्षेभृङ्गारी ॥ १ ॥

(प्रतापशूरः[४५])—क्षत्रियः। जटामकुटधारी। बद्धांजलिः ॥ १ ॥

(मानधनः[४६])—ब्राह्मणः। जटाधारी। बद्धांजलिः ॥ १ ॥

(कलिनीतिः[४७])—पंचमः। दक्षिणेवरदहस्तः। लंबितवामकरेण कमण्डलुधरः ॥ १ ॥

(कीर्तिकंथः[४८])—ब्राह्मणः। वक्रशिखः। दक्षिणकरे खड्गः ॥ १ ॥

(पंचपादः[४९])—गोपः। बद्धांजलिः। किरीटी। वामे खड्गः ॥ १ ॥

(अविकारी[५०])—ब्राह्मणः। जटाधारी। बद्धांजलिः ॥ १ ॥

(गणोल्लपः[५१])—शूद्रः। जटाधारी। बद्धांजलिः ॥ १ ॥

(अभिरामः[५२])—क्षत्रियः। जटामुकुटधारी। बद्धांजलिः ॥ १ ॥

( निर्वाचकः[५३] )—ब्राह्मणः । बद्धांजलिः । जटामकुटधारी ॥ १ ॥

( शक्तिमान्[५४] )—शूद्रः । जटामकुटधारी । बद्धांजलिः ॥ १ ॥

( सिंहकः[५५] )—गोपः । किरीटी । बद्धांजलिः । वामे खड्गः ॥ १ ॥

( भूतिमान्[५६] )—क्षत्रियः । किरीटी । बद्धांजलिः । वामे नागवेत्रम् ॥ १ ॥

( साहंसप्रियः[५७] )—शूद्रः । जटामकुटधारी । दक्षिणकरे खड्गः ॥ १ ॥

( कीर्तिर्नाथामृतः[५८] )—ब्राह्मणः । बद्धांजलिः ॥ १ ॥

( शूरव्याघ्रः[५९] )—शूद्रः । जटामकुटधारी । वामे खड्गः । बद्धांजलिः ॥ १ ॥

( विभूतिचंरः[६०] )—ब्राह्मणः । बद्धांजलिः ॥ १ ॥

( लोहिताक्षः[६१] )—क्षत्रियः । बद्धांजलिः ॥ १ ॥

( सहस्रकरः[६२] )—शूद्रः । जटाधारी । बद्धांजलिः । वामे वेत्रम् ॥ १ ॥

( शंभुचित्तः[६३] )—ब्राह्मणः । बद्धांजलिः । किरीटी । वामे खड्गः ॥ १ ॥

(गीतानंदः[६४])—ब्राह्मणःबद्धांजलिःजटामुकुटधारीवामे वीणा ॥ १ ॥ ६४

---

४५ अथ जगद्गुरुश्रीशङ्कराचार्यावतारः—( शङ्करदिग्विजयेवै-
दिकविजयध्वजेशङ्करमन्दारसौरभादौच )

कलौरुद्रोमहादेवोलोकानामीश्वरःपिता॥ करिष्यत्यवतारंस्वंशंकरोनीललोहितः ॥ १ ॥ श्रौतस्मार्तप्रतिष्ठार्थं शिष्याणांहितकाम्यया ॥ उपदेक्ष्यतितज्ज्ञानंशिष्याणांब्रह्मसम्मितम् ॥ २ ॥ सर्ववेदान्तसारंचधर्मान्वेदनिदर्शनान् ॥ १ ॥

---

४६ अथ पूजायांपचायनान्यावश्यकानि—( सदाचारसंग्रहे )

आदित्यमंबिकांविष्णुंगणनाथंमहेश्वरम् ॥ ब्राह्मणःपूजयेत्पंचपंचयज्ञपरायणः ॥ १ ॥ ५ ॥

## अथ पूजायांपञ्चायतनसन्निवेशेनियमाः-

४७तत्रादौ पूजायांवैदिकपंचायतनसन्निवेशक्रमः-(सदाचारसंग्रहे)

सध्यांबिकादेवहविर्दिनाधिपोपितुर्मनुष्यस्यचविष्णुरीरितः ॥ ब्रह्मे-श्वरौभूतबलिर्गणाधिपोयज्ञेश्वरास्स्युर्यजनीयदेवताः (?) ॥ १ ॥ विष्णुस्तपस्तीव्रकरःसुकर्मणांसाक्षीरविर्मंत्रमयीमनोन्मनी ॥ ध्यानस्यविघ्नापनुदंबिकासुतोज्ञानप्रदःस्थाणुरितीर्यतेबुधैः ॥ २ ॥

( शिवपंचायतनम् )-शंभौमध्यगते-हरीनहरभूदेव्यः

( विष्णुपंचायतनम् )-हरौ-शंकरेभास्येनाऽगसुता

( आदित्यपंचायतनम् )-रवौ-हरगणेशाजांबिका स्थापयेत् ॥

( देवीपंचायतनम् )-देव्यां-विष्णुहरेभवक्त्ररवयः

( गणेशपंचायतनम् )-लंबोदरेऽजेश्वरेनार्याः-शंकरदिङ्मुखास्तुशुभदाःव्यत्यस्ततोहानिदाः ॥ १ ॥ मध्यस्थितस्यदेवस्यदेवाईशान्यतः शुभाः ॥ ५ ॥

## अथ देवानांदिङ्निर्णयः-

देवस्यमुखमारभ्यदिशंप्राचींप्रकल्पयेत् ॥ १ ॥ मध्यस्थितस्यदेवस्येत्यर्थः ॥

## अथ तान्त्रिकपञ्चायतनानि-( कालहस्तिविलासेपंचायतनकल्पेच )

( केवलशिवपंचायतनम् )-पार्वतीपरमेशानौगणेशस्स्कंदनंदिनः ॥

(केवलविष्णुपंचायतनम्)-श्रीभूदेव्यौमहाविष्णुर्विष्वक्सेनःखगेश्वरः॥

( केवलदेवीपंचायतनम् )-कालीदुर्गाभवानीचविष्णुश्चैवमनोन्मनी॥

इदमेव ( केवलगौरीपञ्चायतन )-मित्यप्युच्यते ॥

( केवलसूर्यपंचायतनम् )-भानुश्छायातथादंडस्तथामाठरपिंगलौ ॥

( केवलगणेशपंचायतनम् ) गणेशोवल्लभायक्षःकुंडोदरमहोदरौ ॥

## अथ वैदिकपंचायतनानांचित्राणि-

वै. १ आदित्यपंचायतनस्य




वै. २ देवीपंचायतनस्य




वै. ३ विष्णुपंचायतनस्य




वै. ४ गणेशपंचायतनस्य




वै. ५ शिवपंचायतनस्य



## अथ तान्त्रिकपंचायतनानांचित्राणि-

तां. १ कालीपंचायतनस्य




तां. १ गौरीपंचायतनस्य




तां. २ गणेशपंचायतनस्य




तां. ३ विष्णपंचायतनस्य




तां. ४ आदित्यपंचायतनस्य




ता. ५ शिवपंचायतनस्य




एवमन्यान्यपिपञ्चायतनानितत्तन्मतानुसारेणबहूनिदृश्यन्ते ॥

## अथ सालिग्रामेषुरामकृष्णमूर्त्तिभेदाः-

### ४७ तत्रादौरामभूर्त्तिभेदाः-(अन्यत्र)

अष्टधाराममूर्तिःस्याद्वीररामादिभेदतः ॥ १ ॥ ८ ॥

(सीतारामभूर्तिः)-सीतारामस्तुतत्रापिद्विविधःपरिकीर्तितः ॥ कोदंडं कुक्कुटांडाभंश्यामलंप्रतिबिभ्रतम् ॥ १ ॥ रेखाद्वयसमुपेतंद्वारपार्श्वेखगेश्वरः ॥ धनुराकृतिकारेखादृश्यतेपार्श्वयोर्द्वयोः ॥ २ ॥ पृष्ठतोवाभवेद्यस्य दशकंठकुलांतकः ॥ २ ॥

( सीतारामः )-भवेदेकैकवदनेचतुश्चक्रोंबरप्रभः ॥ चापबाणांकुशच्छत्रध्वजचामरसंयुतः ॥ १ ॥ वनमालाधरोदेवः सीतारामः प्रकीर्तितः ॥ सर्वाभीष्टप्रदश्चोक्तःसर्वत्रविजयप्रदः ॥ २ ॥ १ ॥

( सीतारामः )-द्वारद्वयेचतुश्चक्रोवामतश्चैकचक्रवान् ॥ बाणतणीरचापाढ्यस्सीतारामःस्रगन्वितः ॥ १ ॥ सर्वसौभाग्यदस्सोपिसर्वत्रविजयप्रदः ॥ एकेनधनुषायुक्तोवर्तुलःकिंचिदायतः ॥ २ ॥ १ ॥

( वीररामः )-बाणतूणीरचापाढ्यःकुंडलीचाब्जमालिकः ॥ सूक्ष्मकेसरचक्राढ्यो वीररामः श्रियावहः ॥ दक्षभागेपंचरेखाश्चापोबाणश्चपार्श्वयोः ॥ १ ॥ १ ॥

( बालरामः )-सबालरामो विज्ञेयोपुत्रदायीनसंशयः ॥ दिव्यबाणेनसंयुक्तश्चापतूणीरसंगतः ॥ १ ॥ १ ॥

( विजयरामः )-करालवदनोयुक्तबिंदुयुक्चक्रशोभितः॥सस्याद्विजयरामाख्यःकेसरापीतचक्रकः ॥ १ ॥ १ ॥

(हर्षरामः)-मूर्ध्नाहलधनुस्तूणीपार्श्वेखुरयुतस्तथा॥हर्षराम इतिख्यातोभुक्तिमुक्तिफलप्रदः ॥ १ ॥ १ ॥

( कोदण्डरामः )-कोदण्डरामनामाढ्यःशुभःकोदण्डसुप्रभः ॥ दधचक्रंसुवदनकृष्णवर्णःसुशोभनः ॥ १ ॥ १ ॥

( सदारामूर्तिः )—सुदारामस्तुविज्ञेयःपूजितस्सुफलप्रदः॥ १८ ॥

४८ अथ कृष्णमूर्त्तयः--( अन्यत्र )

( कृष्णमूर्तिः )—कृष्णमूर्तिस्तुतत्रापित्रयोदशमितामताः ॥ कृष्णः पीतःश्वेततनुः भित्तिपार्श्वेतुचक्रयुक् ॥ १ ॥ द्वारतुल्योभवेन्नाभिःकूर्चाकारस्तुपृष्ठतः ॥ कृष्णोवृत्ताकृतिस्साक्षात्सर्वेषांपापनाशनः ॥ २ ॥ कृष्णोतिकृष्णोनस्थूलःचक्रांकःकौस्तुभान्वितः ॥ १३ ॥

---

इतिश्रीमत्समस्तभमंडलमंडनायमानानिखिलदेशावतंसकर्नाटकजनपदाधिष्ठानभूतश्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपालप्रमुखनिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्रीमद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपातिबिरुदेंतेंबरगंडलोकैकवीरयदुकुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडधरणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितश्रीमन्महीशूरपुरवराधीशश्रीकृष्णराजमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेशिवक्षेत्रबिल्वरुद्राक्षादिकथनंनामसप्तमोनिधिस्संपूर्णः ॥७॥

---

इति श्रीतत्त्वनिध्याख्यग्रन्थे--शिवस्थलपञ्चायतनादि निरूपणंनामसप्तमोनिधिस्संपूर्णः ॥ ७ ॥



इति

श्रीतत्त्वनिध्याख्यग्रन्थे शिवक्षेत्रादिनिरूपणं

नाम शैवनिधिस्संपूर्णः ॥



श्रीः ।

## अथ

# श्रीतत्त्वनिधौ-

### अष्टम आगमनिधिः ।

### अथ-अष्टादशपुराणानां प्रवक्तृभूलोकागमनयोर्निर्णयः-

( पुराणसारे )

पराशरसुतोव्यासःकृष्णद्वैपायनोभवत् ॥ सएवसर्ववेदानांपुराणानां प्रदर्शकः ॥ १ ॥ पुराणमखिलार्थानांबोधकंश्रुतिसंमितम् ॥ अद्यापिदेवलोकेतच्छतकोटिप्रविस्तरम् ॥ २ ॥ तदर्थोत्रचतुर्लक्षैःसंक्षेपेणनिगद्यते ॥ तदष्टादशधाकृत्वाभूलोकेस्मिन्प्रकीर्तितम् ॥ ३ ॥ १८ ॥

### अथ महापुराणानांलक्षणानि-( पुराणसारे )

### १ तत्रादौ ब्राह्मपुराणस्यलक्षणम्-

ब्रह्मणाभिहितंपूर्वंयावन्मात्रंमरीचये॥ब्राह्मंतद्दशसाहस्रं ( १०००० श्लो० ) पुराणंपरिकीर्तितम् ॥ १ ॥ १ ॥

### २ अथ पाद्मपुराणस्यलक्षणम्-

ब्रह्मणाभिहितंपूर्वंयावन्मात्रंमरीचये ॥ पंचपर्वात्मकंब्रह्मापाद्मंलोकेजगादवै ॥१॥ पाद्मंतत्पंचपंचाशत्सहस्राणि ( ५५००० श्लो० ) निगद्यते ॥ १ ॥

### ३ अथ वराहपुराणस्यलक्षणम्-

वाराहकल्पवृत्तांतमधिकृत्यपराशरः ॥ यान्प्राहधर्मांस्त्वखिलान्तद्युक्तंवैष्णवंविदुः ॥ १ ॥ विष्णवाख्यमष्टसाहस्रं ( ८००० श्लो० ) तत्पुराणंविदुर्बुधाः ॥ १ ॥

### ४ अथ वायुपुराणस्यलक्षणम्-

श्वेतकल्पप्रसंगेनधर्मान्वायुरिहाब्रवीत् ॥ एतच्चद्वायवीयंस्यादुद्रमाहात्म्यमुच्यते ॥ १ ॥ चतुर्विंशतिसहस्राणि ( २४००० श्लो० ) पुराणंतदिहोच्यते ॥ १ ॥

### ५ अथ भागवतपुराणस्यलक्षणम्-

यत्राधिकृत्यगायत्रींवर्ण्यतेधर्मविस्तरः ॥ वृत्रासुरवधोपेतंतद्भागवतमुच्यते ॥ १ ॥-॥ (प्रकारान्तरम् )-सारस्वतस्यकल्पस्यमध्येयेस्युर्नरामराः ॥ तद्वृत्तांतोद्भवोयत्रतद्भागवतमुच्यते ॥ १ ॥ अष्टादशसहस्राणि ( १८००० श्लो० ) पुराणंपरिकीर्तितम् ॥ १ ॥

### ६ अथ भविष्यपुराणस्यलक्षणम्-

शतानीकेनपृष्टेनव्यासशिष्येणधीमता ॥ सौरधर्मस्तुयत्रैवव्याख्यातस्तुसुमंतुना ॥ १ ॥ द्वादशैवसहस्राणि ( १२००० श्लो० ) भविष्याख्यंतदुच्यते ॥ १ ॥

### ७ अथ नारदीयपुराणस्यलक्षणम्-

यत्राहनारदोधर्मान्बृहत्कल्पाश्रयांस्त्विह ॥ चतुर्विंशतिसहस्राणि ( २४००० श्लो० ) नारदीयंतदुच्यते ॥ १ ॥ १ ॥

### ८ अथ मार्कण्डेयपुराणस्यलक्षणम्-

यत्राधिकृत्यशकुनीन्धर्माधर्मविचारणा ॥ सप्तत्रिंशत्सहस्राणि ( ३७००० श्लो० ) मार्कंडेयमिहोच्यते ॥ १ ॥ १ ॥

### ९ अथ आग्नेयपुराणस्यलक्षणम्-

यत्तदग्न्युद्भवंचेदंजगत्स्थावरजंगमम् ॥ चयनानांसमुत्पत्तिंमिष्टिकागमनंतथा ॥ १ ॥ अधिकृत्यप्रवृत्तंयत्क्रतुसंख्यादिकंतथा ॥ वसिष्ठस्याग्निनाप्रोक्तमाग्नेयंतत्प्रचक्षते ॥ २ ॥ आग्नेयंचाष्टसाहस्रं (८००० श्लो० ) सर्वक्रतुफलप्रदम् ॥ १ ॥

१० अथ ब्रह्मकैवर्तपुराणस्यलक्षणम्-

यत्रवैवैष्णवाधर्मावसिष्ठेनमहात्मना॥ अंबरीषस्यवैप्रोक्तःसर्गोब्राह्मस्तथैवच॥ १॥ प्रोच्यतेब्रह्मकैवर्तंतद्द्वादशसहस्रकम् (१२००० श्लो०)१॥

११ अथ लैङ्गयपुराणस्यलक्षणम्-

यत्रचेशानकल्पस्यवृत्तांतमधिकृत्यच ॥ कल्पितंलग्यमित्युक्तंपुराणंब्रह्मणास्वयम् ॥ १ ॥ तदेकादशसाहस्र (११००० श्लो०) माख्यातंमुनिपुंगवाः ॥ १ ॥

१२ अथ वराहपुराणस्यलक्षणम्-

वामनस्यप्रसंगेनकल्पस्यमुनिपुंगवाः ॥ महावराहस्यपुनर्माहात्म्यमधिकृत्यच ॥ १ ॥ विष्णनाभिहितंक्षोण्यैतद्वाराहमिहोच्यते ॥ चतुर्विंशतिसहस्राणि ( २४००० श्लो० ) तत्पुराणमिहोच्यते ॥२॥१॥

१३ अथ स्कन्दपुराणस्यलक्षणम्-

यत्रमाहेश्वरान्धर्मानधिकृत्यचषण्मुखः ॥ कल्पेतत्पुरुषेवृत्तैश्चरित्रैरुपबृंहितम् ॥ १ ॥ स्कांदंनामपुराणंतन्निर्ममेतत्रयोदशम् ॥ सहस्राणांशतंचक ( १००००० श्लो० ) मितिमर्त्येषुप्रकीर्तितम् ॥ २ ॥ १॥

१४ अथ वामनपुराणस्यलक्षणम्-

त्रिविक्रमस्यमाहात्म्यमधिकृत्यचतुर्मुखः ॥ त्रिवर्गंचत्रिदैवत्यंवामनंतत्प्रकीर्तितम् ॥ १ ॥ चतर्दशसहस्राणि ( १४००० श्लो० ) ख्यातंकल्पानुगंशिवम् ॥ १ ॥

१५ अथ कूर्मपुराणस्यलक्षणम्-

यत्रधर्मार्थकामानांमोक्षस्यचरसातले ॥ माहात्म्यंकथयामासकूर्मरूपीजनार्दनः ॥ १ ॥ इंद्रद्युम्नप्रसंगेनऋषिभ्यश्चक्रसन्निधौ॥ तत्कौर्मंषट्सहस्राणि ( ६००० श्लो० ) लक्ष्मीकल्पानुषंगिकम् ॥२॥१॥

१६ अथ मात्स्यपुराणस्यलक्षणम्-

श्रुतीनांयत्रकल्पादौप्रवृत्त्यर्थंजनार्दनः ॥ मात्स्यरूपेणमनवेनार-

सिंहोपवर्णितम् ॥ १ ॥ अधिकृत्याब्रवीत्सप्तकल्पवृत्तंचसुव्रताः ॥ तन्मात्स्यमितिजानीध्वंसहस्राणिचतुर्दश (१४००० श्लो०)॥ २॥ १॥

## १७ अथ गरुडपुराणस्यलक्षणम्-

यदातुगारुडेकल्पेविश्वांडगरुडोद्भवम् ॥ अधिकृत्याब्रवीद्विष्णुःगारुडंतदिहोच्यते ॥ १ ॥ तत्तुषोडशसाहस्रं ( १६००० श्लो० ) पुराणं परिपठ्यते ॥ १॥

## १८ अथ ब्रह्माण्डपुराणस्यलक्षणम्-

ब्रह्माब्रह्मांडमाहात्म्यमधिकृत्याब्रवीत्पुनः ॥ तच्चद्वादशसाहस्रं- ( १२२०० श्लो० ) ब्रह्मांडंद्विशताधिकम् ॥ १॥ १ ॥

---

## १९ अथ महापुराणानांसंहत्यश्लोकसंख्याः-

भविष्याणांचकल्पानांश्रूयतेयत्रविस्तरः॥ चतुर्लक्षमिदं (४००००० श्लो० ) प्रोक्तंव्यासेनाद्भुतकर्मणा ॥ १ ॥ इदंलोकहितार्थायसंक्षिप्तंपरमर्षिणा ॥ १ ॥

---

## २० अथ श्रीमहाभारतस्यपर्वाध्यायश्लोकसंख्याः-

( महाभारतोक्तानुक्रमणिकाध्याये )

अध्यायश्लोकसंख्याअगणिषतमहाभारतेत्वादिपर्वण्यद्रिद्व्यक्षीण्यथाब्धीभगजगजमिताःसभ्यकेनागशैलाः ॥ रुद्रेष्वक्षीणिवन्येनवरसनयनान्यब्धिषट्षणमहीक्ष्माः वैराटेसप्तषट्काःगगनशरनभोबाहवस्संप्रदिष्टाः ॥ १ ॥ औद्योगेरीभचंद्रागजनवरसषट्भीष्मपर्वण्यगेशाः अब्धीभाष्टेषवोथाभ्रनगशशधराः द्रौणकेकाभ्रगोष्टौ ॥ कार्णेकांगानिवेदारिनवकृतमिताः शल्यपर्वण्यथोगोबाणाःखाक्षिक्षिरामा अथगजशशिनःसौप्तिकेभ्राद्रिनागाः ॥ २ ॥ स्त्रीपर्वण्यद्रिपक्षाश्शरनगमुनयःशांतिपर्वण्यजाग्नित्रीण्यश्वाब्ध्यद्रिवेदेंदवउपगदिताश्चानुशास्तौषडिंद्राः ॥ खाभ्राभ्राष्टाश्वमेधसुरमुनखसुराआश्रमावासपर्वण्यक्ष्यब्ध्याख्याः षडभ्राक्षशशध

रमितामौसलेष्टौखवेदाः ॥ ३ ॥ माहाप्रस्थानिकेतुत्रयइहगगनाक्षित्रयस्संप्रदिष्टाः स्वर्गारोहेतुबाणानवगगनकराः पर्वसूक्ताःस्वसंख्याः ॥ अध्यायानांसहस्रंसदलधृतिसहस्रंहरेर्वंशइत्थंश्लोकाः श्रीकृष्णभूमीभृदिदमगणयद्भारताध्यायपद्यम् ॥ ४ ॥

## २१ अथ श्रीमद्भागवतस्थस्कंधाध्यायश्लोकसंख्याः—

श्रीमद्भागवतेशुकेनकथितेध्यायास्तथाश्लोकका आद्येनंदकुसंज्ञितावसुमतीद्व्यष्टौद्वितीयेदश ॥ षण्णंदज्वलनास्तृतीयअनलाग्नीपंचविंशन्मनुस्तूर्येकुज्वलनाःखषट्कजलधिक्ष्मापंचमेषड्वयम् ॥ १॥ द्विद्विक्षोणिधराश्चषष्ठगदितानंदेंदवश्चाब्धिषण्नागाःसप्तमसंख्यकेथतिथयः श्लोकास्त्रिषट्काद्रयः ॥ संख्याताश्चतथाष्टमेजलधिनेत्रनंदवह्निप्रजेशास्कंधेनवमेजिनाविधिमुनिस्त्रष्टृप्रसंख्याःक्रमात् ॥ २॥ स्कंधेवैदशमेखनंदगणितानंदाद्रिनंदाग्नयश्चैकत्रिंशदथोशराद्रिगुणभूसंख्यास्तथैकादशे ॥ स्कंधेचांत्यमकेत्रयोदशमिताश्चाध्यायसंख्यास्तथा श्लोकाश्चंद्रमुनीशबाणगणिताःस्कंधाःपरंद्वाहश ॥ ३ ॥

## २२ अथ रामायणस्थकांडसर्गश्लोकसंख्याः—

बालकाण्डेतुसंख्याताःसर्गावैमुनिमारुताः ॥ श्लोकास्त्वंबरबाणाग्निबाहवश्चप्रकीर्तिताः ॥ १॥ अयोध्याकांडकेसर्गाःनंदरुद्रप्रसंख्यकाः॥ श्लोकास्तुवसुनागाक्षवेदसंख्याःप्रकीर्तिताः ॥ २ ॥ अरण्यकांडकेसर्गाःबाणपर्वतसंख्यकाः ॥ श्लोकास्तुतत्रगदिताःखेषुज्वलननेत्रकाः ॥ ३ ॥ किष्किंधाकांडसर्गास्तुमरुद्रससमीसिताः ॥ पद्यानिखाक्षितेजोक्षिसंख्यातानिविचक्षणैः ॥ ४ ॥ तथासुंदरकांडेतुसर्गानागारिसंख्यकाः ॥ तत्रश्लोकास्तुशून्याभ्ररसज्वलनसंख्यकाः ॥ ५ ॥ युद्धकांडेतुसंख्यातास्सर्गाव्योमादिचन्दिराः ॥ श्लोकास्तुतत्रगदिताःअग्निनागाक्षमानसाः ॥ ६ ॥ तथाचोत्तरकांडेतुसर्गारुद्रेंदुसंज्ञकाः ॥ श्लोकास्तुतत्रगदिताःशून्याभ्रव्योमसागराः ॥ ७ ॥

## २३ अथ स्कांदपुराणस्थखंडाध्यायश्लोकसंख्याः-

पुराणेषुमुनिश्रेष्ठास्कांदंसुखदमुत्तमम् ॥ सर्ववेदांतसर्वस्वंपंचाशत्खंडमंडितम् (५) ॥ १ ॥ संहिताभिस्तथाषड्भिः (६)युक्तंपरमपावनम् ॥ आद्यासनत्कुमारीयाद्वितीयासूतसंहिता ॥ २ ॥ तृतीयासंहिताब्राह्मीतुरीयावैष्णवीमता ॥ पंचमीशांकरीज्ञेयाषष्ठीस्यात्सौरसंहिता ॥ ३ ॥ आद्यातु पंचपंचाशसाहस्त्रैःश्लोककैः( ५५००० श्लो० ) र्युता ॥ द्वितीयासंहिताविप्राःषट्सहस्त्रै ( ६००० श्लो० ) रलंकृता ॥ ४ ॥ त्रिसहस्त्रैः ( ३००० श्लो० ) युताब्राह्मीपंचभिः ( ५००० श्लो० ) वैष्णवीमता ॥ त्रिंशद्भिः ( ३०००० श्लो० ) शांकरीयुक्ताखंडैर्द्वादशभि-(१२) र्युता ॥ ५ ॥ षष्ठीतुसारसंयुक्तासहस्त्रेणैककेनसा ( १००० श्लो० ) ग्रंथलक्षैः ( १००००० श्लो० ) युतंस्कांदंपंचाशत्खंडमंडितम् ॥ ६ ॥

---

## अथ वेदोपवेदषडंगतंत्रागमोपनिषदादीनांतत्तदागमतंत्रादिकर्तॄणांचनामानि-( लक्ष्मीनारायणसंवादे )

### २४ अथ वेदाः-

ऋग्वेदश्चयजुर्वेदःसामाथर्वाश्चतुर्विधाः ॥ ४ ॥

### २५ अथोपवेदाः-

आयुर्वेदस्तुऋग्वेदेधनुर्वेदोयजुष्यपि ॥ साम्निगांधर्ववेदःस्यादर्थवेदोह्यथर्वणे ॥ १ ॥ अंगवेदास्तुविज्ञेयाःक्रमादेतेमहाफलाः ॥ ४ ॥

### २६ अथ वेदादुत्पन्नानिशास्त्राणि-

आयुःशास्त्रंशिल्पशास्त्रंज्योतिषंधातुवादकम् ॥ आयराद्युपवेदेभ्यः चत्वारोजज्ञिरेसुताः ॥ १ ॥ ४ ॥

### २७ अथ वेदानांषडंगानि-

शिक्षाकल्पोव्याकरणंनिरुक्तंज्योतिषंतथा ॥ छंदश्चेतिषडंगानिऋगादीनांमहीयसाम् ॥ १ ॥ ६ ॥

## २८ अथ वेदानामुपाङ्गानि–

पदंप्रतिपदंछंदोज्ञानंस्वरसमुद्भवः ॥ न्यायस्तद्ब्रह्ममीमांसेत्युपांगान्युदितानिषट् ॥ १ ॥ ६ ॥

## २९ अथ वेदानांपत्न्यः–

ऋगादीनामिमाःपत्न्यस्सामिधेनीस्रुगाह्वया ॥ जुहूःसमित्समाख्याताश्चतुर्णांविधिनिर्मिताः ॥ १ ॥ ४ ॥

## ३० अथ द्वात्रिंशदुपनिषन्नामानि–

तथाचैवोपनिषदोद्वात्रिंशत्परिकीर्तिताः ॥ ईशावास्यंचकेनाख्यंकठवल्ल्यभिधंतथा ॥ १ ॥मुंडकंचैवमाण्डूक्यंछांदोग्यंतैत्तिरीयकम् ॥ प्रश्नाख्यंबृहदारण्यमैतरेयंतथैवच ॥ २ ॥ गर्भाख्यंचैवकैवल्यंश्वेताश्वतरमेवच ॥ कालाग्निरुद्रंहंसंचनारायणमतःपरम् ॥ ३ ॥ शारीरंनादबिंद्वाख्यंमंत्रंचामृतबिंदुकम् ॥ ब्रह्माख्यंचैवजाबालमथर्वशिरआह्वयम् ॥ ४ ॥ बृहज्जाबालकंचैवसुबालकमतःपरम् ॥ मैत्रेयंपरहंसंचक्षुरिकानामकंनथा ॥ ५ ॥ कौषीतकंतापनीयमरुणीनामकंतथा॥ मैत्रायणीयंचाथर्वशिखासंज्ञमनुक्रमात् ॥ ६ ॥ एतान्युपनिषच्छब्दवाच्यानिसुमहांतिच ॥ तिष्ठन्तिब्रह्मनिकटेतस्मादुपनिषत्स्मृता ॥ ७ ॥ मोक्षैकहेतूभूतानिनृणांश्रवणमात्रतः ॥३२ ॥

## ३१ अथ वेदगताभेदविशेषाः–

विधिमन्त्रार्थवादाश्चवेदेषुगदितास्त्रयः ॥ ३ ॥

## ३२ अथ शास्त्राणि–

आद्यंशास्त्रेषुतर्काख्यंवैशेषिकमतःपरम् ॥ मीमांसाशास्त्रमपरंतुर्यंवेदांतनामकम् ॥ १ ॥ पंचमंयोगशास्त्रंतुषष्ठंसांख्याह्वयंतथा ॥ षडेतानिहिशास्त्राणिजगदेतैर्नियम्यते ॥ २ ॥६॥

## ३३ अथोपशास्त्राणि–

एतेभ्यउपशास्त्राणिजज्ञिरेषडनुक्रमात् ॥ तर्कशास्त्रान्नीतिशास्त्रंनाना-

थपरिबृंहितम् ॥ १ ॥ वैशेषिकात्प्रमाणाख्यशास्त्रंयुक्तिविगुंफितम् ॥ मीमांसाशास्त्रतोधर्मशास्त्रंकर्मक्रियाह्वयम् ॥ २ ॥ अध्यात्मशास्त्रं-वेदांतशास्त्राच्छोकैकभेषजम् ॥ योगशास्त्रात्तत्वशास्त्रमात्मज्ञानप्रदर्श-नम् ॥ ३ ॥ सांख्यशास्त्रान्मोक्षशास्त्रंसर्वदुःखहरंनृणाम् ॥ संगृहीता-निमुनिभिरुपशास्त्राणियानिच ॥ ४ ॥ ६ ॥

### ३४ अथांगशास्त्रोपशास्त्रेपूत्तमशास्त्रम्-

एषांशास्त्रोपशास्त्राणामंगशास्त्रमनुत्तमम् ॥ शब्दशास्त्रंमहाभाष्यंसूत्र-व्याकरणान्वितम् ॥ १ ॥ १ ॥

### ३५ अथ शास्त्रगताभागविशेषाः-

सूत्रंभाष्यंवार्तिकंचत्रयंशास्त्रेषुवर्ण्यते ॥३॥

### ३६ अथ व्याख्यानलक्षणम्-

पदच्छेदःपदार्थोक्तिर्विग्रहोवाक्ययोजना॥ आक्षेपोस्यसमाधानंव्या-ख्यानंषड्विधंमतम् ॥ १ ॥ ६ ॥

### ३७अथ महापुराणानामानि-

ब्राह्मंपाद्मंवैष्णवंचशैवंभागवतंतथा ॥ नारदीयाह्वयंषष्ठंमार्कंडेयंतु-सत्तमम् ॥ १ ॥ आग्नेयंचभविष्यंचब्रह्मकैवर्तकंतथा ॥ लैंग्यंवाराहकं-स्कांदंवामनंकौर्ममेवच ॥ २ ॥ मात्स्यंचगारुडंचैवब्रह्मांडंचततःपरम्॥ अष्टादशप्रभेदानिव्यासेनोक्तानिभामिनि॥ ३ ॥१८॥

### ३८ अथोपपुराणनामानि-

तथैवोपपुराणानितावंत्येवमहांतिच॥ चातुर्लक्ष ४००००० प्रमाणे नचेक्रपाराशरोमुनिः॥ १ ॥ आद्यंसनत्कुमारोक्तंनारसिंहंद्वितीयकम्॥ स्कां दंचशिवधर्माख्यंदौर्वाख्यंनारदीयकम् ॥ २ ॥ कापिलंमानवंचैवशौक्रंब्र ह्मांडमेवच ॥ वारुणंकालिकाख्यंचमाहेश्वरसमीरितम् ॥ ३ ॥ सांबं-सौरंचमारीचंपाराशर्यंचभार्गवम् ॥ एतान्युपपुराणानिवेदव्यासोदिता-निहि ॥ ४ ॥ १८ ॥

## ३९ अथ पुराणदेश्यग्रन्थाः—

काव्येतिहासकथनकल्पवृत्तादिनामभिः॥ शैववैष्णवसाराख्यैरतिचित्रकथान्वितैः॥ १॥ पुराणाभिन्नान्यन्यानिकानिचित्संतिभामिनि ॥४॥

## ४० तत्रकाव्येतिहासग्रन्थाः—

काव्यंरामायणंप्रोक्तमितिहासंतुभारतम् ॥ इतिहासोत्तमंतद्वदितिहाससमुच्चयम् ॥ १ ॥ हरिवंशस्तुकथितःसर्वार्थपरिबृंहितः ॥ शेषधर्मह्वयश्चान्यःकथितोलोकपावनः ॥ २ ॥ ५ ॥

## ४१ अथ पुराणवृत्ताः—

दशचैवपुरावृत्ताःसंतिज्ञानोपपादकाः ॥ तेष्वादिमोहरिश्चन्द्रमाहात्म्यकथनक्रमः ॥ १ ॥ सावित्र्युपाख्यानमपिपृथुभूपचरित्रकम्॥ चतुर्थस्तुनलोदंतस्सौदासोदंतएवच॥ २ ॥ षष्ठःकौशलवोदंतःमांधातुश्चरित्रकम् ॥ ततोरुक्मांगदोदंतोदौष्यंतोदंतएवच ॥ ३ ॥ धुंधुमारस्यमाहात्म्यंपुरावृत्तावबोधिताः ॥ शिवधर्माह्वयंशास्त्रंविष्णुधर्माह्वयंतथा ॥ ४ ॥ तथाचतुर्लक्ष (४००००० श्लो०) मानमेषांग्रंथप्रमाणकम् ॥ पुराणभिन्नान्येतानिकीर्तितानिमनीषिभिः॥ ५॥ १२॥

## ४२ अथ कल्पग्रन्थाः—

कल्पास्तुसप्तविज्ञेयाःपृथक्सप्तसहस्रकाः ॥ वैद्याधरस्तुप्रथमोनानाचित्रकथाश्रयः ॥ १ ॥ द्वितीयोज्ञानवासिष्ठस्तृतीयोप्सरसाह्वयः ॥ यायातस्तुचतुर्थस्स्यात्पंचमोमोहनाह्वयः ॥ २॥ धर्माधर्माह्वयष्षष्ठोयोनिकल्पस्तुसप्तमः ॥ एतेसर्वार्थदातणांश्रवणात्पापहारिणः ॥ ३ ॥७॥

प्रकारान्तरम्-( अन्यत्र )-प्रथमश्चण्डिकाकल्पष्षोढाकल्पस्ततःपरम् ॥ तृतीयष्षोडशीकल्पः कल्पः पञ्चाक्षराभिधः ॥ १ ॥ श्रीमदष्टाक्षरीकल्पः दुर्गाकल्पस्तथैवच ॥ रामतारककल्पश्चशूलिनीकल्पएवच ॥ २॥ ततःप्रत्यंगिराकल्पःइन्द्राक्षीकल्पएवच ॥ ततोधूमावतीकल्पश्शीतलाकल्पएवच ॥ ३॥ स्वप्नवाराहिकाकल्पस्तृचकल्पस्त

थैवच॥ लक्ष्मीनृसिंहकल्पश्चकुहूकल्पस्ततःपरम् ॥ ४ ॥ अनन्तकल्पस्त्रिपुरसुन्दरीकल्पएवच ॥ अश्वत्थकल्पःतुळजाभवानीकल्पएवच ॥ ५ ॥ शुद्धवाराहिकाकल्पआसुरीकल्पएवच ॥ तथैवबगलाकल्पःकल्पोवटुकभैरवः ॥ ६ ॥ दशपापहराकल्पस्स्वर्णाकर्षणभैरवः ॥ राजमातङ्गिकाकल्पःकल्पोब्रह्मास्त्रनामकः ॥ ७ ॥ कल्पोलघुश्श्यामलायाःकल्पश्चैवाश्वलायनः ॥ दत्तात्रेयाभिधःकल्पःकार्तवीर्याभिधःपरम् ॥ ८ ॥ चन्दिरापरमेश्वर्याःकल्पोहनुमतःपरः ॥ एतेकल्पावेदमूर्तिसंख्याकाःपरिकीर्तिताः ॥ ९ ॥ ३४ ॥

## ४३ अथ स्मृतयः—

विष्णुःपराशरोदक्षःसंवर्तोव्यासहारितौ ॥ शातातपोवसिष्ठश्चयमापस्तंबगौतमाः ॥ १ ॥ देवलश्चैवशंखश्चभरद्वाजोशनास्त्रयः ॥ शौनकोयाज्ञवल्क्यश्चेत्यष्टादशमुनीश्वराः ॥ २ ॥ एतैःप्रवर्तितालोकेस्मृतयोष्टादशोत्तमाः ॥ १८ ॥

## ४४ अथोपस्मृतयः—

उपस्मृतिप्रवक्तारोऋषयोष्टादशस्मृताः ॥ जाबालिर्नाचिकेतश्चस्कंदलोकाक्षिकश्यपाः ॥ १ ॥ सनत्कुमारोलिखितःशंतनुर्जनकस्तथा ॥ व्याघ्रःकात्यायनोबभ्रुःजातूकर्णःकपिर्नलः ॥ २ ॥ बोधायनःकणादश्चविश्वामित्रोमहातपाः॥सुमंतुरेतेमुनयस्तथोपस्मृतिकारिणः॥ ३ ॥ १८।

## ४५ अथ स्मृतिस्थविषयविभागः—

आचारोव्यवहारश्चतथाकालविनिर्णयः ॥ प्रायश्चित्तक्रमःश्राद्धंपंचस्मृतिषुयोजिताः ॥ १ ॥ ५ ॥

## ४६ अथ पुराणस्थविषयविभागः—

सर्गश्चप्रतिसर्गश्चवंशोमन्वंतराणिचं ॥ वंशानुचरितंचैवपुराणेषुप्रकीर्त्यते ॥ १ ॥ ५ ॥

४७ अथ काव्यस्थविषयविभागः—

नगरार्णवशैलर्तुचंद्रार्कोदयवर्णनम् ॥ उद्यानसलिलक्रीडामधुपानरतोत्सवाः ॥ १ ॥ विप्रलंभोविवाहश्चकुमारोदयवर्णनम् ॥ मंत्रद्यूतप्रमाणानिनायकाभ्युदयस्तथा ॥ २ ॥ काव्येत्वष्टादशविधावर्ण्यतकाव्यवेदिभिः ॥ १८ ॥

४८ अथ वैदिकतान्त्रिकग्रन्थाः—

आगमानांप्रभेदाश्चकथ्यंतेत्रममप्रिये ॥ आदौवैदिकतंत्राणामनुक्रमणिकोच्यते ॥ १ ॥ सर्वज्ञानोत्तरंचंद्रज्ञानंज्ञानार्णवाह्वयम् ॥ आरुणेश्वरतंत्रंचविशुद्धेश्वरनामकम् ॥ २ ॥ त्रैपुरंतुमहादेवंतत्रंन्यायोत्तरंततः ॥ कालासारंकालवादतंत्रंयोगीश्वरीशतम् ॥ ३ ॥ पूर्वाम्नायाह्वयंदक्षिणाम्नायाख्यमनुत्तमम् ॥ पश्चिमाम्नायकाभिख्यमुत्तराम्नायनामकम् ॥ ४ ॥ अनुत्तराम्नायतंत्रमूर्ध्वायाह्वयंतथा ॥ कुंडीश्वरमतंवीणातंत्रंगुह्याह्वयंचतत् ॥ ५ ॥ कुलचूडामणीतंत्रंकुलासाराह्वयंततः ॥ हृद्भेदंमातृभेदंचवातुलंवातुलोत्तरम् ॥ ६ ॥ सर्ववीरमतञ्चैवत्रोतालंत्रोतलोत्तरम् ॥ बहुरूपाष्टकंचैवयामलाष्टकमेवच ॥ ७ ॥ किरणाख्यमहातंत्रमेकत्रिंशदिमानिहि ॥ अनुसृत्यतुवेदोक्तकर्माण्यनुचरंतिहि ॥ ८ ॥ ३१ ॥

४९ अथावैदिकतन्त्राणि—( पु० अन्यत्रापि )

अवैदिकाचारवतांतन्त्राणांक्रमउच्यते ॥ महामायाशंबरंचयोगिनीजालशंबरम् ॥ १ ॥ तत्त्वशंबरकंचैवकुलार्णवमतःपरम् ॥ महासंमोहनंचैवरूपिकामतमेवच ॥ २ ॥ विरूपिकामतंचैवनित्याषोडशिकाह्वयम् ॥ परिशिष्टानंदतंत्रममरेश्वरमेवच ॥ ३ ॥ वामजुष्टंकुलोद्दिष्टंरूपभेदंतुकामिकम् ॥ पंचामृतंचकल्याणंभूताख्यंवैश्रवाष्टकम् ॥ ४ ॥ राजितंगारुडंबालातंत्रंवासुकिनामकम् ॥ महाकालीमतंचैवमहावीरावतीमतम् ॥ ५ ॥

ललिताज्ञानतंत्रंचललितातंत्रमेवच॥महाकुलेश्वरीचूडामणितंत्रमनुत्तमम्।
॥६॥त्रयस्त्रिंशत्प्रभेदानित्र्यवैदिकवतांनृणाम्॥ ३ ३ ॥--।।प्रकारान्तरम्-
चतुष्षष्टिश्चतन्त्राणिमातृणामुत्तमानिहि ॥ महामायाशम्बरंचयोगिनी-
जालशम्बरम् ॥ १ ॥ तत्त्वशम्बरकंचैवभैरवाष्टकमेवच ॥ बहुरूपा-
ष्टकंचैवपातलाष्टकमेवच ॥२।। चन्द्रज्ञानंमालिनीचमहासम्मोहनंतथा॥
वामजुष्टंमहादेवंवातूलंवातुलोत्तरम् ॥ ३ ॥ हृद्भेदंतन्त्रभेदंचगुह्यतन्त्रंच-
कामिकम् ॥ कलावादंकलासारंतथान्यत्कुण्डिकामतम् ॥ ४ ॥
मतोत्तरंचवीणाख्यंत्रोतलंत्रोतलोत्तरम् ॥ पञ्चामृतंरूपभेदंभूतोड्डामर-
मेवच ॥ ५ ॥ कुलसारंकुलोद्देशंकुलचूडामणिस्तथा ॥ सर्वज्ञानोत्तमं-
चैवमहाकालीमतंतथा ॥ ६ ॥ आरुणेशंमोहिनीशंत्रिकुटीश्वरमेवच॥
पूर्वपश्चिमदक्षंचाप्युत्तरंचनिरुत्तरम् ॥ ७ ॥ विमलंविमलोर्जंचदेवीम-
तमतःपरम् ॥ ६४ ॥

## ९० तत्रभैरवाष्टकतन्त्राणि-

सिद्धभैरवतंत्रंचमायिकंभैरवंतथा ॥ कंकालभैरवंतंत्रंकालाग्न्या-
ख्यंचभैरवम् ॥ १ ॥ शक्तिभैरवतंत्रंचयोगिनीभैरवंतथा ॥ महाभैरवतं
त्रंचतथाभैरवनाथकम् ॥ २ ॥ ८ ॥

## ९१ बहुरूपाष्टकतन्त्राणि-

ब्राह्मीमाहेश्वरीचैववाराहीचैववैष्णवी ॥ इन्द्राणीचैवचामुण्डाशिव-
दूतीकुमारिका ॥ १ ॥ एतन्नामानितन्त्राणिबहुरूपाष्टकानिहि ॥८॥

## ९२ अथोपतन्त्राणि-

एवमेवोपतंत्राणिषोडशात्रचसंतिहि ॥ मंत्रार्णवंमंत्रसारंमहाकालंतु-
शांभवम् ॥ १ ॥ षट्कालागमतंत्रंचमूलशाक्तेयनामकम् ॥ उड्डामरे-
श्वरंराजतंत्रंलाकुलिकेश्वरम् ॥ २ ॥ तथामृगमुखीतंत्रंचंडरुद्रेश्वरंततः॥
सौभाग्यवल्लरीतंत्रंतालंचंडेश्वरंतथा ॥ ३ ॥ हलमेखलकंशैवंकौतुकं-
चेतिवैक्रमात् ॥ पंचवक्त्रस्यवक्त्रेभ्यःपंचभ्यःपरिजज्ञिरे ॥४ ॥ १६॥

## ५३ अथाऽऽगमग्रन्थाः-

अष्टाविंशतिसंख्याकाःकामिकाद्यामहागमाः ॥ तेषामाद्यःकामिकाख्योद्वितीयःकारणागमः ॥ १॥ अजितागमनामातुतुर्यश्चित्रागमाह्वयः॥ योगजश्चैववेदस्यसद्योजातमुखाच्चयुताः॥ २॥ (ग्रन्थपातः) जयागमोवीरसंज्ञागमोविश्वासकागमः॥स्वायंभुवनलानामतवघोरमुखसंभवाः ॥ ३ ॥ कारवोमकुटश्चैवचंद्रज्ञानाह्वयस्तथा ॥ बिंबाख्योविमलाख्यश्चमुखात्तत्पुरुषाच्चयुताः ॥ ४ ॥ प्रोद्गीतश्चैवसिध्यश्चललितागमएवच ॥ सर्वोत्तरश्चसंतानकिरणौपारमेश्वरः ॥५ ॥ वातुलश्चापिचेशाननामकाद्वदनाच्चयुताः ॥ एतेष्टाविंशतिश्चैवागमाःप्राधान्यतःस्मृताः ॥६ ॥ २८॥-॥ प्र० ललितागमएवादौततश्शैवागमश्शुभः ॥ पाञ्चरात्रागमःप्रोक्तःकारणागमएवच ॥ १ ॥ वैखानसागमःपश्चात्ततोमन्त्रागमोमतः ॥ ऋतुसंख्यास्तुविज्ञेयाआगमाःपरिकीर्तिताः ॥ २ ॥ ६ ॥

## ५४ अथ वैष्णवागमाः-

वैखानसंपांचरात्रंप्रतिष्ठासारमेवच ॥ विज्ञानललितंचेतिचत्वारोवैष्णवागमाः ॥ १ ॥ ४ ॥

## ५५ अथोपागमानांसङ्ख्यामात्रम्-

एतेभ्यश्चसमुत्पन्नापृथक्पृथगुपागमाः ॥ षण्णवत्युत्तरशतसंख्याकाःपरिजज्ञिरे ॥ १ ॥ १९६ ॥

## ५६ अथ संहिताकर्त्तृणांनामानि-

संहिताशास्त्रकर्तारःशतंवैऋषयःस्मृताः ॥ हयग्रीवश्चगर्भश्चशौनकोमनुरेवच ॥ १ ॥ बोधायनस्सुमंतुश्चयाज्ञवल्क्यश्चवातुलः ॥ व्यासोबृहस्पतिश्चैवयमोगौतमएवच ॥ २ ॥ प्राजापत्यत्रिमौङ्गल्यावासिष्ठोभार्गवस्तथा ॥ शातातपोवामदेवोवृद्धशातातपस्तथा ॥ ३ ॥ जमदग्निर्जैमिनिश्चजातूकर्णश्चजाजलिः ॥ जावालिर्जैलनित्यश्चजानं-

न्तिर्जह्नुरेवच ॥ ४ ॥ ज्योतिष्मान्जीवलश्चैवचीतिहोत्रस्ततःपरम् ॥ शालिहोत्रःसुहोत्रश्चवसुहोत्रस्तदनंतरः ॥ ५ ॥ दशहोत्रोयज्ञहोत्रःशतहोत्रस्तथैवच ॥ नित्यहोत्रः प्राणहोत्रः सहस्तोत्रस्तथैवच ॥ ६ ॥ अत्र्यगस्त्यासुरीविश्वामित्राष्टावक्रपिंगलाः ॥ पृगाधचूलीभृगवःसुयज्ञश्चततःपरम् ॥ ७ ॥ मतंगश्चयमश्चैवराजलःस्यात्तथैवच॥ वृंदावनश्चोलूकश्चवात्स्यायनमृकंडुकौ ॥ ८ ॥ रुचकः पिप्पलादश्चच्यवनःसूतएवच ॥ कपिलोनैध्रुवःकाश्यपएवंऋष्यश्रृंगकः ॥ ९ ॥ शुनःशेपोदीर्घतमाः कौंडिन्यस्तदनंतरः ॥ मेधातिथिश्चलौगाक्षिःशुद्धकालप्रदीपकौ ॥ ॥ १० ॥ विष्णुवृद्धश्चवत्सश्चवार्ध्रश्वःसंकृतिस्तथा ॥ बृहदुक्थ्यः कपिश्चैवहारीतः कुत्सएवच ॥ ११ ॥ निजडुश्चैववभ्रूश्चकक्ष्यवाननिधिस्तथा ॥ बाष्कलश्चफणीपूतिमाषोनकुलएवच ॥ १२ ॥ नारायणोदेवरातः कालीमंत्रप्रदीपकौ ॥ योगनारायणीयांशुरत्नमाल्याभिधास्तथा ॥ १३ ॥ जातकौमुदिकाभूमिःसुधासारस्तथैवच ॥ सनत्सुजातोयवनोवालखिल्यइतिक्रमात् ॥ १४ ॥ संहितासंप्रणेतारःऋषयःकीर्तिताअमी ॥ वेदोपवेदवेदांगागमतंत्रक्रमादिकम् ॥ १५ ॥ तत्तत्कर्तृप्रभेदश्चकीर्तितश्चैवमत्रहि ॥ १०० ॥

---

### ८७ अथ शैवागमदेवतास्वरूपम्-

( स्कांदेलक्ष्मीनारायणसंहितायाम् )

शैवागमश्चैवदीक्षावहःपंचाक्षरोऋषिः ॥ शुद्धस्फटिकसंकाशस्त्रिपुंड्रांकितमस्तकः ॥ १ ॥ त्र्यक्षश्चर्मपरीधानःवैयाघ्राजिनसंस्थितः ॥ बद्धपद्मासनोद्व्यष्टभुजैःखट्वांगशूलके ॥ २ ॥ शक्तिदंडौचापबाणौ वराभीतिगदांकुशान् ॥ चिन्मुद्रिकांचाक्षमालांपुस्तकंचकमंडलुम् ॥ ३ ॥ खड्गखेटौदधानोयंपायाच्छैवागमोन्वहम् ॥ श्वेतवर्णः ॥ १ ॥

## ९८ अथ वैखानसागमदेवतास्वरूपम्-

( स्कांदेलक्ष्मीनारायणसंहितायाम् )

वैखानसागमोदेवस्त्वेणकृत्तिवरासनः ॥ बद्धपद्मासनःप्रोक्तःश्वेतवर्णश्चतुर्मुखः ॥ १ ॥ अष्टभिस्तुभुजैर्धत्तेदरारीचवराभयौ ॥ चिन्मुद्रांपुस्तुकंकुंडीमक्षंदक्षादितःक्रमात् ॥ २ ॥ पीतंवसानोवसनंत्रिपुंड्रांकितमस्तकः ॥ जटीबद्धकिरीटीचसदादद्याच्छुभानिनः॥३॥ श्वेतवर्णः॥१॥

## अथ स्त्रीशूद्रादीनामुपदेशक्रमः-( तंत्रसारे उपदेशपटले )

## ९९ अथ पञ्चधागुरवः-

उत्तमःपंचधाप्रोक्तोगुरुर्ब्रह्मात्मदर्शिभिः ॥
ब्रह्मचारीगृहस्थश्चवानप्रस्थश्चभिक्षुकः ॥ १ ॥

टीकु-तंत्रसारोक्तवाद उपदेशपटलदल्लि ब्रह्मवेत्तरुगळिंद हेळल्पट्टिरुवदेनंदरे-ब्रह्मचारियु गृहस्थनु वानप्रस्थनु यतियु ॥ १ ॥

अतिवर्णाश्रमीतेषुक्रमाच्छ्रेष्ठाविचक्षणाः ॥
अश्रेष्ठानांहरेश्रेष्ठागुरवःपरिकीर्तिताः ॥ २ ॥५ ॥

टीकु-वर्णाश्रमातीतनाद अवधूतयोगियु यी ऐदुजनरु योग्यरागिद्दरे वब्बरिगिंतवब्बरु श्रेष्ठरादगुरुवेनिसुवरु । यलै विष्णुवे तमगे योग्यतेकडमेयागिद्दरे तमगिंत श्रेष्ठरु क्रमवागि गुरुगळेनिसिक्कोळ्ळुवरु । अदु ह्यागेंदरे ॥ २ ॥

ब्रह्मचारीगृहस्थश्चवनस्थस्तुयतेरपि ॥
विद्योत्कर्षबलेनैवगुरुर्भवतिनान्यथा ॥ ३ ॥

टीकु-गृहस्थाश्रमवंतनिगे ब्रह्मचारियु यतिगे वानप्रस्थनु विद्योत्कर्षबलदिंद मात्रवे गुरुवेनिसुवनु । मत्तोंदुप्रकारदिंदलु आगुबदिल्ला ॥ ३ ॥

गृहस्थोपिवनस्थस्ययतेरप्यंबुजेक्षण ॥
विद्योत्कर्षबलेनैवगुरुर्भवतिनान्यथा ॥ ४ ॥

टीकु-हागे गृहस्थनु वानप्रस्थनिगे गुरुवागुवनु । वनस्थनु यतिगू गुरुवागुवनु । यल्ले कमलाक्षने आश्रमदल्लिकडमेयादाग्यु विद्योत्कर्षदिंद श्रेष्ठनागिरुवनेन्दु अनिसिकोळ्ळुवनु यीअर्थदल्लिसंशयविल्ल ॥ ४ ॥

वानप्रस्थाश्रमस्थोपितथासंन्यासिनोहरे ॥

विद्योत्कर्षबलेनैवगुरुर्भवतिनान्यथा ॥ ५ ॥

टीकु-हागे वानप्रस्थनु संन्यासिगु गुरुवागुवनु । यल्ले पुरुषोत्तमने वर्णाश्रमगळन्नु अतिक्रमिशिरुव अवधूतयोगियादाग्यु विद्याबलविल्लदिद्दर गुरुवागुवदिल्ल ॥५॥

अतिवर्णाश्रमीप्रोक्तोगुरुस्सर्वाधिकोभवेत् ॥

नकस्यापिभवेच्छिष्योयथाहंपुरुषोत्तम ॥ ६ ॥

टीकु-केळै विष्णुवे वर्णाश्रमगळन्नतिक्रमिशिद योगियु सर्वरिगिंतलु श्रेष्ठनागुवनु । आतनु तन्नंते यारिगू शिष्यनागुवदिल्ल ॥ ६ ॥

६० अथ स्त्रीशूद्रविषयेविशेषः-(तत्रैवस्थलांतरे)

शूद्राणांच तथास्त्रीणांगुरुत्वंनैवविद्यते ॥

पतिरेवगुरुस्त्रीणांजनकस्तुततोधिकः ॥

अथवाब्रह्मवित्प्राज्ञोयोग्याभावेतयोर्वरः ॥ १ ॥

टीकु-मत्तेनेंदरे स्त्रीयारिगु शूद्ररिगु उपदेशवन्नु माडुव गुरुत्वाधिकारवु इल्लवेइल्ल । आदरु स्त्रीयरिगे पतियेमुख्यगुरुवु।आतनिगिंतलु तंदेयु गुरुवेनिसुवनु ।अवरिब्बरिगु मंत्रोपदेशमाडलुयोग्यतेयु सालदिद्दल्लि ब्रह्मज्ञानिये उत्तम गुरुवेनिसुवनु ॥ १ ॥

शूद्राणामुत्तमोवर्णःक्रमादत्युत्तमोत्तमः ॥

पुराणपठनेमंत्रेज्ञानमार्गप्रदर्शने ॥ २ ॥

टीकु-शूद्ररिगे पुराणपाठवन्नु मंत्रोपदेशवन्नु ज्ञानोपदेशवन्नु माडुवदक्कु तमगिंतलु वैश्य क्षत्रिय ब्राह्मण यी क्रमदिंद वब्बरिगिंतवब्बरु उत्तमोत्तमगुरुवेनिसुवरु॥२॥

पत्युराज्ञावशादेवस्त्रीणांमन्त्रेधिकारिता ॥

व्रतमंत्रोपवासेस्यादन्यथानिष्फलंभवेत् ॥ ३ ॥

टीकु-स्त्रीयरुगळिगे मंत्रोपवासमोदलाद तंत्रमार्गाधिकारमात्रवे पतियाज्ञेयिंद उंटागुवदु । पतियआज्ञेयिल्लदे प्रवर्तिसलुसकलवु निष्फलवागुवदु ॥ ३ ॥

भर्तुराज्ञांपुरस्कृत्यगुरुमन्यंसमाश्रयेत् ॥
अभावेजनकस्याज्ञांनस्वातंत्र्यंभवेत्स्त्रियः ॥ ४ ॥

टीकु–स्त्रीयरिगे पतिये मुख्यगुरुवाद्दरिंद अवनिगे मंत्रोपदेशदयोग्यतेयिल्लदिद्दरे अवन आज्ञेयिंदले मत्तोब्बगुरुवन्नु आश्रयिसबेकु । अवनतरुवाय तंदेयआज्ञेयनाश्रयिसबेकु । स्त्रीयरिगे स्वातंत्र्यविल्ल ॥ ४ ॥

६१ अथ सौं॰स्त्रीणांशिरःस्नाननिषेधः–(शैवरत्नाकरे सूतसंहि॰)

पुण्यक्षेत्रेपुण्यतीर्थेग्रहणेपुण्यवासरे ॥
जाताशौचेमृताशौचेरजोदोषप्रसूतिषु ॥ १ ॥
पुत्रीपुत्रविवाहांगेदीक्षांगेभर्तुरेवहि ॥
सुवासिन्याश्शिरस्स्नानंनत्वभ्यंगंविनाक्वचित् ॥ २ ॥

टीकु–शैवरत्नाकरदल्लि सूतसंहितेयल्लिरुवदेनंदरे–सुवासिनीयरु पुण्यक्षेत्र पुण्यतीर्थगळल्लियु ग्रहणादिपुण्यकालदल्लियुजाताशौचादिगळल्लियु रजस्वलेयादागलु प्रसववादागलु पुत्रीपुत्रविवाहदल्लियु पतियुआचरिसुव यागादिदक्षिगेळल्लियु शिरः–स्नानवन्नु माडबहुदु । यी प्रकृतगळल्लदे अभ्यंगहोरतागि शिरःस्नानसर्वथा योग्यवल्ल ॥ २ ॥

६२ सौं॰ अथ स्त्रीणां नियमाः–( शैवरत्नाकरे )

स्त्रीणांहिभर्तृशुश्रूषाधर्मोनान्यस्सनातनः ॥
मदर्चनंहिकल्याण्यानियोगोभर्तुरस्तिचेत् ॥ १ ॥
यानारीभर्तृशुश्रूषांत्विहायव्रततत्परा ॥
सानारीनिरयंयातिनात्रकार्याविचारणा ॥ २ ॥
अश्मारोहणमारभ्यस्त्रीणांगौर्यर्चनंपरम् ॥
पुराणपठनंश्रेयोनवेदाध्ययनादिकम् ॥ ३ ॥

टीकु–शैवरत्नाकरदल्लि हेळिरुवदेनंदरे–यलैविष्णुवे स्त्रीयरिगे पतिशुश्रूषे-परमधर्मवु शाश्वतवादंथाद्दु।अदक्किंतलुअधिकवाददुमत्तोंदुइल्लवाद्दरिंद पतियअनुज्ञेया-दरेने पार्वतियःदनन्नु पूजेमाडबहुदु ।यावस्त्रीयु पतिय आज्ञेयं होरतु व्रतादिगळन्नु

आचरिसुवळो अवळु नरकवं होंदुवळु संशयविल्ल । स्त्रीयरिगे व्रतोपवासादिनियम यावदंदरे । विवाहकालदल्लि सप्तपदीतरुवाय अश्मारोहणवन्नु मोदलुगोंडु गौरीपूजेयु विध्युक्तवाद्दरिंद श्रेष्ठवु । तदारभ्य वेदाध्ययनहोरतागि पुराणादिपठनवु श्रवणवु श्रेयस्करवेंदुहेळिरुवदु । आद्दरिंद स्त्रीयु पतिय आज्ञेयिंदले व्रतादिगळन्नाचरिसबेकु॥

## ६३ अथ सौ० स्त्रीणांगौर्यर्चनमंत्रौ-(ब्रह्मोत्तरखण्डे अन्यत्रच)

नित्यमार्यार्चनंकार्यंगौर्याःपंचाक्षरेणतु ॥
नमोन्तंवैष्णवंशाक्तंशैववंवाचान्यदैवतम् ॥ १ ॥
मंत्रःप्रशस्यतेस्त्रीणांनचस्त्रीनपुमानयम् ॥
महापातकदावाग्निस्सोयंमंत्रःषडक्षरः ॥ २ ॥
प्रणवेनविनामंत्रस्सोयंपंचाक्षरस्स्मृतः ॥

टीकु-नित्यवु गौरीपंचाक्षरीमंत्रदिंदले गौरीपूजेयंमाडबेकु । स्त्रीयरिगे प्रणवव-र्जितवागियेमंत्रोपदेशवंमाडतक्कद्दु । आद्दरिंदवैष्णवशक्तिशैवमंत्रगळु नमोंतवागिये उपदेशमाडतक्कद्दु । यीमंत्रवु नमोंतवादकारणक्कीबमंत्रवेनिशिकोळ्ळुवदु । आद्दरिंद यिदेक्रमदिंदले स्त्रीयरिगे उपदेशवंमाडबेकु । ब्रह्मोत्तरखंडदल्लि हेळिरुवदेनेंदरे-प्रण-वयुक्तवाद यी मंत्रवे महापातकगळिगे दावाग्निस्वरूपवाद षडक्षरीयानसुदु।यिदेमंत्रवें प्रणवरहितवादरे पंचाक्षरीयनिसिकोळ्ळुवदु ॥ १७ ॥

## ६४ अथ मोक्षापेक्षिणांस्त्रीशूद्रसंकीर्णानांमन्त्रः-

स्त्रीभिश्शूद्रैश्चसंकीर्णैर्ध्यायतेमुक्तिकांक्षिभिः ॥
नालंक्रियानहोमश्चनसंस्कारोनतर्पणम् ॥ १ ॥
नकालेषूपदेशश्चसदाशुचिरयंमनुः ॥
प्राणायाममनेनैवतेनैवाचमनंवरम् ॥ २ ॥

टीकु-यीपंचाक्षरीमंत्रवे मोक्षार्थिगळादस्त्रीशूद्रसंकीर्णरुगळिंदध्यानिसल्पडुवदु। यीपंचाक्षरीमंत्रक्के स्त्रीयरुमुंतादवरिंदभूशुद्ध्यादिआह्निकाविस्तारवु होमतर्पणादिगळु केळसविल्ल।मत्तु सर्वकालदल्लुपरिशुद्धवादमंत्रवाद्दरिंदयीमंत्रोपदेशक्के ग्रहणपर्वकालादि नियमगळु केळसविल्ल।स्त्रीयरुगाळिंद प्राणायामवु आचमनवु।यिदेमंत्रदिंदले माडतक्कद्दु॥

## ६५ अथैतन्मन्त्रैःस्त्रीकर्तव्यपूजाप्रतिमादिविशेषाः-

तेनैवपूजयेद्देवंदेवींवालोकमातरम् ॥
प्रतिमास्वर्चयेद्विष्णुदेवींवागरिकन्यकाम् ॥ १ ॥
लिङ्गेष्वर्चातथेशस्यमंडलेचान्यदेवताः ॥
देवतायाःकलाह्वानंनप्रतिष्ठाविधिस्त्रियाः ॥ २ ॥

टीकु-स्त्रीयरुगळु शिवपूजेयन्नु गौरीपूजेयन्नु यिदेमंत्रदिंदले माडतक्कद्दु । याव आकृतियन्नु यिरिशिपूजिसबेकेंदरे विष्णुवन्नु गौरियन्निरिशिकोंडपूजिसतक्कद्दु । ईश्वरनंपूजिसबेकादरे शिवलिंगवन्निरिशिकोंडेपूजिसतक्कद्दु । मिगिलाददेवतेगळन्नु मंडळदल्लियेपूजिसतक्कद्दु । यिष्टेहोरतु स्त्रीयरुगळिगे देवता कल आवाहनेयु प्राणप्रतिष्ठाविधानवुकडदु । आद्दरिंदपुरुषरिंद प्राणप्रतिष्ठितवाद लिंगविग्रहगळन्नु पूर्वो क्तरीतियिंदलेपूजिसबेकु ॥ ( मण्डलवंदरे रंगवल्यादिचित्र ) ॥ २ ॥

## ६६ अथ संवत्सरादिग्रहांतनाम्नांवर्णसंख्याः-

मनुर्द्वयेतृतीयेभंतुरीयेषोडशैवतु ॥ पंचमेतुद्वयंप्रोक्तमब्दानांवर्णकं-बुधैः ॥ १ ॥ पक्षद्वयंद्विसंख्याकमयनेपांडवास्स्मृताः ॥ ऋतूनांतुत्रयंमूर्तौनेत्रसंख्यात्रयंतथा ॥ २ ॥ मासषट्कंवह्निसंख्याद्विसंख्यानेचतुष्टयम् ॥ युगसंख्याद्वयंप्रोक्तंमासानांवर्णतोमया ॥ ३ ॥ त्रिसंख्यानवकंप्रोक्तंयुगसंख्याचतुष्टयम् ॥ द्विसंख्यायांत्रयंप्रोक्तंतिथीनांवर्णिताबुधैः ॥ ४ ॥ द्विसंख्यातुयुगाःप्रोक्ताःत्रयसंख्याद्वयंतथा ॥ एकंवैयुगसंख्यायां वाराणांकथितोजनैः ॥ ५ ॥ बाणसंख्याद्वयंप्रोक्तंयुगसंख्याऋषिस्तथा ॥ अष्टकंचद्विसंख्यायांत्रयेचैकादशस्मृताः ॥ ६ ॥ नक्षत्राणांवर्णसंख्याकथिताऋषिभिःकलौ ॥ द्विसंख्यायांपंचदशत्रयेचैवदशस्मृताः ॥ ७ ॥ वेदसंख्-ाद्वयंप्रोक्तंयोगानांवर्णतोजनैः ॥ अष्टकेतुत्रिवर्णाःस्युरक्षिसंख्याद्वयंतथा ॥ ८ ॥ एकंचवेदसंख्यायां करणानामितिस्मृताः ॥ द्विसंख्यायांरसाःप्रोक्तास्त्रिसंख्यापंचकंतथा ॥ ९ ॥ एकंचयुगसंख्यायांराशीनांकथितास्तथा ॥ वेदसंख्याद्वयंप्रोक्तंद्विसंख्या

ऋषयस्तथा ॥ १० ॥ ग्रहाणांकथितावर्णानवानांज्ञप्तयेबुधैः ॥
शकेशालीवाहनस्यचतुष्पञ्चमुनीन्दुके ॥ ११ ॥ खरज्येष्ठसितेपक्षेसप्तम्यां
गुरुवासरे ॥ श्रीमच्चण्डीकृपादृष्ट्याकथिताकृष्णभूभुजा ॥ १२ ॥
अब्दादिग्रहपर्यंतावर्णसंख्यासतांमुदे ॥ १३ ॥

---

इतिश्रीमत्समस्तभूमंडलमंडनायमानानिखिलदेशावतंसकर्नाटकजनपदाधिष्ठानभूत-
श्रीमन्महीशूरमहासंस्थानमध्यदेदीप्यमानाविकलकलानिधिकुलक्रमागतराजक्षितिपाल
प्रमुखानिखिलनिजराजाधिराजमहाराजचक्रवर्तिमंडलानुभूतदिव्यरत्नसिंहासनारूढश्री
मद्राजाधिराजराजपरमेश्वरप्रौढप्रतापाप्रतिमवीरनरपतिबिरुदेंतेंबरंगडलोकैकवीरयदु
कुलपयःपारावारकलानिधिशंखचक्रांकुशकुठारमकरमत्स्यशरभसाल्वगंडभेरुंडध-
रणीवराहहनुमद्गरुडकंठीरवाद्यनेकबिरुदांकितश्रीमन्महीशूरपुरवराधीशश्रीकृ-
ष्णराजमहाराजविरचितेश्रीतत्त्वनिध्याख्यग्रंथेआगमादिनिरूपणंनाम-
अष्टमोनिधिस्संपूर्णः ॥ ८ ॥

---

**इति श्रीतत्त्वनिध्याख्यग्रन्थे--अष्टमआगमनिधिस्संपूर्णः ॥८॥**



श्रीः ।

अथ

# श्रीतत्त्वनिधौ-

## नवमः कौतुकनिधिः ।

अथच्छदाक्षादिनानाकौतुकावहक्रीडादयः-

१ तत्रादौ-चामुण्डेश्वरीछदक्रीडाविवरणम्-(चामुण्डेश्वरीगंजीफ़्)

चामुण्डाविष्णुरीशश्च ब्रह्मागणपतिस्तथा ॥ सेनानीर्वीरभद्रश्च रामकृष्णौमहाफणी ॥ १ ॥ पुरंदरोदिनकरःशैलनाथश्चवारिधिः ॥ मन्मथोमोहिनीचैवक्रमात्षोडशदेवताः ॥ २ ॥ एकस्यादेवतायास्तुपृथगष्टादशच्छदाः ॥ राजाराज्ञीरथोवाजीपदातिर्ध्वजएवच ॥ ३ ॥ मेषादिमीनपर्यंतास्तत्तद्देवांकशोभिताः ॥ अतःपरंतुविज्ञेयाश्चक्रवर्तिपदंगताः ॥ ४ ॥ पंचविंशतिसंख्याकाःस्वतंत्राःपृथगीरिताः ॥ राजराजेश्वरीचादौकालीलक्ष्मीःसरस्वती ॥ ५ ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथैंद्राणीदंडिनीमंत्रिणीतथा ॥ ६ ॥ योगनिद्राचबालाचतथैवभुवनेश्वरी ॥ इंद्राक्षीचान्नपूर्णाचतथाषट्चक्रदेवताः ॥ ७ ॥ ततोवागीश्वरीदेवीमन्मथस्यप्रियारतिः ॥ आदौचामुंडिकाप्र्याणिहंसपत्राणिसन्तवै ॥ ८ ॥ सर्वमिलित्वापत्राणिविंशतिश्चशतत्रयम् ॥ तत्तदंकानुसारेणखेलनीय्याविचक्षणैः ॥ ९ ॥ खड्गंचक्रंवृषोहंसोमूषकोथमयूरकः ॥ दक्षवक्रंहनूमांश्चवटच्छदशयस्तथा ॥ १० ॥ नागोगजोरवेर्वि-

म्वंसवृक्षोगिरिरेवच॥ मकरस्स्यात्पञ्चबाणाहस्तस्थश्शुकएवच ॥ ११ ॥
चिह्नानिचण्डिकादीनांलेख्यानिस्वच्छदेषुवै॥ सौवर्णैश्चातिरक्तैश्चपाटलैः
श्श्वेतवर्णकैः ॥ १२ ॥ युक्तोहरिद्राजतश्चगैरिकश्चाम्पकस्तथा ॥
सैन्दूरस्थाळथळचेनयुतोहरितएवच ॥ १३ ॥ कृष्णयुक्तःहरिच्चैवमि-
न्द्रनीलस्तथैवच ॥ वर्तिरूपस्तथागौरोरक्तोत्यसितवर्णयुक् ॥ १४ ॥
पीतःकृष्णश्वेतिवर्णाश्चामुण्डादेःक्रमात्स्मृताः ॥ षोडशानांचजातीनांरा-
जराजेश्वरीक्रमात् ॥ १५ ॥ पञ्चविंशतिवर्णागांवर्णस्स्याद्धैङ्गुली-
यकः ॥ शुकच्छदानांवर्णस्तुरक्तोज्ञेयोविचक्षणैः ॥ १६ ॥
अत्रसर्वक्रीडनकेछदानांपृष्ठतोभवेत् ॥ सर्वेषामेकरूपेणरक्तोवर्णस्तुना-
न्यथा ॥ १७ ॥ दिवारात्रौचरेरांज्ञीस्याच्चामुण्डासम्प्रकीर्गिता ॥
चामुण्डायाःक्रीडनकेप्रधानाचण्डिकास्मृता ॥ १८ ॥ क्रीडाचतुर्भि
र्भवतिनन्यूनैर्नाधिकैरपि ॥ एकैकपत्ररीत्यातुचतुर्णांपत्रिकातदा॥ १९॥
एकीभवतियाराशिस्सएकोभागउच्यते ॥ पृथक्चतुर्भिर्ग्राह्याःस्युर्विंशतिः
कुशलःस्मृता ॥ २० ॥ परस्परंनैवकुर्युः पत्रिकासम्प्रदर्शनम् ॥
राजादिमीनपर्यन्तंदुर्बलंह्युत्तरोत्तरम् ॥ २१ ॥ नयस्यहस्तेहंसस्स्याद्धं-
सोग्राह्यस्तुतेनवै ॥ स्वीयपत्रेषुयच्छ्रेष्ठंतत्प्रदायमनीषिणा ॥ २२ ॥
चामुण्डार्थंसमर्प्याणिहंसपत्राणिचादितः ॥ द्वितीयेहंसपर्यायेचण्डिका-
भागपूरिका ॥ २३ ॥ सर्वादौचण्डिकादेयायस्यहस्तेस्थिताभवेत् ॥
चामुण्डायैसमर्प्याणिहंसपत्राणिनान्यथा ॥ २४ ॥ येनसंगृह्यतेभागस्तमा-
रभ्यप्रवर्तते॥ क्रीडात्वादौस्वपत्रेषुप्रबलंतुल्यजातिकम्॥ २५॥ देयंपत्रंक्रमे
णैवतदभावेत्वतुल्यकम् ॥ येनप्रदीयतेतत्रप्रबलंह्याददीतसः ॥ २६ ॥
भागंतामत्थंक्रमशोमोहिन्यामीनपत्रकम् ॥ येनान्तेक्रीडनेदत्तंजयिनंतंवि-
निर्दिशेत्॥ २७॥ अन्येपराजितास्तेनेत्येवंज्ञेयंविचक्षणैः॥ परित्यज्यविशे
षोक्तीराग्निमक्रीडनेषुवै ॥ २८॥ सामान्यांशाएवमेवेत्यवधार्यंनचान्यथा॥

श्रीचामुण्डाकृपालब्धलक्ष्मीवाणीसमृद्धिना ॥ २९ ॥ शकेशालीवाहनस्यङ्घठेन्दु[१७४८] मितेशुभे ॥ आषाढेचित्रभानोस्तुशुक्लैकादशकेरवौ ॥ ३० ॥ कृष्णराजमहेंद्रेणचामुण्डापेटिकाकृता ॥

( टीकु )—यी चामुंडेश्वरीगंजीफिगे बाजुगळु १६ के वट्टु यलेगळु ३२० के (१)—चामुंडेश्वरीबाजु १ के १८ यलेगळु चिन्नदबण्ण (२)—विष्णुबाजु १ के १८ यलेगळु यिंगलीकदबण्ण (३)—ईश्वरबाजु १ के १८ यलेनलु जंगालुबण्ण (४)—ब्रह्मबाजु १ के १८ यलेगळु पिस्ताबण्ण (५)—विश्वेश्वरबाजु १ के१८ यलेगळु बेळ्ळिबण्ण(६)—षण्मुखबाजु१ के१८ यलेगळु काविबण्ण (७)—वीरभद्रबाजु १ के १८ यलेगळु संपिगेबण्ण (८)—रामबाजु १ के १८ यलेगळु चन्द्रबण्ण (९)—कृष्णबाजु १ के १८ यलेगळ गुलडाबण्ण (१०)—महाशेषबाजु १ के १८ यलेगळु कप्पुपच्चेबण्ण (११)—इंद्रबाजु १ के १८ यलेगळु नीलिबण्ण (१२)—सूर्यबाजु १ के १८ यलेगळु वर्तिबण्ण (१३)—पर्वतराजबाजु १ के १८ यलेगळु बिळिबण्ण(१४)—समुद्रराजबाजु१ के१८ यलेगळु वूदाबण्ण (१५)—मन्मथबाजु १ के १८ यलेगळु हळदीबण्ण (१६)—मोहिनीबाजु १ के १८ यलेगळु कप्पुबण्ण ॥ ईमेरे बाजुगळ १६ के यलेगळु २८८ ॥

छूट चक्रवर्तिगळ यलेगळु २५ के (१)—महाकाली (१)—महालक्ष्मी (१)—महासरस्वती (१)—ब्राह्मी (१)--माहेश्वरी(१)--कौमारी (१)--वैष्णवी(१)—वाराही (१)--इंद्राणी (१)--मंत्रिणीश्यामला (१) दंडिनीवाराही (१)--योगनिद्रा (१)--बाला (१)--भुवनेश्वरी (१)--इंद्राक्षी १) -अन्नपूर्णा (१)—शरीरस्थषट्चक्रदेवतेगळु (१)--शाकिनी (१)—काकिनी(१)--लाकिनी (१)--राकिनी (१)—डाकिनी (१)—हाकिनी (१)—वागीश्वरी(१)—रतिदेवी ॥ वट्टु इ २५ यलेगळिगु इंगळीकदबण्ण ॥—॥ चामुण्डेश्वरी मीरा बंदवर आटवे मोदलागुवदरिंद चामुंडेश्वरी हुकुमिगे कोडतक्क इंगलीकद बण्णवुळ्ळ हंसयलेगळु७॥

वट्टु ३२० यलेगळ ॥ यीगंजीफिनल्लि चक्रवर्तिगळ मोत्त्यारि हुकुं आद्दरिंद अबुगळन्न मोहलु यिळिदुकोळ्ळबेकु ॥-॥ बाजु जोडिसुवक्रम—राजा—राणी—रथ—वजीर—पदाति—ध्वज । चामुंडेश्वरी बाजुविगे मात्र राणीस्थानक्के सिंहवाहिनी। इवु हुकुं यलेगळु॥ मेषादि मीनपर्यंत राशिगळन्नु बरदुआया बाजुविन विग्रहगळ गुरुतुगळन्नु बरदुयिरुव खर्चि यलेगळु १२ ॥ ई मेरे १६ बाजुगळन्नु जोडिशिकोंडु

मोगलायि गंजीफिनमेरिगे तऊबातलबि नातवानि तीतवानि मुंताद्दु माड्डुत्ता बरुवदु। हंसेयलेयु यारबळीलि बंदु यिरुत्तदेयो अवरिगे हंसेयलेयु बरदेयिद्दवरु यलेगे यलेयन्नु कोट्टु हंसेयलेयन्नु बूजुतेगदुकोंडु मोदलु चामुंडश्वरीमीराक्के कोडबेकु ॥ बूजु कोडतक्कवरिगे मीरा यिद्दाग्यू कोडतक्क बूजन्नु कोडबेकु ॥

बाटणिमाडुव विवर-जनगळु ४ क्के जन १ क्के दस्तु १ क्के यलेगळु ४रह्लु दस्तु २० क्के ८० यलेगळमेरिगे हंचिकोंडु आखैरु मोहिर्नीबाजुविनल्लि आखैरु मीनुयिरुव यलेयंनु आखैरु यारु हुकुं थिळियुत्तारो अवर आट गेद्दु भिक्कादवरआट खिलालेंबदागि बुद्धिवंतरु निष्कर्षेयन्नु माडिकोंडाडुवदु ॥

---

## २ अथ जगन्मोहनच्छदक्रीडाक्रमविवरणम्-

### ( जगन्मोहनगंजीफ् )

चामुण्डादक्षिणामूर्तिरुमेशेश्शरभस्तथा ॥ तांडवश्चैवकंकालोमत्स्याद्यादशमूर्तयः ॥ १ ॥ चतुर्मुखोमहेंद्रश्चदशाष्टौचाधिदेवताः ॥ एकस्यादेवतायास्तुस्मृतिसङ्ख्यामितच्छदाः ॥ २ ॥ राजाराज्ञीतथामात्यस्सेनानीस्सेवकोध्वजः ॥ एकादिराशिसंख्यान्तंतत्तच्चिह्नंप्रवक्ष्यते ॥ ३ ॥ स्त्रियोवीणावृषश्चैवशरभोडमृगोमृगः ॥ मत्स्यःकूर्मोवराहश्चमृगराजःकमण्डलुः ॥ ४ ॥ परश्वधःकपिहलौवैनतेयोहयोत्तमः ॥ हंसोमतङ्गजश्चैवज्ञातव्याःक्रमशोबुधैः ॥ ५ ॥ अतःपरंतुविज्ञेयःप्रत्येकंदेवतागणः ॥ विनायकश्चश्रीकण्ठःकालीलक्ष्मीःसरस्वती ॥ ६ ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीवटपत्रशयोहरिः ॥ ७ ॥ रंगनाथोवेङ्कटेशो यदुशैलेशषण्मुखौ ॥ वैकुण्ठेशोहरिहरोह्यर्धनारीशमन्मथौ ॥ ८ ॥ चन्द्रचूडोवीरभद्रः शिंशुमारस्त्रिविक्रमः ॥ लिंगोद्भवोगजहरोराजगोपालइत्यमूः ॥ ९ ॥ सप्तविंशतिसंख्याकाःदेवताःपृथगीरिताः ॥ शुकानांनवपत्राणिचामुण्डार्प्याणिचाग्रतः ॥ १० ॥ सर्वमिलित्वापत्राणिषष्ट्युत्तरशतत्रयम् ॥ तत्तच्चिह्नानुसारेणखेलनीयाविचक्षणैः ॥ ११ ॥ चण्ड्याद्यष्टादशानांचक्रमात्कल्प्यादिवानिशम् ॥ चण्डी-

मुख्यात्वत्रराज्ञीशेषंप्राग्वद्भवेद्ध्रुवम् ॥ १२ ॥ यस्यहस्तेतुचामुण्डाच्छ
दस्तस्मैशुकच्छदः ॥ देयोनान्यस्तुतत्सत्त्वेशुकानांपत्रिकास्वपि ॥ १३ ॥
नशुकोयस्यहस्तेस्यात्तेनग्राह्यस्सअन्यतः॥चत्वारोवापञ्चवास्युःक्रीडका-
स्त्वत्रखेलने॥ १४ ॥क्रीडकायत्रचत्वारोनवतिस्स्युःपृथक्छदाः ॥ भागा-
स्तुविंशतिस्स्युर्वैचतुष्पत्रक्रमेणच ॥ १५ ॥ लीलाशुकांकितंचित्रलिपि-
युक्पत्रिकाद्वयम् ॥ चक्रवर्तिच्छदइतिलक्ष्येच्चक्रवर्तिनाम् ॥ १६ ॥तेनपत्रा
णिचैकोनत्रिंशत्स्युर्युगखेलने ॥ सौवर्णश्चित्रवर्णश्चपाटलश्चैवचंपकः
॥ १७ ॥ कृष्णवर्णोवर्तिवर्णोतिरक्तोगैरिकस्तथा ॥ पीतश्चवर्तिवर्ण-
श्चहरिच्छ्वेतेनसंयुतः ॥ १८ ॥ चन्द्रवर्णःपीतवर्णोगैरिकोतीवरक्तकः ॥
कृष्णश्चहरितःश्वेतयुतोवर्णस्तुपाटलः॥ १९ ॥अष्टादशानांजातीनांवर्णाएते
उदीरिताः ॥ अन्येषांवैचक्रवर्तिशुकानांस्वर्णवर्णकः॥ २० ॥ शिष्टभागे-
पञ्चपत्रंनन्यूनंनाधिकंतथा ॥ क्रीडकायत्रपञ्चस्युश्छदावासप्ततिःपृथक्
॥ २१ ॥ चतुष्पत्रैःपञ्चभिर्वागणनास्याद्विभागके ॥ भागाअष्टा-
दशैवंस्युःक्रीडकाणांक्रमेणवै॥ २२ ॥ इत्येवंक्रीडकाणांचाधिक्यंकल्प्यं
यथोचितम् ॥ कृष्णजातिविभागेष्वन्तिमेपत्रेतुमोहिनी ॥ २३ ॥
उपविष्टेक्षुचापस्थसुमबाणेनविध्यती ॥ गरुत्मत्पत्रिकायेनखेलनेन्ते-
प्रदीयते ॥ २४ ॥ साज्ञेयोविजयीसस्यात्तेनचान्येपराजिताः॥शकेशाली-
वाहनस्यङ्घडेन्दु[१७४२] मितेशुभे॥ २५ ॥ श्रावणेचित्रभानोस्तुकृष्णाष्टम्यां
स्थिरेशुभे ॥ श्रीचामुण्डादयाभाजाकृष्णराजक्षमाभुजा ॥ २६ ॥
रचितावर्धतांनित्यंजगन्मोहनपेटिका ॥

(टीकु)-यीजगन्मोहनगंजीफिगे बाजुगळु १८क वट्टु यलेगळु ३६०के (१)-चामुंडेश्वरी बाजु १ के १८ यलेगळु चिन्नदबण्ण (२)-दक्षिणामूर्ति बाजु १के १८यलेगळु चन्द्रबण्ण ( ३ )-उमामहेश्वरबाजु १ क्के १८ यलेगळु जंगालबण्ण ( ४ )-शरभबाजु १ के १८ यलेगळु संपिगेबण्ण ( ५ )-तांडवेश्वरबाजु १ क्के १८ यलेगळु कप्पुबण्ण ( ६ )-कंकालबाजु १ क्क १८ यलेगळु वर्तिबण्ण ( ७ )-

मत्स्यमूर्ति बाजु १ के १८ यलेगळु थिंगलीकदबण्ण ( ८ )–कूर्मबाजु १ के १८ यलेगळु काविबण्ण ( ९ )–वराहबाजु१ के १८ यलेगळु हळदीबण्ण (१०)– नरसिंहबाजु १ के १८ यलेगळु वर्तिबण्ण ( ११ )–वामनबाजु १ के १८ यलेगळु पिस्तापच्चेबण्ण ( १२ )--परशुरामबाजु१ के १८ यलेगळु चंद्रबण्ण(१३)– श्रीरामबाजु १ के १८ यलेगळु हळदीबण्ण ( १४ )--बलरामबाजु १ के १८ यलेगळु काविबण्ण ( १५ )--कृष्णबाजु १ के १८ यलेगळु थिंगलीकबण्ण (१६) कल्किबाजु १ के १८ यलेगळु कप्पुबण्ण ( १७ )--ब्रह्मबाजु १ के १८ यलेगळु पिस्तापच्चेबण्ण ( १८ )--इन्द्रबाजु १ के १८ यलेगळु जंगालुबण्ण ॥

थीमेरे बाजुगळु१८के यलेगळु३२४।छूटचक्रवर्तिगळ यलेगळु२८के(१)--विनायक (१)--नंञ्जुडेश्वर ( १ )--महाकाली ( १ )--महालक्ष्मी ( १ )--महासरस्वती ( १ )--ब्राह्मी ( १ )--माहेश्वरी ( १ )--कौमारी ( १ )--वैष्णवी ( १ ) वाराही ( १ )--इंद्राणी ( १ )--चन्द्रशेखर ( १ )--वीरभद्र ( १ )--वटपत्रशायी ( १ )--रंगनाथ ( १ )–वेंकटाचलपति ( १ ) -चलुवराय ( १ )--षण्मुख (१)– वैकुंठनारायण ( १ )--हरिहर ( १ ) -अर्धनारीश्वर ( १ )--मन्मथ( १ )--शिंशुमार (१)--त्रिविक्रम (१)--लिंगोद्भव (१)--गजासुरहरमूर्ति(१)--राजमन्नारुकृष्ण॥ वट्टु २७ यलेगळिगु चिन्नदबण्ण चामुण्डेश्वरीमीरा बंदवर आटवे मोदलागुवदरिंद चामुण्डेश्वरीहुकुमिगे कोडतक्क चिन्नबण्णद गिणियलेगळु ९ ॥–॥ वट्टु ३६० यलेगळु ॥ बाजुगळिगे क्रमवागि–स्त्री--वीणे--वृषभ--शरभ--डमरुग–हल्ले-- मत्स्य--कूर्म--वराह--सिंह--कमण्डलु--परशु--कपि--नेगलु--गरुड--कुदुरे -हंसे--आने- ईमेरे गुरुतुगळन्नु बरेयतक्कद्दु ॥--॥ ईमेरे इरुव गंजीफिनल्लि चक्रवर्तिगळु मोःखूत्यारी हुकुमु आदरिंद मोदलु इळदुक्कोळ्ळुवदु॥--॥बाजुगळन्नु जोडिसुवक्रम–राजा राणी--सेनापति--वजीर--सेवक--६५ज--वंदरिंद हन्नेरडुसंखेगळंनु उळळ यलेगळु १२ । उभयं १८ यलेगळु॥–॥ईमेरिगे १८ बाजुगळिगु क्रमवागि जोडिशिकोंडु मोगलायिगंजीफिनमेरिगे तलवातलबि नातवानि नीतवानि मंताद्दु माडुत्ता बरुवदु॥ चामुण्डेश्वरी मीरा बंदवरिगे गिणियलेगळन्नु खर्चीयलेगळिगे कोडबेकु ॥ ॥–॥ईगंजीफु बाटणीमाडुव विवर–जनगळु४ के९०रल्लु जन १ के अव्वल आखैर दस्तुमात्रदल्लि यलेगळु५।कडमे दस्तुगळ४ल्ल दस्तुगळु२०केयलेगळु८०।जनगळु५के बाटणी माडुवविवर–जन १ के ७२ यलेगळमेरे दस्तु १ के यलेगळु ४ लु १८ दस्तुगळु॥ईमेरे यष्टु जनगळु आडबेकादरु जनके सरियागि हंचिकोंडु ४ जनगळु आडुवल्लि लीलाशुक यंबदागि बरदिरुव चिन्नबण्णद गिणीयलेगळन्नु चक्रवर्तियलेगळिगे

शेरिसि २९ चक्रवर्तिगळन्नु माडिकोंडु गिणियलेयल्लि मोहिनीयु कूतुकोंडु इक्षुचापपुष्पशरगळिंद गरुडनन्नु भेदिसुवंतेबरदिरुव यलेयंनु आखैरु हुकुमागि यारु यिळियुत्तारयो अवर आट गेद्दहु। मिक्कादवर आट खिलालेंबदागि बुद्धिवंतरु निष्कर्षयन्नु माडिकोंडाडुवदु ॥

३ अथ नवीनदशावतारच्छदक्रीडनम्–(नवीनदशावतारगंजीफ़)

चामुण्डामत्स्यकूर्मौचवराहोनृहरिर्वटुः ॥ रामोरामश्चरामश्चकृष्णः कल्कीचमोहिनी ॥ १ ॥ एकस्यादेवतायास्तुपृथगष्टादशच्छदाः ॥ राजाराज्ञीरथोवाजीपदातिर्ध्वजएवच ॥ २ ॥ मेषादिमीनपर्यंतं तत्तद्देवांकशोभिताः ॥ अतःपरंतुविज्ञेयाश्चक्रवर्तिपदांकिताः॥ ३ ॥ राजराजेश्वरीचादौब्रह्माविष्णुमहेश्वराः ॥ गजाननश्चसेनानीःसूर्यश्चेन्द्रोदिगीश्वराः ॥ ४ ॥ कामःसप्तदशश्रेष्ठाःस्वतंत्राःपृथगीरिताः ॥ देव्याश्छत्रादिधारिण्यस्सप्तपत्रेषुचेटिकाः ॥ ५ ॥ सर्वमिलित्वापत्राणिव्योमवेदाक्षिसंख्यया ॥ तत्तदंकानुसारेणखेलनीयाविचक्षणैः ॥ ६ ॥ चत्वारोवात्रयोवास्युःक्रीडकास्त्वत्रखेलने ॥ त्रयाणांक्रीडनेचैवं विशेषोज्ञायतामियान् ॥ ७ ॥ छदद्वयंचेटिकयोर्ज्ञेयंस्याचक्रवर्तिनोः ॥ चक्रवर्तिच्छदास्तेनस्मृताएकोविंशतिः ॥ ८ ॥ चण्डिकार्थंसमर्प्यास्स्युश्चेटिकापत्रिकाइमाः ॥ अहर्दिवंस्याच्चामुण्डाराज्ञीतस्माद्विचक्षणैः ॥ ९ ॥ यद्धस्तेचण्डिकापत्रंक्रीडारभ्यातुतेनवै ॥ मोहिनीजातिभागेष्वन्तिमंमीनांकितंछदम् ॥ १० ॥ क्रीडान्तेक्रीडतेयस्तुसजय्यन्यपराजिताः ॥ वर्णास्त्वेषांयथापूर्वंकल्प्यास्स्युरतियुक्तितः ॥ ११ ॥ शिष्टमन्यद्यथापूर्वंचिन्तनीयंविचक्षणैः॥श्रीचमुण्डाकृपापात्रकृष्णराजमहीभुजा॥ १२॥ क्रीडादशावताराख्यारचितावर्धतांचिरम् ॥

(टीकु)–ई नवीनदशावतार गंजीफिगे बाजुगळु १२ क्के दर १८ यलेगळ मेरे २१६ यलेगळु ॥ चक्रवर्तियलेगळु १७ ॥ उपचारस्त्रीयर यलेगळल्लि यरडु यलेगळंनु चक्रवर्तिगळिगे शेरिसिकोळ्ळबेकु ॥–॥ जनगळु ४ क्के दर ६० लु

२४० यलेगळु । हगलुरात्रिगळिगु चामण्डेश्वरिये धोरेयादद्दरिंद चामुण्डेश्वरिभीराबं दवरे मोदलाडतक्कद्दु । आखैरु मोहिनिबाजुविनल्लि आखैरु मीनुयलेयंनु आखैरु यारुहुकुं इळियुत्तारो अवरु कडमेयवरंनु खिलालु माडिदहागे निष्कर्षेयन्नु माडि आया बाजुगळिगे रंगुमुंतागि मुनासबु नोडि चामुण्डेश्वरी गंजीफ् जगन्मोहनगंजीफिनमेरे नातवानि नीतवानि मुंतागि बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## ४ अथ नवग्रहच्छदक्रीडनम्-( नवग्रहगंजीफ् )

चामुण्डाविष्णुरीशेश्वसूर्यादिर्नवकंतथा ॥ एकैकस्यतुदेवस्यपृथगष्टादशच्छदाः ॥ १ ॥ राजाराज्ञीरथोवाजीपदातिर्ध्वजएवच ॥ मेषादिमीनपर्यंतंपूर्वस्माद्दुर्बलंपरम् ॥ २ ॥ चंद्रहासश्चक्रशूलेग्रहाणांमंडलानिच ॥ एतच्चिह्नानुसारेणखेलनीयाविचक्षणैः ॥ ३ ॥ स्वर्णवर्णोतिरक्तश्चपाटलश्चकुसुम्भकः ॥ राजतोरक्तवर्णश्चहरित्पीतश्चराजतः ॥ ४ ॥ कृष्णोनीलःकृष्णवर्णोवर्णाएषांक्रमात्स्मृताः ॥ जातयश्चद्वादशैकजातेरष्टादशच्छदाः ॥ ५ ॥ चत्वारोवात्रयोवास्युःक्रीडकास्तवत्रनान्यथा ॥ ज्ञेयःक्रीडाक्रमश्चैवयथापूर्वमुदीरितः ॥ ६ ॥ चण्डिकात्वत्रराज्ञीस्याद्रात्रिन्दिवमितीरितम् ॥ केतुजातौमीनपत्रमन्तेयेनप्रदीयते ॥ ७ ॥ सजयीस्यात्परेतेनजिताइतिविनिर्णयः ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभुजा ॥ ८ ॥ सरसानांविनोदायगृहाणांपेटिकाकृता ॥

(टीकु)-' नवग्रह गंजीफिगे बाजुगळु १२ क्के दर १८ यलेगळमेरे २१६ यलेगळन्नु जनगळु ३ क्के दर ७२ यलेगळमेरे जनगळु ४ क्के दर ५४ यलेगळमेरे हंचिकोंडाडुवदु ॥ हगलु रात्रि सह चामुण्डेश्वरिये धोरे ॥ आखैरु केतुबाजुविनल्लि आखैरु भीनुयलेयंनु आखैरु यारु आडुत्तारो अवरु कडमे आटगाररन्नु खिलालु माडिदंते निश्चयिसि कडमे यावत्तु चामुण्डेश्वरी गंजीफ् आडुवमेरे बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## ५ अथ पञ्चपाण्डवच्छदक्रीडाविवरणम्–

( पञ्चपाण्डवगञ्जीफ् )

कृष्णईशस्तथाधर्मः वृकोदरकिरीटिनौ ॥ नकुलस्सहदेवश्चकौरवो-भीष्मएवच ॥ १ ॥ द्रोणःकर्णस्तथाशल्यएतेद्वादशनायकाः ॥ एकैकस्यतुनाथस्यपर्वसंख्यायुतच्छदाः ॥ २ ॥ नायकस्ततसर्तेचैव-शतांगस्तुरंगोभटः ॥ पताकाचैकमारभ्यसूर्यसंख्यावधिक्रमात् ॥ ३ ॥ चक्रंत्रिशूलंचसृणिर्गदाचापकठारिकाः ॥ छुरिकामुष्टिबाणौचपाशसर्प-कशाःक्रमात् ॥ ४ ॥ पाण्डवानांप्रभुःकृष्णइतरेषांमहेश्वरः ॥ दिवाकृष्णंपुर-स्कृत्यरात्रौतुपरमेश्वरम् ॥ ५ ॥ एतच्चिह्नानुसारेणखेलनीयाबुधैस्सदा ॥ अतिरक्तःपाटलश्चश्वेतोरक्तस्तथैवच ॥ ६ ॥ पीतोहरिच्चारुणश्चकृष्णः श्वेतश्चपीतकः ॥ नीलश्चित्रंचेतिवर्णाश्छदानांसंप्रकीर्तिताः ॥ ७ ॥ चतुर्भिर्वात्रिभिर्वापिक्रीडेयंसंप्रवर्तते ॥ विष्णुजात्यन्तिमंपत्रंमोहिन्यैये-नदीयते ॥ ८ ॥ तेनवैनिर्जितास्तस्मात्स्वयंसविजयीभवेत् ॥ शिष्टंस-र्दक्रीडनादिचण्डिकावत्स्मृतंबुधैः ॥ ९ ॥ श्रीचामुण्डाकृपापूर्णकृष्णरा-जमहीभुजा ॥ रचितावर्धतांनित्यंमहाभारतपेटिका ॥ १० ॥

(टीकु)–यीपंचपांडव गंजीफिनआटक्के बाजुगळु १२क्के दर १८यलेगळमेरिगे २१६ यलेगळंनु ३जनक्के दर ७२ यलेगळमेरिगे जनगळु ४क्के दर ५४यलेगळमेरिगे हंचिक्कों-डाडुवाल्लि हगलु आटक्के विष्णुवंनु धोरेयन्नागि रात्रि आटक्के ईश्वरनन्नु धोरेयन्नागि माडि कोंडु विष्णुबाजुविनल्लि आखैरु चक्रमोहिनीयलेयन्नु आखैरु यारु आडुत्तारयो अवरु-कडमे आटगाररन्नु खिलालु माडिदंते निष्कर्षेयन्नु माडिकोंडु कडमे यावत्तनु चामुण्डे-श्वरीगंजीफू आडुवमेरिगे बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## ६ अथ देवीदशावतारच्छदक्रीडाविवरणम्–

( देवीदशावतारगञ्जीफ् )

चामुण्डाप्रथमाज्ञेयामहाकालीदशानना ॥ महालक्ष्मीस्तृतीयाचक-मलासनसंस्थिता ॥ १ ॥ महासरस्वतीतुर्यावीणावादनतत्परा ॥ ब्राह्मी

माहेश्वरीचैवकौमारीवैष्णवीतथा ॥ २ ॥ वाराहीचतथेंद्राणीदशैता-
देवताःस्मृताः ॥ एकस्यादेवतायास्तुपुराणगणितच्छदाः ॥ ३ ॥ महारा-
ज्ञीयुवराज्ञीमंत्रिणीदंडिनीतथा ॥ पंक्तिध्वजौचक्रशंखौमृगेंद्रश्चमतंगजः
॥ ४ ॥ व्याघ्राश्वौ हरिणोहि सोमयूरश्चभुजंगमः ॥ बकमत्स्याविति प्रोक्ताः
दुर्बलाःपरतःक्रमात् ॥ ५ ॥ स्वर्णोरक्तस्तथापीतोहरितःकृष्णएवच ॥
सिंदूरश्वेतवर्णौचचंपकःपाटलस्तथा ॥ ६ ॥ दूर्वादळश्यामवर्णशि-
ल्पिभिश्चित्रकर्मभिः ॥ तत्तद्वर्णानुसारेणखेलनीयाविचक्षणैः ॥ ७ ॥
सर्वेमिलित्वापत्राणिव्योमदिक्सोमसंख्यकाः ॥ एतद्देवच्छदांतंतुव-
क्ष्यन्तेलक्षणानिवै ॥ ८ ॥ खड्गोदशाननंचाब्जंवीणाहंसोवृषस्तथा ॥
मयूरोगरुडश्चैवमहिषोगजएवच ॥ ९ ॥ जातयस्स्युःक्रीडनकेछदानां
दशईरिताः ॥ क्रीडकाश्चभवन्त्यत्रत्रयश्चत्वारएववा ॥ १० ॥
अहर्दिवश्चचामुण्डाराज्ञीस्याद्यस्यहस्तगा ॥ क्रीडारम्भस्तेनकार्य-
स्त्विन्द्राण्याश्चान्तिमच्छदः ॥ ११ ॥ मीनलक्ष्मादीयतेन्तेसजयत्यन्ये-
पराजिताः ॥ शेषंसर्वंचण्डिकायाःक्रीडावदितितद्विदः ॥ १२ ॥
श्रीचामुण्डाकृपापात्रचामराजाब्धिजन्मना ॥ श्रीकृष्णनृपचन्द्रेणश-
क्तिकौतुकपेटिका ॥ १३ ॥ जीयाद्विरचिताभूमौयावच्चन्द्रार्कतारकम् ॥

( टीकु )—यीदेवीदशावतार गंजीफिगे बाजुगळु १० क्के दर यलेगळु १८ गळल्लु १८० यलेगळु । जनगळु ३ क्के दर यलेगळु ६० रल्लु जनगळु ४ क्के ४५ रगळल्लु हंचिकोंडु आडुवदरल्लि हगलुरात्रि आटक्कु चामुण्डेश्वरिये धोरे । आखेरु इंद्राणी बाजुबिनल्लि आखेरु मीनुयलेयन्नु आखेरु यारु हुकु माडुत्तारेयो अवरु कडमे आटगाररन्नु खिलालु माडिदंते निष्कर्षेयन्नुमाडिकोंडु कडमे आटगळन्नु चामुण्डेश्वरी गंजीफिनंते बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## ७ अथ दिक्पालच्छदक्रीडाविवरणम्—(दिक्पालगंजीफ्)

चामुण्डेन्द्राग्नियमनिर्ऋतिश्चजलेश्वरः ॥ पवनोधनदश्चेशोमोहि नीति-

दशक्रमात् ॥ १ ॥ एकस्यादेवतायास्तुकलासंख्यायुतच्छदाः ॥
राजाराज्ञीरथोवाजीपदातिर्ध्वजएवच ॥ २ ॥ एकाद्यवस्थासंख्यांतः
पूर्वस्माद्दुर्बलःपरः ॥ एतासांदेवतानांतुतत्तचिह्नंप्रवक्ष्यते ॥ ३ ॥
सिंहोमतङ्गजोमेषोमहिषोमानुषोमृगः ॥ सारंगाश्वौवृषशुकौक्रमाज्ज्ञेया-
बुधैःसदा ॥ ४ ॥ सर्वमिलित्वापत्राणिषष्ट्युत्तरशतंमतम् ॥ उक्तचिह्नानु-
सारेणखेलनीयाविचक्षणैः ॥ ५ ॥ स्वर्णोरक्तस्तथापीतःश्वेतपीतह-
रित्तथा ॥ अतिरक्तःपाटलश्चपीतोवैवर्तिकातथा ॥ ६ ॥ राजतश्वेति-
संप्रोक्तावर्णाएषांविचक्षणैः ॥ जातिचिह्नानिवक्ष्यन्तेसिंहश्चकमलासनः
॥ ७ ॥ वीणाकमण्डलुश्चक्रंत्रिशूलंद्विमुखंद्वयोः ॥ पार्श्वयोरेकशिरसो
मण्डलेरविचन्द्रयोः ॥ ८ ॥ भवन्तिचात्रक्रीडायांचत्वारःपञ्चवाजनाः ॥
रात्रिन्दिवंचण्डिकैवराज्ञीस्यात्तस्यखेलनम् ॥ ९ ॥ यद्धस्तगाभवेदादौ
राज्ञीत्येवंविदुर्बुधाः ॥ एवंवैमोहिनीजातेरन्तिमंशुकपत्रकम् ॥ १० ॥
अन्तेवैक्रीडयतेयेनसजयत्यन्येपराजिताः ॥ चामुण्डिकाक्रीडनवच्छिष्टं-
ज्ञेयंविचक्षणैः ॥ ११ ॥ श्रीचामुण्डाकृपापूर्णःकृष्णराजधराधिपः ॥
चतुराणांविनोदायचक्रेदिक्पालपेटिकाम् ॥ १२ ॥

( टीकु )—यीदिक्पाल गंजीफिगे बाजुगळु १० क्कबाजु १क्के यलेगळु १६ह्लु १६० यलेगळु । जनगळु ४ क्केदर ४० यलेगळल्लु जनगळु ५ क्के दर ३२ यलेगळ मेरिगे हंचिकोंडु हगलु रात्रिगु डामुण्डेश्वरिये धोरेयाद्दरिंद डामुण्डेश्वरीबंदवरे मोदलु आडुवरु।आखैरु मोहिनी बाजुविनल्लि आखैरु शुकमोहिनी यलेयन्नु यारु आखैरु हुकुं माडुत्तारयो अवरु कडमे अ.टद्दवरन्नु खिलालु माडिदंते निष्कर्षेयन्नुमाडिकोंडु आडुत्ता कडमे आट यावत्तन्नु चामुण्डेश्वरीगंजीफिनमेरिगे बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## ८ अथ मनोहरच्छदक्रीडाविवरणम्—(मनोहरगंजीफु)

श्रीचामुण्डामहेशश्वरामकृष्णौचतुर्मुखः ॥ हयग्रीवश्वसेनानीर्महेन्द्र-
श्वरतिप्रियः ॥ १ ॥ देवतारत्नसंख्याकाःक्रमशःपरिकीर्तिताः ॥
पृथगेकस्यदेवस्यकलासख्यामितच्छदाः ॥ २ ॥ राजाराज्ञीतथामात्यः

सेनानीःसेवकोध्वजः ॥ एकादिदशसंख्यांतःपूर्वस्माद्दुर्बलःपरः॥ ३ ॥ एतासांदेवतानांतुतत्तचिह्नंप्रवक्ष्यते ॥ सिंहोवृषोवानरश्चखगेन्द्रोहंसघोटकौ ॥ ४ ॥ मयूरकुंजरशुकाःज्ञातव्याःक्रमशोबुधैः ॥ राजराजेश्वरीचादौश्रीकंठश्शरभस्तथा ॥ ५ ॥ दक्षिणामूर्तिराख्यातोवटपत्रशयोहरिः ॥ विघ्नेशस्तांडवश्चैवदिवाकरनिशाकरौ ॥ ६ ॥ नवसंख्यासमायुक्ताःस्वतन्त्राश्चक्रवर्तिनः ॥ आदौचामुण्डिकाप्पर्याणिपद्मपत्राणिसप्तवै ॥ ७ ॥ सर्वमिलित्वापत्राणिषष्ट्युत्तरशतानिच ॥ उक्तक्रमानुसारेणखेलनीयाविचक्षणैः ॥ ८ ॥ स्वर्णवर्णःपाटलश्चपीतवर्णोतिरक्तकः॥ श्वेतयुक्तोहरिद्वर्णःश्वेतोगैरिकवर्णकः ॥ ९ ॥ पाटलःपीतवर्णश्चेत्येवंवर्णाःप्रकीर्तिताः ॥ चक्रवर्तिच्छदानांचपद्मानांस्वर्णवर्णकः ॥ १० ॥ पद्मपत्रंयस्यहस्तेनास्तिग्राह्यंतुतेनतत् ॥ स्वीयोत्तमच्छदंदत्त्वाचतुर्भिःखेलनंभवेत् ॥ ११ ॥ चक्रवर्तिच्छदाआदौखेलनीयाविचक्षणैः ॥ मारजातेरन्त्यपत्रंशुकमोहिनिकाभिधम् ॥ १२ ॥ अन्त्येसंक्रीडयतेयेनसजय्यन्येपराजिताः ॥ चामुण्डिकाक्रीडनवच्छिष्टंज्ञेयंविचक्षणैः ॥ ॥ १३ ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभुजा ॥ कल्पिताचविनोदायश्रीमनोहरपेटिका ॥ १४ ॥

( टीकु )-श्रीमनोहर गंजीफिगे बाजुगळु ९ दर बाजु १क्के यलेगळु १६ ह्लु १४४ यलेगळु । चक्रवर्तियलेगळु ९ । पद्मदयलेगळु७ । अंतु १६० यलेगळु। हगलु रात्रे आटक्कु चामुण्डेश्वरियॆ धोरेयाद्दरिंद चामुण्डेश्वरीहुकुमिगे कोडतक्क पद्मदयलेयु यारिगे बरदे यिरुत्तेयो अवरु बंदिद्दवरिगे वूजन्नु कोट्टु तेगदुकोंडु चामुण्डेश्वरीगे कोडतक्कद्दु । जनगळु४क्के दर४०ह्लु१६० यलेगळु।चक्रवर्तिगळु मोहूत्त्यारि हुकुमाद्दरिंद मोदलु इळदुकोळ्ळुवद्दु ॥ यीगंजीफिनल्लि आखैरु मन्मथबाजुविनल्लि आखैरु शुकमोहिनीयलेयंनु आखैरु यारु हुकुं इळियुत्तारेयो अवरु कडमे आटदवरंनु खिलालु माडिदहागे तिळियतक्कद्दु ॥ कडमे आट यावत्तन्नु चामुण्डेश्वरी गंजीफिनमेरिगे बुद्धिवंतरु निष्कर्षेयन्नु माडिकोंडाडुवद्दु ॥

## ९ अथ सर्वमङ्गलाछदक्रीडाविवरणम्–(सर्वमङ्गलागञ्जीफ़्)

श्रीचामुण्डामहेशश्चश्रीपतिश्चतुराननः ॥ पुरंदरोदिनकरोनिशाकररतिप्रियौ ॥ १ ॥ देवताश्चाष्टसंख्याकाःक्रमशःपरिकीर्तिताः ॥ पृथगेकस्यदेवस्यपूर्णगणितच्छदाः ॥ २ ॥ राजाराज्ञीतथामात्यःसेनानीःश्वेवकोर्ध्वजः ॥ मेषादिमीनपर्यंततत्तद्देवांकशोभिताः ॥ ३ ॥ इतःपरंतुविज्ञेयाःप्रत्येकंदेवताइमाः ॥ श्रीकण्ठोविघ्नराजश्चषण्मुखोवटपत्रगः ॥ ॥ ४ ॥ तांडवोदक्षिणामूर्तिर्मत्स्याद्यादशमूर्तयः ॥ कलासंख्यासमायुक्ताःस्वतन्त्राश्चक्रवर्तिनः ॥ ५ ॥ सर्वेमिलित्वापत्राणिव्योमांगशशिसंख्यया ॥ सिंहस्त्रिशूलंचक्रंचहंसोवज्रायुधंतथा ॥ ६ ॥ अरुणोहरिणश्चैतिजात्यङ्कान्वैविदुर्बुधाः ॥ स्वर्णवर्णोतिरक्तश्चपीतःश्वेतोहरित्तथा ॥ ७ ॥ कृष्णश्चवर्तिकापाटलश्चसिन्दूरएवच ॥ चक्रवर्तिच्छदानांवैस्वर्णवर्णःप्रकीर्तितः ॥ ८ ॥ स्यात्क्रीडेयंचतुर्भिर्मारजातेरन्तिमच्छदः॥ मीनाख्योक्रीडचतेयेनसजय्यन्येपराजिताः ॥ ९ ॥ चामुण्डिकाक्रीडनवच्छिद्दंज्ञेयंविचक्षणैः ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजक्षमाभुजा॥ १०॥ रचितावर्धतांनित्यंसर्वमंगलपेटिका ॥

(टीकु)–यीसर्वमंगला गंजीफिगे बाजुगळु १८क्के दर १क्के यलेगळु १८ळु यलेगळु १४४।चक्रवर्तिगळ यलेगळु १६। वट्टु यलेगळु १६० क्के ( १ )–चामुण्डेश्वरी बाजु१ क्के १८ यलेगळु चिन्नदबण्ण (२)–ईश्वरबाजु १ क्के १८ यलेगळु इंगलीकदबण्ण ( ३ )–विष्णुबाजु १ क्के १८ यलेगळु हळदीबण्ण ( ४ )–ब्रह्मबाजु १ क्के १८ यलेगळ पिस्तापच्चेबण्ण ( ५ )–इंद्रबाजु १ क्के १८ यलेगळु कप्पुबण्ण ( ६ )–सूर्यबाजु १ क्के १८ यलेगळु वर्तीबण्ण ( ७ )–चन्द्रबाजु १ क्के १८ यलेगळु जङ्गालुबण्ण (८)–मन्मथबाजु १ क्के १८ यलेगळु चन्द्रबण्ण। यमिरिगे बाजुगळु ८ क्के यलेगळु १४४॥चक्रवर्तिगळ यलेगळु १६ बेळ्ळिबण्ण। यीमेरिगे इरुव यीगंजीफिनल्लि जनगळु ४ क्के दर १ क्के यलेगळु ४० ळु हांचिकोंडु आखैरु ८ ने मन्मथबाजुविनल्लि आखैरु मीनुयलेयंनु आखैरु हुकुं यारु यिळियुत्तारयो अवरु यल्लर आटवन्नु खिलालु माडिदहागे निष्कर्षेयन्नु माडिकोंडु कडमे आट यावत्तन्नु चामुण्डेश्वरी गंजीफिनमेरिगे बुद्धिवंतरु नोडिकोंडाडुवदु ॥

## १० अथ नवरत्नच्छदक्रीडाविवरणम्–( नवरत्नगञ्जीफ् )

महाचामुण्डिकाराज्ञीमहालक्ष्मीर्द्वितीयका ॥ महासरस्वतीचैववीणावादनतत्परा ॥ १ ॥ ब्रह्माविष्णुमहेशाग्नि दिवाकरानिशाकरोः ॥ त्रयंत्रयंत्रयंचेतिनवैतादेवतास्स्मृताः ॥ २ ॥ एकस्यादेवतायास्तुकलौसंख्यायुतच्छदाः ॥ आदौराजाततोराज्ञीमंत्रीसेनापतिस्तथा ॥ ३ ॥ पंक्तिर्ध्वजोवतारांकाःपूर्वस्माद्दुर्बलःपरः ॥ पूर्वप्रोक्ताःछदारस्याःतत्तद्देवांकशोभिताः ॥ ४ ॥ अतःपरंतुविज्ञेयाश्चक्रवर्तिपदंगताः॥ राजराजेश्वरी चादौदंडिनीमंत्रिणीतथा ॥ ५ ॥ ब्राह्मीमाहेश्वरीचैवकौमारीवैष्णवीतथा ॥ वाराहीचतथेंद्राणीस्वतंत्रानवशक्तयः ॥६॥ आदौचामुण्डिकापर्याणिसिंहपत्राणिसप्तवै ॥ सर्वमिलित्वापत्राणांषष्ट्युत्तरशतंमतम्॥ ७॥ तत्तदंकानुसारेणखेलनीयाविचक्षणैः ॥ स्वर्णवर्णोनीलपीतःवर्तिवर्णश्चपीतकः ॥ ८ ॥ पाटलःकृष्णवर्णश्चहरिद्वर्णश्चचम्पकः ॥ चन्द्रवर्णइतिप्रोक्तानवरत्नस्यवैनव ॥ ९ ॥ चक्रवर्तिच्छदानांचमृगेन्द्रस्यापिराजतः ॥ महाचामुण्डिकाराज्ञीदेयास्यैसिंहपत्रिका ॥ १० ॥ यस्यहस्तेनास्तितेनग्राह्यान्यस्मात्तुपूर्ववत् ॥ क्रीडारभ्यायस्यहस्तेचामुण्डापत्रिकाभवेत् ॥ ११ ॥ इयंक्रीडाचतुर्भिस्स्याच्चन्द्रजात्यन्तिमच्छदः ॥ यस्तुसंक्रीडतेन्तेवैसजय्यन्येपराजिताः ॥ १२ ॥ चामुण्डिकाक्रीडनवच्छिष्टंज्ञेयंविचक्षणैः ॥ श्रीचामुण्डाकृपापूर्णःकृष्णराजमहीपतिः ॥ ॥ १३ ॥ चतुराणांमुदेचक्रेनवरत्नाख्यपेटिकाम् ॥

( टीकु )–शक्तित्रय मूर्तित्रय तेजस्त्रयात्मकवाद थी नवरत्नगंजीफिगे बाजुगळु ९ क्के दर यलेगळु १६ ल्लु १४४ यलेगळु । चक्रवर्तियलेगळु ९ ।सिंहदयलेगळु ७ । वट्टु १६० यलेगळु ॥इदरल्लि (१)–चामुण्डेश्वरी बाजु १ क्के १६ यलेगळु चिन्नदबण्ण ( २ )–महालक्ष्मीबाजु १ क्के १६ यलेगळु जंगालुबण्ण ( ३ )–महासरस्वती बाजु १ क्के १६ यलेगळु वर्तिबण्ण ( ४ )–ब्रह्मबाजु १ क्के १६ यलेगळु हळदीबण्ण ( ५ )–विष्णुबाजु १ क्के १६ यलेगळु इंगलीकबण्ण ( ६ )–ईश्वरबाजु

१ के १६ यलेगळु कप्पुबण्ण ( ७ )–अग्निबाजु १ के १६ यलेगळु पिस्तापच्चेबण्ण ( ८ )–सूर्यबाजु १ के १६ यलेगळु संपिगेबण्ण ( ९ )–चन्द्रब जु १ के १६ यलेगळु चन्द्रबण्ण ॥ यीमेरिगे बाजुगळु ९ । छूटचक्रवर्तिगळ यलेगळु ९ सिंहदयलेगळु ७ सह बेळीबण्ण । चामुण्डेश्वरी मीरा बंदवर आटवे मोदलागुवदरिंद चामुण्डेश्वरी हुकुमिगे कोडतक्क सिंहद यलेयुयारबळियल्लि इरुत्तेयो अवरिगे बूजन्नु कोट्टु सिंहद यलेयन्नु तेगदुक्कोंडु चामुण्डेश्वरी मीराक्के कोडबेकु ॥ जनगळु ४ के ४० यलेगळमेरिगे हंचिक्कोंडु आखेरु चंद्रबाजुविनल्लि आखेरु कलिकमोहिनीयलेयंनु आखेरु यारु हकुं इळियुत्तारयो अवरु कडमे आटदवरन्नु खिलालु माडिदहागे निश्चेयिसि कडमे आट यावत्तन्नु चामुण्डेश्वरीगंजीफिनमेरिगे बुद्धिवंतरुनोडिक्कोंडाडुवदु ॥

---

## ११ अथ कृष्णराजच्छदक्रीडाविवरणम्–(कृष्णराजपेट्)

श्रीकृष्णःशंकरोब्रह्मामहेंद्रश्चयथाक्रमम् ॥ रक्तपीतहरित्कृष्णवर्णयुक्ताइमेमताः ॥ १ ॥ एकैकस्यतुवर्णस्यपृथगष्टादशच्छदाः ॥ राजाराज्ञीतथामात्यःपदातिर्ध्वजएवच ॥ २ ॥ सुदर्शनंपांचजन्योगरुत्मान्मारुतात्मजः ॥ भेरुण्डसाल्वेशरभसिंहमत्तेभवाजिनः ॥ ३ ॥ वराहोमकरोमर्त्स्यःपूर्वस्माद्दुर्बलःपरः ॥ जातयस्स्युश्चतस्रोत्रकृष्णेशब्रह्मवज्रिणाम् ॥ ४ ॥ चत्वारोवात्रयोवास्युःक्रीडकाश्चतुरामताः ॥ भवेद्रात्रिन्दिवंराजाकृष्णएवयतस्ततः ॥ ५ ॥ कृष्णमूर्तिमताक्रीडारब्धव्यादौसुनिश्चितम् ॥ कृष्णजात्यन्तिमंपत्रंमीनद्वयसुलक्षितम् ॥ ६ ॥ येनान्तेक्रीडचतेसोयंजय्यन्येवैपराजिताः ॥–॥ अथैभिरेवक्रीडास्याच्छदैरन्यामनोहरा ॥ १ ॥ क्रीडकैर्नियतानांहिसंख्यानांपरिपूरिका ॥ पत्रिकाणांसमाख्याताःसंख्याःक्रीडनकोविदैः ॥ २ ॥ राज्ञोद्वादशराज्याःस्युर्दशामात्यस्यपञ्चवै ॥ चतस्रश्चपदातेस्स्युर्ध्वजस्यैकामितिक्रमात् ॥ ३ ॥ राजाराज्ञीचेत्युभयंवर्ततेयस्यसन्निधौ ॥ एकजातीयकंतस्मैविंशतिर्मुख्ययोस्तयोः ॥ ४ ॥ संख्यातास्तन्निमित्तास्स्युःपञ्चाशत्खेलनेन्तिमे ॥ संख्याअष्टादशात्रस्युर्ज्ञेयास्सङ्ख्याविशेषतः ॥ ५ ॥

सङ्ख्यालभ्याःक्रीडनेष्टाविंशतिश्चतथाशतम् ॥ एवंसङ्ख्यायेनलब्धा-सजय्यन्येपराजिताः ॥ ६ ॥ कृष्णजातिःप्रधानास्यादितिज्ञेयंविच-क्षणैः ॥ राजादयोध्वजान्तास्स्युरेकजातिच्छदायदा ॥ ७ ॥ वशे-यस्यजयीसस्यादन्येज्ञेयाःपराजिताः ॥ श्रीमच्चामुण्डिकापूर्णकटाक्षशुभ-लक्षिता ॥ ८ ॥ भूयाद्भूमण्डलेख्याताकृष्णराजाख्यपट्टिका ॥

( टीकु )–यी कृष्णराजपेटिगे बाजुगळु ४ गाळिगे यलेगळु ८ रगळल्लु ७२ यलेगळंनु जनगळु ३ क्के २४ यलेगळुमेरिगे जनगळु ४ क्के १८ यलेगळमेरिगे हंचि-क्कोंडाडुवदरल्लि हगलु रात्रिगु कृष्णनन्ने धोरेयंनु माडिक्कोंडु कृष्णबाजु विन आखेरयुग्म भीनुयलेयन्नु यारु आखैरु हुकु माडुत्तारयो अवरुकडमे आटदवरंनु खिलालु माडिदहागे बुद्धिवतरु निष्कर्षयन्नु माडिक्काडाडुवदु॥–॥ वरहाद आटवन्नु आडबे-कादरे नूरु इपत्तेंटु वरहागळन्नु गोत्त माडिकोंडु अदरल्लि धोरेगळु४ गे १२ वरहा-गळक्कु ४८ । राणिगळु १०ल्लु४ गळिगे ४०।वजीरगळु ४गे५ ल्लु २०। पदातिगळु ४ गळिगे ४ल्लु १६ । पताकेगळु ४ गळिगे१ ल्लु ४ । वट्टु नूरिप्पत्तेंटु वरहागळु। तुरुपुजंटी बदरे ५० । सादा जंटी बदरे जंटी १ क्के २० । कैपट्टु१८ वरहागळु। अंतु १२८ वरहागळ। धोरेआदियागि पताकांतद वंदे दिनसु ४ यलेगळु यारबळीलि कूडुत्तो अवरु गेद्दवरु इतररु सोतवरेंदु निष्कर्षयन्नु माडिक्कोंडु सोतवरु खिलालु आदरेंदु तिळदुक्कोळ्ळबेकु ॥

---

## १२ अथ सद्योजातादिच्छदक्रीडाविवरणम्–( सद्योजातपेट् )

चामुण्डाप्रथमाज्ञयासद्योजातादिपंचकम् ॥ एकैकस्यतुदेवस्यमास-संख्यायुतच्छदाः ॥ १ ॥ राजाराज्ञीतथामुद्रामंत्रीपतंगकेतने ॥ वाहँ-नंचायुधंछत्रंरथोहस्तीहयःक्रमात् ॥ २ ॥ स्वर्णहारितलाक्षाभाःपी-तोरक्तस्तुकृष्णभाः ॥ एतद्वर्णानुसारेणखेलनीयाविचक्षणैः ॥ ३ ॥ चतुर्भिर्वात्रिभिर्वापिक्रीडेयंसंप्रवर्त्तते ॥ सर्वेषुमुख्याचामुण्डारात्रि-न्दिवमितिस्मृता ॥ ४ ॥ कृष्णराजच्छदक्रीडावच्छिष्टासम्प्रकीर्तिता॥ श्रीचामुण्डादयासांद्रकृष्णराजेंद्रकल्पिता ॥ ५ ॥ आचंद्रतारकंजी-यात्सद्योजातादिपट्टिका ॥

( टीकु )-यी सद्योजातपेटिगे बाजुगळु ६ गळिगे यलेगळु १२ लु यलेगळु ७२ । जनगळु ३ क्के यलेगळु २४ लु जनगळु ४ यलेगळु १८ लु हंचिकोंडाडुवदु । हगलुरात्रिय आटक्कु चामुण्डेश्वरीये धोरेयन्नागि माडिकोंडु कडमे आट यावत्तन्नु कृष्णराजपेटन्नु आडुवंते बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## १३ अथ नवीनरामच्छदक्रीडाविवरणम्-( नव्यरामपेट् )

रामेरामानुजश्चैवभरतोलक्ष्मणानुजः ॥ एकैकस्यतुदेवस्यरत्नसंख्या-युतच्छदाः ॥ १ ॥ बाणबाणासनच्छत्रदिव्यचामरचिह्निताः ॥ मुद्राराजोराजपत्नीर्भृत्यश्चेतिचतुष्टयम् ॥ २ ॥ दिङ्नन्दवसुशैलां गसंख्याचिह्नपरिष्कृतान् ॥ पंचच्छदान्मेलयित्वानवकंनवकंपृथक् ॥ ॥ ३ ॥ एतच्चिह्नानुसारेणखेलनीयासदाजनैः ॥ आङ्ग्लच्छदानां क्रीडेवक्रीडेयंपारिकीर्तिता ॥ ४ ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजें-द्रधीमता ॥ कृतालोकोपकारायनव्याश्रीरामपेटिका ॥ ५ ॥

(टीकु)-ई होसरामपेटन्नु इस्पीट् आडुव मेरिगे यल्ला आटगळंनु आडबहुदु । इदरल्लि हगलु रात्रिगे सह रामदेवरे धोरेयन्नागि निष्कर्षेयन्नु माडिकोंडाडुवदु ॥

---

## १४ अथ षोडशमुखासनेक्षक्रीडाप्रकारः-(१६मुखदपगडेआट)

कमलंषोडशदलंलेख्यमादौसकर्णिकम् ॥ एकैकस्मिन्दलेलेख्याअ-धऊर्ध्वाभिगामिनः ॥ १ ॥ रेखाश्चतस्रस्तिर्यक्चरेखाऋज्व्यस्तथानव ॥ एकैकस्मिन्कोष्ठकानिदलेष्वष्टक्रमेणवै ॥ २ ॥ युगदिक्पालाग्निकोष्ठा-निषोडशदलेषुवै ॥ ३ ॥ मध्यश्रेण्यांदलस्यादिकोष्ठंवर्त्तुलमालिखेत् ॥ सर्वेष्वपिप्रकल्प्यैवंतत्रशारान्विनिक्षिपेत् ॥ ४ ॥ चतुष्क्रमेणभिन्ना-ङ्कान्क्रीडकाश्चात्रषोडश॥अथवात्रस्युरष्टेतिज्ञेयंक्रीडाविचक्षणैः॥५॥ खेलनस्यप्रकारस्तुप्रसिद्धाक्षवदीरितः ॥ चतुःशारक्रमेणक्षावक्ष्यन्ते-क्रमशोधुना ॥ ६ ॥ रक्ताःपीताश्चहरिताःकृष्णावैरक्तपट्टिकाः ॥

पीतपट्टाःकृष्णपट्टास्तथाहरितपट्टकाः ॥७॥ मध्येरक्तास्तथापीतामध्ये हरितपट्टकाः ॥ ऊर्ध्वाधःश्वेतपट्टास्स्युरेतएवंप्रकीर्तिताः ॥ ८ ॥ ऊर्ध्वाधोरक्तपट्टास्स्युरूर्ध्वाधःपीतपट्टकाः ॥ ऊर्ध्वाधश्चहरित्पट्टा ऊर्ध्वाधःकृष्णपट्टकाः ॥९॥ चतुर्ष्वेषुमतावर्णाःश्वेतामध्यइतिस्मृतम् ॥ एवंशाराश्चतुष्षष्टिःक्रीडकाष्षोडशाष्टवाः ॥ १० ॥ अक्षावष्टाश्रकौ कार्यौचतुरंगुलमायतौ ॥ एकैकस्मिन्पार्श्वभागेसङ्ख्यासूचकलक्षणम् ॥ ॥ ११ ॥ दलक्रमेणत्वेकैकंचक्राकारंसुकोष्ठकम् ॥चतुरस्तत्रशारान्वै-संस्थाप्यक्रीडनंभवेत् ॥ १२ ॥कोष्ठद्वयान्तरेणस्युःकोष्ठानिमुमवन्तिच ॥ सङ्ख्यावबोधनार्थानिपार्श्वेषुस्युस्तुशारयोः ॥ १३ ॥एकंत्रीणिचचत्वा रिषडष्टौदशवैतथा ॥ द्वादशैवंषोडशेतिसुमसङ्ख्याद्वयोस्तथा ॥ १४ ॥ षोडशानांखेलनेस्याच्छारएकःप्रकीर्तितः ॥ १५ ॥अष्टानांक्रीडनेतुद्वौ-शारौस्यातामितीरितम् ॥ शालीवाहशकस्याब्देदृग्घङ्छेन्दुमितेशुभे ॥ ॥ १६ ॥ खरवर्षेकृष्णपक्षेत्रयोदश्यांरवौशुभे ॥श्रीचामुण्डाकृपापूर्ण-कृष्णराजमहीभुजा ॥ १७ ॥ निर्मिताषोडशमुखाक्षक्रीडातिमनोहरा ॥

(टीकु)—१६ मुखदपगडे आटक्के चारीकायिडाळगळ विवर—चारी १ क्के बीदिगळु २ । बीदिगळु १ क्के मनेगळु ८ ळ्ळु बीदिगळु ३ क्के मनेगळु २४ । चारिगळु १६ गळिगे वट्टु मनेगळु ३८४ ॥ ईचारीगे मध्यदल्लि कमलवु इदर सुत्तलु १६ दळगळु । ईवगळाल्लि वंदुवंदु गुंडु मने । ईमनेगळल्लि नाल्कुनाल्कु कायिग-ळन्नु मडगिकोंडाडुवदु । ईचारीगे यरडुयरडुमनेगळन्नु बिट्टु वंदुवंदु हुबु इरतक्कद्दु। ईचारीगे कायिगळ लेख वट्टु ६४ गळिगे विवर—केंपुकायिगळु४ हळदी कायिगळु ४ । हसरुकायिगळु ४ । कप्पुकायिगळु ४ । केंपुपट्टापट्टीकायिगळ ४ । हळदीदट्टापट्टी कायिगळु ४ । हसरुपट्टापट्टी कायिगळु ४ । कप्पुपट्टापट्टीकायिगळु ४ । मध्ये केंपु मेले केळगे बिळपु इरुव कायिगळु ४ । मध्ये हळदी मेले केळगे बिळपु इरुव कायि-गळु ४ । मध्ये हसरु मेले केळगे बिळपु इरुव कायिगळु ४ । मध्ये कप्पु मेले केळगे बिळपु इरुव कायिगळु ४ । मेले केळगे केंपु मध्ये बिळपु इरुव कायि-गळु ४ । मेले केळगे हळदी मध्ये बिळपु इरुव कायिगळु ४ । मेले केळगे हसरु मध्ये बिळपु इरुव कायिगळु ४ । मेले केळगे कप्पु मध्ये बिळपु इरुव कायिगळु

४। अंतु कायिगळु ६४ । ईचारिगे ८ पट्टिन डाळगळलेख–डाळ २ क्के डाळ १ क्के पट्टुगळ मेले लेख–पट्टु १ क्के १। पट्टु १ क्के ३। पट्टु १ क्के ४। पट्टु १ क्के ६। पट्टु १ क्के ८। पट्टु १ क्के १०। पट्टु १ क्के १२। पट्टु १ क्के १६। इदे भोरगे इन्नोंदु डाळ । ई २ डाळगळिंद जोडु दाय बळितक्क– दुग इत्तिग यंटु हंनेरडु हदिनारु इप्पत्तु इप्पत्तनाल्कु मूवत्तेरडु। ईमेरिगे बिलुवंते गुरुतन्नु हाकि कोंडु १६ जनगळु आडबेकादरे वंटि पगडे आटवंतु आडबहुदु ॥ यंटु जनगळु आडबेकादल्लि हुयल दाय आडबहुदु। कडमे आटगळमर्यादे कायिगळन्नु नडसुवदु मुंतागि विशिष्टवु पूर्वद अक्षक्रीडेयंते बुद्धिवंतरु निष्कर्षेयन्नु माडिकोंडाडुवदु ॥

---

## १९ अथाष्टमुखासनेक्षक्रीडाप्रकारः–( ८ मुखदपगडेआट )

दलाष्टकंतुकमलंलिखेदादौपृथग्दले ॥ तिस्रोवीध्यस्तुकजवोवीध्यां कोष्ठाष्टकंचरेत् ॥ १ ॥ चतुर्विंशतिकोष्ठानित्वेवैकैकस्मिन्दलेक्रमात् ॥ स्युस्संहत्यदळेष्वेषुद्विनवत्युत्तरंशतम् ॥ २ ॥ मध्येतुकर्णिकाप्रोक्ता मध्यवीध्यादिकोष्ठकम् ॥ वर्तुलंपरिकल्प्यात्रचतुश्शारींविनिक्षिपेत् ॥ ३ ॥ विभिन्नलक्षणाञ्छारान्सुसंपाद्यसमारभेत् ॥ क्रीडांरक्तास्तथापीताःकृ-ष्णाहरितवर्णकाः ॥ ४ ॥ ऊर्ध्वाधःपीतवर्णास्स्युरूर्ध्वाधोरक्तवर्णकाः ॥ ऊर्ध्वाधोहरिताश्चोर्ध्वमधश्चैवासितास्तथा ॥ ५ ॥ मध्येचत्वारएते-स्युश्श्वेताश्शाराइतिस्मृताः ॥ अक्षौद्वौपूर्ववत्कल्प्यौविशेषस्तत्रकथ्यते ॥ ६ ॥ सुमैष्षोडशभिर्यस्तुभागोनिस्सुमईरितः ॥ एतद्भागस्यचोत्ताने क्रीडानात्रप्रवर्तते ॥ ७ ॥ क्रीडितारस्स्युरष्टौवाचत्वारोवापितद्विदः ॥ क्रीडातुसुप्रसिद्धाक्षक्रीडावदितिनिश्चयः ॥ ८ ॥ शालीवाहशक-स्याब्देषङ्ङ्छेन्दुमितेशुभे (१७८४) ॥ खरफाल्गुनशुक्लस्यह्येकादश्यांबुधेत्वियम् ॥ ९ ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभुजा ॥ रचिताचाष्टवक्त्राक्षक्रीडे-यंसुमनोहरा ॥ १० ॥

( टीकु )–८ मुखद पगडे आटक्के चारीकायिडाळगळ विवर । चारी १ क्के बीदिगळु ३। बीदि १ क्के मनेगळु ८ क्कु बीदिगळु ३ क्के मनेगळु २४ । चारी-

गळु८क्के वट्टु मनेगळु१९२। ईचारिगे मध्यदल्लि कमलवु। इदर सुत्तलु ८ दळगळु। ईवगळल्लि वंदुवंदु गंडुमने। ईमनेगळल्लि नाल्कुनाल्कु कायिगळंनु मडगिकोंडु आडुवदु। ईचारिगे यरडुयेरडु मनेगळंनु बिट्टु वंदुवंदु हुवु इरतक्कद्दु। ईचारिगे कायिगळलेख्ख-वट्टुकायिगळु ३२ गळिगे विवर-हळदी कायिगळु ४। हसरु कायिगळु ४। केंपुकायिगळु ४। कप्पु कायिगळु ४। मेले केळगे हळदी मध्ये बिळपु इरुव कायिगळु ४। मेले केळगे हसरु मध्ये बिळपु इरुव कायिगळु ४। मेले केळगे केंपु मध्ये बिळपुइरुव कायिगळु ४।मेले केळगे कप्पु मध्ये बिळपु इरुव कायिगळु४।अंतु कायिगळु३२।ईचारिगे८पट्टिन डाळगळ लेख।डाळगळु२गळिगे डाळ१क्के पट्टुगळ मेले लेख-पट्टु १ क्के १। पट्टु१ क्के ३। पट्टु१क्के ४।पट्टु १ क्के ६।पट्टु १ क्के ८। पट्टु १ क्के १०। पट्टु १ क्के १२। खाली पट्टु१॥इदेमेरिगे इन्नोंदु। ईयरडु डाळगळिंद जोडु दाय बीळतक्कद्दु। दुग-इत्तिग-यंटु-हन्नेरडु-हदिनारु-इप्पत्तु-इप्पत्तनाल्कु। ईमेरिगे बीळुवंते गुरुतन्नु हाकिकोंडु ८ जनगळु आडबेकादल्लि वंटि पगडे आडबहुदु। ४ जनगळु आडबेकादल्लि हुड्लु दाय आडबहुदु। कडमे आटगळ मर्यादे कायिगळन्नु नडसुवदु मुंतागि विशिष्टवु पूर्वद अक्षक्रीडेयंते बुद्धिवंतरु नोडिकोंडाडुवदु॥

---

## १६ अथ षण्मुखासनेक्षक्रीडाविवरणम्-( ६ मुखदपगडेआट)

षड्दलंकमलंकुर्याद्दलेकोष्ठानिपूर्ववत् ॥ दलमूलेतुचत्वारिकोष्ठानिपरिकल्पयेत् ॥ १ ॥ मध्यवीथ्याश्चक्रकोष्ठेषट्षट्शारान्तसजातिकान् ॥ संस्थाप्यारम्भणंकुर्यात्क्रीडायाइतिनिर्णयः ॥ २ ॥ शाराष्षट्त्रिंशदाख्याताःपृथग्वर्णाअनुक्रमात् ॥ षट्षट्शाराएकवर्णाज्ञेयाःक्रीडनकोविदैः ॥३॥ पीताश्चहरितारक्ताःकृष्णाश्श्वेताश्चपाटलाः॥ षट्कोणाक्षौतुविज्ञेयौदशान्तंसुमकल्पनम् ॥ ४ ॥ एकादितोत्रविज्ञेयंक्रीडकाष्षट्त्रयोपिवा ॥ खेलनंस्यात्प्रसिद्धाक्षक्रीडावदितिनिश्चयः ॥५॥ शालिवाहशकस्याब्देषंडेंछेन्दुमितेखरे ॥ फाल्गुनस्यसितेशुक्रेपौर्णमास्यामिदंकृतम्॥ ६॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभुजा ॥ चतुराणांहितार्थायषण्मुखाक्षसुखेलनम् ॥ ७ ॥

( टीकु )–ई षण्मुखद पगडे आटद चारी कायि डाळगळ विवर–चारी १ क्के बीदिगळु १ क्के मनेगळु ८ ल्लु बीदिगळु ३ क्के मनेगळु २४ ल्लु चारी ६ क्के वट्टु मनेगळु १४४। ईचारिगे मध्यदल्लि कमल। इदर सुत्तलु आरुदळगळु। इवगळल्लि वंदुवंदु गुंडु मने। ईमनेगळल्लि आरुआरु कायिगळन्नु मडिगिक्कोंडु आडुवदु। ईचारिगे यरडुयरडु मनेगळन्नु बिट्टु वंदुवंदु हवु इरतक्कद्दु। ईचारिगे कायिगळ लेख–वट्टु–कायिगळु ३६ क्के विवर–हळदीकायिगळु ६। हसरुकायिगळु ६। केंपुकायिगळु ६। करीकायिगळु ६। बिळी कायिगळु ६। गुलाबीरंगिन कायिगळु ६। अंतु कायिगळु ३६। ईचारिगे ६ पट्टिन डाळगळ लेख–डाळगळु २ क्के डाळ १ क्के पट्टु १ क्के १। पट्टु १ क्के ३। पट्टु १ क्के ४। पट्टु १ क्के ६। पट्टु १ क्के ८। पट्टु १ क्के १०। यिदेमेरिगे यिन्नोंदु डाळ। ईयरडुडाळगळिंद जोडु दाय बिळितक्कद्दु–दुग–यित्तिग–यंटु–हन्नेरडु–हदिनारु–इप्पत्तु। यीमेरिगे बीळुवंते गुरुतुगळन्नु हाकिक्कोंडु ६ जनगळु आडबेकादल्लि वंटि पगडेयआटवन्नु आडबहुदु। ३ जनगळु आडबेकादल्लि हुयिलु दाय आडबहुदु। कडमे आटगळ मर्यादे यावत्तन्नु पूर्वद अक्षक्रीडेयंते बुद्धिवंतरु नौडिकोंडाडुवदु॥

---

## १७ अथ बुरजाख्यकोष्ठविशेषवदक्षक्रीडाविवरणम्–

### ( बुरजुपगडेआट )

चतुर्दलंलिखेत्पद्ममष्टाविंशतिकोष्ठकम्॥ पृथग्दलेलिखेत्तत्रवीध्यस्तिस्रोभवन्तिहि॥ १॥ मध्यवीध्यांतुकोष्ठानिदशपार्श्वेनवक्रमात्॥ चतुर्दलानांकोष्ठानिद्वादशोत्तरकंशतम्॥ २॥ दलमूलेतुचत्वारिवृत्तकोष्ठानिकल्पयेत्॥ चतुर्भिःक्रीडकैःपञ्चस्थाप्याश्शारास्स्वकास्त्विह॥ ३॥ दलान्तरेपृथक्कार्यंसुन्दरंकोष्ठपञ्चकम्॥ बुरजाख्यंदलंह्येवंचतुष्कंस्याद्दलान्तरे॥ ४॥ चतुर्णांबुरजाख्यानांकोष्ठान्यासंश्चविंशतिः॥ संहत्यसर्वकोष्ठानिद्वात्रिंशदधिकंशतम्॥ ५॥ बुरजाख्यंवृत्तकोष्ठंगणनायांनविद्यते॥ रम्याञ्छुकान्वृत्तकोष्ठेचतुरोविलिखेत्क्रमात्॥ ६॥ आरभ्यबुरजुस्थानाद्युग्मंभवतिनान्यथा॥ अन्यत्रयुग्मंनभवेद्बुरजोरित्युदीरितम्॥ ७॥ गत्वाभवेत्तुबुरुजान्तरंयुग्मंतदेववा॥ त्रिको-

ष्टीमन्तरेकृत्वाकोष्ठेकुर्यात्सुमंशुभम् ॥ ८ ॥ शारविंशतिकंरक्तकृ-
ष्णपीतपलाशिच ॥ क्रमाज्ज्ञेयमथाक्षौद्वौषडष्टौपरिकल्पयेत् ॥
॥ ९ ॥ तत्रादिमेक्षेक्रमशःषडष्टेषुसुमानिहि ॥ द्वेचत्वारिषडष्टौ
चततोदशततोऽसुमम् ॥ १० ॥ अन्त्येक्षेद्वादशतथाषोडशाष्टा-
दशस्फुटम् ॥ विंशतिश्चचतुर्विंशतिश्चानिष्कुसुमंभवेत् ॥ ११ ॥
निस्सुमेनद्व्यङ्कचिह्नस्त्वक्षउत्तानगोयदा ॥ तस्यवक्ष्येफलंत्वग्रे
नामान्येवंविचिन्तयेत् ॥ १२ ॥ चतुस्सुमोनिस्सुमेनयुगमित्यभिधीयते ॥
षट्सुमोनिस्सुमेनस्याद्रसइत्यभिधीयते ॥ १३ ॥ अष्टसङ्ख्योनिस्सुमेनह्युत्ता
नोवर्गउच्यते ॥ दशसङ्ख्योनिस्सुमेनदिक्छब्देनाभिधीयते ॥ १४ ॥
द्वादशांकोनिस्सुमेनभानुरित्यभिधीयते ॥ षोडशाङ्कोनिस्सुमेनकला-
शब्देनगीयते ॥ १५ ॥ निस्सुमेनाष्टादशाङ्कोस्मृतिरित्यभिधीयते ॥
विंशत्यङ्कोनिस्सुमेनह्युत्तानःकृतिरुच्यते ॥ १६ ॥ चतुर्विंशतिसङ्ख्याको
निस्सुमेनघनोभवेत् ॥ निस्सुमोनिस्सुमेनोत्तानश्चेत्पूज्यइतीर्यते ॥
॥ १७ ॥ पूज्यावक्षौयदास्यातांशारानैवचलेदिह ॥ ससङ्ख्याक्षौयदोत्तानौ
भवेतांनिस्सुमंविना ॥ १८ ॥ तदानुयुग्मंचलतिनैकश्शारश्चलेदिह ॥
शिष्टाक्रीडाप्रसिद्धाक्षक्रीडेवकथिताबुधैः ॥ १९ ॥ शालीवाहनशकस्याब्दे
ममथेन्दु (१७६६) मितेशुभे ॥ नन्दनाषाढशुक्लस्यत्वेकादश्यांरवेर्दिने ॥ २० ॥
श्रीचामुण्डाकृपापूर्णकृष्णराजमहीपतिः ॥ बुरज्वक्षक्रीडनस्यप्रकारं-
व्यवृणोत्स्वयम् ॥ २१ ॥

(टीकु)-बुरजिन पगडे आटक्के चारी कायि डाळगळ विवर-
चारी १ क्के बीदिगळु ३ । बीदि १ क्के मध्यद बीदि मनेगळु १० । बाजु
बीदिगळु २ क्क मनेगळु ९ रल्लु १८ । वट्टु बीदिगळु ३ क्के चारी १ क्के मने-
गळु २८ ल्लु चारिगळु ४ क्के वट्टु मनेगळु ११२ । चारिगे मध्यदल्लि कमलवु।
सुत्तलू नाल्कु गुंडुमने । नाल्कु चारिगे संदीवळगडे नाल्कु बुरुजु । बुरुजु १ क्के
मनेगळु ५ रल्लु बुरुजु ४ क्के मनेगळु २० । अंतु मनेगळु १३२ । बुरुजिन

वळगे गुंडु मने १ लेखक्के यिल्लदु । इदरल्लि वंदुवंदु गिणि बरयबेकु । ईचारिगे कमलद सुत्तलु इरुव गुंडुमनेयल्लि अयिदु कायिगळन्नु मडिगिकोंडु आडुवदु । ईआटक्के बुरुजुगळल्लिये जोडियन्नुकट्टतक्कदु । मध्ये जोडी कट्टुवदक्के आगदु । मध्ये जोडीयन्नु बिच्चिदल्लि तिरिगी बुरुजिनल्लिये जोडीयन्नु कट्टबेकु । ईचारिगे मूरुमूरु मनेगळन्नु बिट्टु वंदुवंदु हूवु यिरतक्कद्दु । ईचारिगे कायिगळ लेख । वट्टु कायिगळु २०गळिगे विवर-चारि १ क्के कायिगळु ५ रक्तु हळदीकायिगळु५।हसरुकायिगळु ५ । केंपुकायिगळु ५ । कप्पुकायिगळु ५ । दिनसु १ क्के ५ कायिगळमेरेगे भेदविरुवंते कायिगळन्नु माडिसतक्कदु । ईचारिगे२ डाळगळु-आरु पट्टिन बाजुगळन्नुळ्ळ डाळगळ पट्टगळ मेले लेख-पट्टु १ क्के २ । पट्टु १ क्के ४ । पट्टु १ क्के ६ । पट्टु १ क्के ८ । पट्टु १ क्के १० । खाली पट्टु १ । डाळ १ क्के पट्टु १ क्के१२। पट्टु १ क्के १६ । पट्टु १ क्के १८ । पट्टु १ क्के २० । पट्टु १ क्के २४ । खालीपट्टु १ । ईयरडु डाळगळिंद जोडु दाय बीळतक्कद्दु । खाली पट्टु १ । यरडु लेख इरुब पट्टु सह बिद्दरे फलयेंबहेसरु । खाली पट्टु १ नाल्कु लेख विरुव पट्टु १ सह बिद्दरे युगवेंबहेसरु । खाली पट्टु १ आरु लेखविरुव पट्टु सह बिद्दरे रसवेंबहेसरु । खालीपट्टु १ यंटु लेखविरुव पट्टु सह बिद्दरे वर्गवेंबहेसरु । खाली पट्टु १ हत्तुलेखविरुव पट्टु सह बिद्दरे दिक्कुयेंबहेसरु । खाली पट्टु १ हन्नेरडुलेखविरुव पट्टु सह बिद्दरे भानुवेंबहेसरु। खाली पट्टु १ हदिनारुलेखविरुव पट्टु सह बिद्दरे कलेयंबहेसरु । खाली पट्टु १ हदिनेंटुलेखविरुव पट्टु सह बिद्दरे स्मृतियेंबहेसरु । खाली पट्टु १ इप्पत्तुलेखविरुव पट्टु सह बिद्दरे कृतियेंबहेसरु । खाली पट्टु १ इप्पत्तुनाल्कुलेखविरुव पट्टु १ सह बिद्दरे घनवेंबहेसरु । यरडु डाळगळल्लियु खाली पट्टु बिद्दरे पूज्यवेंबहेसरु कायिनडेयुवदक्केइल्ल । यरडुलेखदपट्टु बिद्दल्लि जौडुदायवल्ल । वंटिकायि नडशिकोळ्ळतक्कदु । कडमे आटद क्रमयावत्तन्नुपूर्वद अक्षक्रीडेयंते बुद्धिवंतरु नोडिकोंडाडुवदु ॥

---

## १८ अथ नवग्रहाक्षक्रीडाविवरणम्-( नवग्रहदपगडेआट )

कमलंद्वादशदलंकर्णिकापरिशोभितम् ॥ लिखेत्प्रतिदलंरम्यंकोष्ठद्वादशकंक्रमात् ॥ १ ॥ मेषादिमीनपर्यन्तंदलद्वादशकंस्मृतम् ॥

द्वादशांशंराशिचक्रमिदमित्यनुमन्यताम् ॥ २ ॥ यदाभवेद्दलेकोष्ठनवकं
त्रिंशदेववा ॥ कोष्ठानितानिजानीयान्नवांशैस्त्रिंशदंशकैः ॥ ३ ॥
संयुक्तंराशिचक्रंतत्कल्प्यंरम्यंयथोक्तवत् ॥ नवग्रहास्स्वाकृतयश्शारास्स्यु
स्सुमनोहराः ॥ ४ ॥ रक्तःकिञ्चिद्रक्तयुतःश्वेतःश्वेतस्थलाब्जवत् ॥
श्वेतरक्तश्चहरितःपीतःश्वेतोऽसितस्तथा ॥ ५ ॥ धूम्रचित्रौचवर्णास्स्यू-
रव्यादीनांक्रमादिह ॥ रव्यादीनांचसप्तानांगतिस्सव्येनवैस्मृता ॥ ६ ॥
अपसव्याराहुकेत्वोर्गतिरित्यवधार्यताम् ॥ अतिचारगतिर्वक्रास्तम्भश्चै-
वमृजुर्मता ॥ ७ ॥ क्रीडायांगतिरेवंस्यादितिक्रीडाविदोविदुः ॥
अक्षौद्वौचतुरश्रौस्यातांवापार्श्वचतुष्टये ॥ ८ ॥ सुमान्येकंत्रीणिचत्वा-
रिशून्यंचयथाक्रमात् ॥ एकस्मिन्नेवमन्यस्मिन्द्वेचत्रीणिचपञ्चच॥९॥
सुमानिस्स्युस्तथापार्श्वमेकंविकुसुमंस्मृतम् ॥ यदैकसङ्ख्यश्चोत्तानस्तदा-
सिंहादिमांशके ॥ १० ॥ रविंसंस्थापयेदेवंद्विसंङ्ख्यःकटकादिमे ॥
विधुंत्रिसङ्ख्यश्चोत्तानःकुजंमेषादिमेन्यसेत् ॥ ११ ॥ तथोत्तानश्चतु-
स्सङ्ख्योबुधंकन्यादिमेन्यसेत् ॥ तथोत्तानःपञ्चसङ्ख्योगुरुंमीनादि-
मेन्यसेत् ॥ १२ ॥ अक्षोयदाषडुत्तानोन्यसेच्छुक्रंतुलादिमे ॥ सप्तस-
ङ्ख्योयदोत्तानोमकरादौशनिंन्यसेत् ॥ १३ ॥ अष्टसङ्ख्योयदोत्ता-
नोन्यसेद्राहुंवृषादिमे ॥ नवसङ्ख्योयदोत्तानःस्यात्केतुर्वृश्चिकादिमे
॥ १४ ॥ एकैकस्मिन्दलेवक्राऽऽर्ज्वीचापिगतिर्भवेत् ॥ एकादिद्वाद-
शान्तास्यादृज्वीवक्रापरास्मृता ॥ १५ ॥ एकान्ताद्द्वादशादिस्स्याद्ग-
तिःखेलनकोविदैः ॥ स्थापनंहननंचैवलोकसिद्धाक्षवत्स्मृतम् ॥ १६ ॥
शून्यपार्श्वौयदोत्तानावक्षौस्यातांतदागतिः ॥ शाराणांनोभवेत्किन्तुस्त-
म्भःस्यादितितद्विदः ॥ १७॥ शालिवाहशकस्याब्देमन्मथेन्दुमितेशुभे ॥
नन्दनेनभसःकृष्णेत्वष्टम्यांरविवासरे ॥ १८ ॥ श्रीचामुण्डाकृपापूर्णकृ-
ष्णराजमहीभृता ॥ नवग्रहाक्षक्रीडायाःप्रकारोयंप्रकाशितः ॥ १९ ॥

( टीकु )—नवग्रहद पगडे आटके कायिडाळगळ विवर—चारी १ के मध्ये गुंडु अदर सुत्तलु १२ गुंडुगळु। आगुंडुगळल्लि हन्नेरडु राशिगळु। अदर सुत्तलु १२ दळगळु। दळ १ के १२ मनेगळ मेरिगे वोट्टु मनेगळु १४४। इदु द्वादशांशगळक्रमवु। दळ १ के ९ मनेगळमेरिगे चारीयन्नु माडिकोंडल्लि नवांश क्रमवु। दळ १ के मूवत्त मनेगळमेरिगे निर्मिशिदल्लि त्रिंशांशक्रमवु। इदके कायिगळु-नवग्रहगळ आकारवागि ९ इरुववु। वर्णगळविवर—सूर्य केंपु। चन्द्र बिळिगुलाबि। अंगारक बिळिकेंपु। बुध हसरु। बृहस्पति हळदी। शुक्र बिळपु। शनि कप्पु। राहु धूम्र। केतु चित्रवर्ण। ईमेरिगे रंगन्नु हाकिकोंडाडुवदु। ह्यागेंदरे—रव्यादि सप्तग्रहगळु सव्यगतियिंद नेडयुवरु। राहुकेतुगळु अपसव्यवागि नडेयुवरु। अतिचार-वक्र-स्तंभ ऋजुगतिगळु मोदलागि ज्योतिश्शास्त्ररीत्या यल्लाआटगळन्नु आडबहुदु॥—॥ ईकायिगळन्नु नेडुवदर क्रम—डाळदल्लि १ संख्येय दायवु बिद्दल्लि सूयनन्नु सिंह राशियल्लि नेडुवदु॥ २ बिद्दल्लि चन्द्रनन्नु कर्कटकराशियल्लि नेडुवदु॥ ३ बिद्दल्लि अंगारकनन्नु मेषराशियल्लि नेडुवदु॥ ४ बिद्दल्लि बुधनन्नु कन्याराशियल्लि नेडुवदु॥ ५ बिद्दल्लि बृहस्पतियन्नु मीनराशियल्लि नेडुवदु॥ ६ बिद्दल्लि शुक्रनन्नु तुलाराशियल्लि नेवडुदु॥७ बिद्दल्लि शनियन्नु मकरराशियल्लि नेडुवदु॥८ बिद्दल्लि राहुविन राशियाद वृभषराशियल्लि अवनन्नु नेवडुदु॥ ९ संख्येबिद्दल्लि केतुवन्नु अवनिगे तुंगराशियाद वृश्चिकराशियल्लि नेडुवदु॥यीमेरिगे यावयाव ग्रहगळन्नु यारुयारु तेगदुकोंडु आडुत्तारो आयायग्रहकेस रियागि आयाय संख्येगळु बिद्दाग नेट्टुकोळ्ळुवदु ऋजुगतियिंदलादरु वक्रगातीयिंदलादरु कायिगळन्नु होडदल्लि पुनश्च नेडबेकादरे मोदलु संकेतद मकार डाळदल्लि दाय बिद्दाग नेट्टुकोळ्ळुवदु॥—॥ईआटके ४ पाट्टिन डाळ २ के विवर—डाळ १ के २—३—५—खाली पट्टु १। मत्तोंदु डाळ १ के १—३—४—खाली पट्टु १। यीमेरिगे डाळगळन्नु माडिकोंडु दायगळु बिद्दमेरिगे कायिगळन्नु नेट्टबळियिंद मुंदके नडसुवदु। डाळगळ खाली पट्टु यरडु वंदे सारि बिद्दरे (स्तंभ) गतियिल्ल। यीमेरिगे ईआटवन्नु निष्कर्षेमाडिकोंडु बुद्धिवंतरु नोडिकोंडाडुवदु॥

---

## १९ अथ भूचक्रासनेक्षक्रीडाविवरणम्—( भूचक्रदपगडेआट )

चक्राकारालिखेद्रेखाष्षट्प्राकारंयथातथा॥ तत्रादिमस्स्यात्प्राकारश्चतुष्षष्टिगृहान्वितः॥ १॥ द्वितीयस्त्वष्टचत्वारिंशत्कोष्ठैस्संयुतोभवेत्॥ चत्वारिंशत्कोष्ठकैस्तुतृतीयस्संयुतोभवेत्॥ २॥ षट्-

त्रिंशत्कोष्ठकयुतःप्राकारस्स्याच्चतुर्थकः ॥ द्वात्रिंशत्कोष्ठसंयुक्तःप्राकारस्स्यात्तुपञ्चमः ॥ ३ ॥ तदन्तरेस्यात्प्राकारस्त्वष्टाविंशतिकोष्ठकः ॥ तदन्तरेस्यात्प्राकारश्चतुर्विंशतिकोष्ठकः ॥ ४ ॥ तदन्तरेस्यात्प्राकाररूपेणसरसांततिः ॥ अष्टाविंशतिसङ्ख्यानांमध्येतस्यास्त्यनुत्तमम् ॥५॥ सायुज्यस्थानमत्रास्तिमध्येलिङ्गंपिनाकिनः ॥ प्राकारात्प्रथमाद्बाह्येप्राक्प्रत्यग्दक्षिणोत्तरे ॥ ६ ॥ षट्षट्कोष्ठानिकुर्वीरञ्छाराणांस्थापनायवै ॥ यतःक्रीडाप्रवर्ततेचत्वारःक्रीडकास्स्मृताः ॥ ७ ॥ चतुर्विंशतिशाराणामसितःपीतलोहितौ ॥ हरितस्स्यात्तथाक्षाश्चचत्वारश्चतुरश्रकाः ॥ ८ ॥ त्रीण्येकमष्टषट्चेतिसुमानिक्रमशोलिखेत् ॥ तथान्येचतुरक्षास्स्युश्चतुरश्राःप्रकीर्तिताः ॥ ९ ॥ त्रीण्येकंसप्तषट्चैवसुमानिक्रमशोलिखेत् ॥ स्वस्थानाच्छारकान्रम्यानक्षपुष्पक्रमेणवै ॥ १० ॥ चारयित्वाचसायुज्येसुताँल्लिङ्गेहिकुर्वते ॥ फलतोमुक्तिमापन्नाइतिक्रीडासुकोविदाः ॥ ११ ॥ चक्राकारेणगमनंशाराणामितितद्विदः ॥ शकेशालीवाहनस्यषष्ट्युत्तरमुनीन्दुके ॥ १२ ॥ विलंब्याषाढशुक्लस्यत्वेकादश्यांकुजेशुभे ॥ श्रीचामुण्डाकृपापूर्णचामराजतनूभवा ॥ १३ ॥ कृष्णभूपेनभूचक्राक्षक्रीडाकलितापरा ॥

( टीकु )-भूचक्रदपगडे आटक्के चारी कायिगळु डाळगळ विवर-ईभूचक्रद पगडे आटक्के चक्राकारवागि चारीयन्नु माडिकोंडु अदरल्लि होरगिनिंद ५ सालु गुंडगळल्लि चौकद मनेगळु मोदलने सालिगे ६४ । २ नेसालिगे ४८ मनेगळु । ३ ने सालिगे ४० मनेगळु । ४ ने सालिगे ३६ मनेगळु । ५ ने सालिगे ३२ मनेगळु ॥-॥ ईमेरिगे मनेगळन्नु माडि अल्लिंद वळगे १ सालु गुंडुमनेगळन्नु २९ माडि अल्लिंद वोळगे कोटेयन्नु बरदु आकोटेय सालिनल्लि २४ मनेगळन्नु माडि अल्लिंद वोळगे कोळदंते १ सालु बरदु अदरल्लि २८ मनेगळन्नु बरदु अदकिंत वोळगे दोड्डदागिरुव सायुज्यद स्थानवाद १ मनेयल्लि शिवलिंगवं बरयुवदु । ईचारीगे ४ दिक्कुगळल्लियु वंदुवंदु मनेगळ सालु होरसुत्तुगळु ५ रल्लु चारीयंते गुंडुमनेगळन्नु माडिकोंडु हार सुत्तिन होरगे ६ मनेगळन्नु बरदुकोंडु आरु कायि-

गळन्नु नेट्टुकॊळ्ळुवंते माडुवदु ॥-॥ ईमेरिगे कायिगळन्नु नेडुव मनेगळु लिंगवन्नु बरदिरुव सायुज्य स्थानद १ मने सह ३२५ मनेगळु आगुवद्दरिंद हसरु कायन्नु नेडुव मनचारिगे ६ ने सुत्तिनल्लिरुव गुंडुमनेयल्लि ब्राह्मणजन्म ॥ हळदीकायन्नु नेडुव मनेचारिगे ६ ने सुत्तिन गुंडुमनेयल्लि क्षत्रियजन्म ॥ केंपु कायन्नु नेडुव मनेचारिगे ६ ने सुत्तिन गुंडुमनेयल्लि वैश्यजन्म ॥ कप्पुकायन्नु नेडुव मनेचारिगे ६ ने सुत्तिन गुंडु मनेयल्लि शूद्रजन्म ॥ ईमेरिगे गुरुतन्नु माडिकॊंडु इदर वळगिन कोटेय आकारवागिरुव सालिनल्लि मध्येमध्ये बंदुबंदु मनेयल्लि आयाय दिक्कुगळन्नुसारिशि दिक्पालकरु यंटुमंदियन्नु बरदुकॊंडु आडुवदु ॥

डाळगळ विवर-डाळ १ क्के पट्टु ४ क्के पट्टु १ क्के १ । पट्टु १ क्के ४ । पट्टु १ क्के ६ । पट्टु १ क्के ८ । ईमेरिगे डाळगळु ४ क्के १ रिंद ३२ गळवरिगे उपनिषत्तुगळ संख्येगळंते दायगळु बीळुवंते निश्चयिसिदे ॥ इन्नु ईप्रकारवागि डाळ १ क्क पट्टु ४ क्क पट्टु १ क्के १ । पट्टु १ क्के ३ । पट्टु १ क्के ५ । पट्टु १ क्के ६ । ईमेरिगे ४ डाळगळन्नु माडिकॊंडु १ रिंद २८ रगळवरिगे नक्षत्र संख्येगळंते तप्पदे बीळुवंते गुरुतुगळंनु माडिकॊंडु ई २ जाती डाळगळल्लि यारिगे यावदु चन्नागि तोरुत्तयो अवरु आडाळगळल्लि आडबहुदु॥-॥आटक्के हळदि हसरु केंपु कप्पु ई ४ रंगुगळल्लि बंदुबंदु रंगिगे आरुआरु कायिगळमेरिगे २४ कायिगळन्नु माडिकॊंडु पूर्वद पगडे आटदन्ते बंटि पगडे हुइलु पगडेदाय मुंतागि बिद्द दायवन्नु अनुसरिशिकॊंडु आडबहुदु ॥-॥ ईमेरिगे कायिगळंनु नेट्ट मने इंद सायुज्य स्थानवाद शिवलिंगवन्नु बरदु इरुव मनेयवरिगे नडदु अल्लि मलगिकोंड कायि हण्णु आगि आ आटदवरु गेद्द हागे बुद्धिवंतरु निष्कर्षेयन्नु माडिकॊंडाडुवदु ॥

---

## २० श्रीचक्राक्षदळासनेक्षक्रीडाविवरणम्-

( कलशाकृतिवृन्दावनवन्नुमेलेउळ्ळश्रीचक्रदपगडेआट )

श्रीचक्राक्षक्रीडनार्थंन्नुवेतच्चक्रलेखनम् ॥ तत्रोपरिष्टाद्वीध्यस्तुनवकल्प्यामनोहराः ॥ १ ॥ वृन्दावनाकारतोस्मादधोदशदळंलिखेत् ॥ कमलंश्रीचक्रमितिपण्डितैरत्रकीर्तितम् ॥ २ ॥ संतिकोष्ठानिषडशीत्युत्तरद्विशतंयथा ॥ बृन्दावनन्तुकलशाकृत्यायत्नेनसंलिखेत् ॥ ३ ॥ वीध्योदशस्युरुपरितदधःकमलंभवेत् ॥ ऊर्ध्वंदशमवीध्यांस्यान्महत्को-

ष्ठंतुमध्यमे ॥ ४ ॥ श्रीचामुण्डातत्रलेख्यायत्रसायुज्यमिष्यते ॥
तदधोविलिखेत्षट्चवीथ्यःकोष्ठैःसुसंयुताः ॥ ५ ॥ वीथ्यांवीथ्यांहि-
कोष्ठानित्रयोदशलिखेत्क्रमात् ॥ तदधस्तनवीथ्योःकोष्ठानिपञ्चदश-
क्रमात् ॥ ६ ॥ पृथक्पृथगितिप्राहुरेकैकस्यांततोप्यधः ॥ कोष्ठानि
सप्तदशवैविलिखेत्खेलनेपटुः ॥ ७ ॥ विलिख्याधस्तनाब्जस्यदळानां
मध्यमेदळे ॥ एकविंशतिकोष्ठानिलिखित्वापार्श्वयोःपृथक् ॥ ८ ॥
दलयोःकुरुकोष्ठानिद्वादशद्वादशात्रतु ॥ शाराद्वादशसंस्थाप्याःषट्षट्-
वर्णक्रमेणतु ॥ ९ ॥ षट्कृष्णाष्षट्चरक्तास्स्युःपीताष्षड्ढरितास्तथा॥
चतुर्विंशतिशारांस्तान्दळयोःपार्श्वयोःक्षिपेत् ॥१०॥ मध्येनसहशिष्टे-
षुदळेष्वष्टसुसंलिखेत् ॥ संहत्यषडशीत्युत्तरशतद्वयकोष्ठकम् ॥ ११ ॥
भवत्येषांतुकोष्ठानांजातिद्वयमुदीरितम् ॥ कार्यकारणभेदेनभिन्नचिह्नं-
मनोहरम् ॥ १२ ॥ कार्यकोष्ठानिचैकोत्तरशतंकारणस्यच ॥ कोष्ठा-
न्येकोत्तरशतंशारस्थापनहेतवे ॥ १३ ॥ चतुर्विंशतिकोष्ठानिविश्रान्त्यै-
कोष्ठकानिच ॥ एकोनपंचाशच्चस्युःसायुज्यायैकमुत्तमम् ॥ १४ ॥
स्थापितस्थानमारभ्यदळान्येवंतदन्तरे ॥ सर्वकोष्ठेषुसंचार्यबृन्दावनसमा-
कृतौ ॥ १५ ॥ सर्पगत्यातत्रशारान्कोष्ठेतुक्रमशस्सुधीः ॥ सायुज्यं
प्रापयेदन्तइतिक्रीडाविदोविदुः ॥ १६ ॥ चत्वारोक्षाभवन्त्यत्रचतुर-
श्रसुशोभिताः ॥ सुमानिस्युःपार्श्वभागेपृथक्पृथगनुक्रमात् ॥ १७ ॥
त्रीण्येकंपंचषट्चस्युस्सुमानिह्यक्षयोश्चरेत् ॥चत्वारिद्वेषडष्टौस्युरितिपक्षा-
न्तरंस्मृतम् ॥ १८ ॥ स्थापितस्थानतश्चण्ड्याःस्थानेमुक्तिमवाप्यच ॥
सुखंशयीततत्रेतिक्रीडाक्रीडनकोविदाः ॥ १९ ॥ कार्यकारणविश्रांति-
स्थानानिद्व्येकशून्यकैः ॥ चिह्नितान्यनुलोमेनविलोमेनापिचालनम् ॥
॥ २० ॥ दलेषुस्याद्वृद्धिबलाच्छाराणामितिनिर्णयः ॥ शिष्टंप्रसिद्धाक्ष-
तुल्यमितितद्विद्भिरीरितम् ॥ २१ ॥ शालीवाहशकस्याब्देखषण्मुनि-

धरामिते ॥ विलम्ब्याश्विनशुक्लस्यपौर्णमास्यांबुधेशुभे ॥ २२ ॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभृता ॥ श्रीचक्रदशपत्राक्षक्रीडेयं-निर्मिताशुभा ॥ २३ ॥

( टीकु )-श्रीचक्रद दशदळगळ पगडे आटक्के चारी कायिडाळगळ विवर-ईश्रीचक्रद पगडे आटक्के कमलाकारवागि चारीयन्नु माडिकोंडु अदरल्लि मेले ९ सालुगळन्नु वृंदावनाकृतियागि माडिकोंडु केळगे दशदळगळन्नु बरदु इरबेकु। ईआटक्के वट्टु २८६ मनेगळिगे विवर-वृंदावनक्के कलशाकृतियागिरुव १० ने सालिनल्लि वंदेमनेयन्नु दोड्डदागि माडि अदरल्लि चामुण्डेश्वरी अम्मनवरन्नु बरदु अदरकेळगे सालु १ क्के १३ मनेगळमेरिगे ६ सालुगळन्नु बरदु अदर केळगे सालु १ क्के १५ मनेगळमेरिगे सालुगळु२-अदर केळगे सालु १ क्के १७ मनेगळु। ईमेरिगे बरदु इदर केळगे कमल दळगळ मध्यदल्लि२१ मनेगळन्नु बरदु अनन्तर कमलमध्यदळ गळ आचे ईचे बाजू दळगळल्लि वंदु दळदल्लि केंपुकायिगळु ६ न्नु करीकायिगळु ६ न्नु सह नेडुव बग्ये १२ मने गळन्नु मत्तोंदु दळदल्लि इदे मेरिगे हळदीकायिगळु ६ न्नु हसरुकायिगळु ६ न्नु सह नेडुव बग्ये १२ मनेगळन्नु सह बरदु मध्ये ८ दळग-ळिंद११५मनेगळन्नु बरदु इरबेकु। ईमेरिगे वट्टु२८६मनेगळु आगुवदरिंद इदरल्लि कार्यद मनेगळिगे वंदुप्रकारद गुरुतुगळन्नु कारणद मनेगळिगे मत्तोंदुप्रकारद गुरुतुगळन्नु काणुवन्ते बरदुकोंडु कायिगळन्नु नेट्ट ताविनिंद क्रमवागि कमल दळगळन्नु अदर मध्ये इरुव मनेगळन्नु सह दाटि वृन्दावनाकृति सालिनल्लि सर्प गतियागि कायिगळन्नु नडसुत्ता बरुवदु ॥ इदरल्लि कार्यद मनेगळु १०१ कारण द मनेगळु १०१ कायिगळन्नु नेडुव मनेगळु २४ विश्रमस्थानद मनेगळु ५९ सायुज्यस्थानद मने १। यीमारिगे वट्टु २८६ मनेगळिगु कायिगळन्नु नडस-तक्क बग्ये ४ डाळगळन्नु माडतक्कदु-डाळ १ क्के पट्टु ४ क्के पट्टु १ क्के १। पट्टु १ क्के ३। पट्टु १ क्के ५। पट्टु १ क्के ६। यीमेरिगे गुरुतुगळन्नु हाकिद ४ डाळगळिंद बिद्द दायगळन्नु नडिसबेकु। यिन्नु वंदुप्रकारदिंद डाळगळन्नु माडबहुदु-डाळ १ क्के पट्टु ४ क्के पट्टु १ क्के १। पट्टु १ क्के ३। पट्टु १ क्के ५। पट्टु १ क्के ६। यीमेरे डाळ। २ डाळ १ क्के पट्टु १ क्के २। पट्टु १ क्के ४। पट्टु १ क्के ६। पट्टु १ क्के ८। ईमेरिगे यरडु डाळगळु। अंतु ५ डाळगळिंद १५ गळवारिगे जोडि दाय तप्पदे बीळुवंतेयु निश्चयिशियागि यी यरडु डाळ गळल्लि यारिगे याव डाळगळल्लि अभिरुचियिरुत्तयो अवरु आडाळगळल्लि आड-

बहुदु । आटक्के हळदी हसरु केंपु कप्पु नाल्कु रंगिगु वंदुवंदु रंगिगे आरुआरु कायिगळ मेरिगे २४ कायिगळन्नु माडिकोंडु पूर्वद पगडे आटदन्ते वंटि पगडे हुयिलु पगडे दाय मुंताणि बिद्द दायवन्नु अनुसरिशि आडबहुदु । यीमेरिगे कायिगळं नेट्ट मनेयिंद सायुज्य स्थानवाद चामुण्डेश्वरी अम्मनवरिरुव मनेवरिगे नडदु अल्लि मलिगिकोंड कायि हण्णु आगि आ आटदवरु गेद्द हागे बुद्धिवन्तरु निष्कर्षेयन्नु माडिकोंडाडुवदु ॥

## २१ अथ हस्तिबन्धनक्रीडाविवरणम्-

अष्टकोणंस्यात्तुपंचाशीतिकोष्ठैर्युतंततः ॥व्याधास्स्युरष्टाचत्वारिंशच्च त्वारोभवन्तिहि ॥ १ ॥ गजास्तेषांग्रहःकार्योहस्तग्राहांविलासतः ॥ व्याधैस्सन्धावेवसदाव्याघ्रग्रहवदीरितम् ॥ २ ॥

( टीकु )-(आनेकट्टिन आट)-आनेगळ कट्टिन आटक्के मनेगळ मत्तु आळुगळ विवर-ईआनेगळ कट्टिन आटक्के अष्टकोणवाद मनेगळन्नु बरदु अवगळल्लि हुलि कल्लिन आटद मनेगळंते मूलेगळु कूडिदबळी हूवुगळन्नु बरदु आहूवुगळं बरदिरुव मनेगळु ८५ इरुवन्ते माडि ४८ आळुगळन्नु इट्टुकोंडु आनेगळु नाल्कु यिट्टुकोंडु हुलिकल्लिन आटदल्लि हुलिगळन्नु हिडियुवंते ईआळुगळिंद ई ४ आनेगळन्नु हिडियुवंते अवरवर बुध्ध्यनुसारवागि नोडिकोंडाडुवदु ॥

## २२ अथोद्दिष्टाक्षरप्रकाशनम्-

चण्डींवीरकथागारांमणिकोटीरबंधुराम् ॥ चामुण्डिकांचामराज-बाहुविक्रमपोषिणीम् ॥ १ ॥ सिंहपीठेसुखासीनांखगपिंछालिवीजिताम् ॥ भूनाथसंततिनुतांसोमखंडावतंसिनीम् ॥ २ ॥ शांताहितेच्छ-महिषांतूणजंघांशुचिस्मिताम् ॥ समूढसुममंचस्थांवाहाभूषाफणामणिम् ॥ ॥ ३ ॥ तांडवालीढवलयझणज्झणवरारवाम् ॥ शाटीलुठत्तारहारांसिंहवे-षरथस्थिताम् ॥ ४ ॥ महीशूरपुरीभासियदुवंशफलप्रदाम् ॥ बाला वेषधरांदेवींवंदेहंविंध्यवासिनीम् ॥ ५ ॥ एकविंशतिनामानिदेव्यास्सं ध्यागमेपठन् ॥ कीर्तिंभाग्यंसुसंतानंविज्ञानंलभतेवरः ॥ ६ ॥ शकेशालीवाह

नस्यत्रिचतुस्सप्तभूमिते ॥ विक्रमाश्विनशुक्लस्यप्रथमायांरवौशुभे ॥ ७॥ श्रीचामुण्डाकृपापूर्णकृष्णराजमहीभृता ॥ उद्दिष्टाक्षरवच्छ्लोकारचिता-बुधतुष्टये ॥ ८ ॥–॥ अस्यसूत्रं "वनढमिखा" इति ॥

## २३ अथ संख्याभिर्लिप्यवगमक्रमः–

प्रथमंवर्णसंख्यानेद्वितीयंवर्गसूचने ॥ एकादिक्रमचांस्थानेदशकंदी-र्घबोधने ॥ १ ॥ बिंदुस्थानेचनवकंविसर्गेनवतिंतथा ॥ संख्यायाः कादिनवकंपादभेदस्यटादिकम् ॥ २ ॥ धान्यमानेपकारादिरसमाने तुयादिकम् ॥ निष्कादितुलनेशादिर्बिंदोर्नोविश्रमस्यत्रः ॥ ३ ॥ अर्धाक्षरस्यार्धवृत्तमेवंसंख्यालिपिक्रमः ॥ यंप्रस्तुवंतिविद्वांसोबृहस्पति-समाअपि ॥ ४ ॥ कृष्णराजमहाराजरचितोवर्धतामयम् ॥ शकेशा-लीवाहनस्यत्रिचतुस्सप्तभूमिते ॥ ५ ॥ विक्रमाश्विनशुक्लस्यत्वेकादश्यां बुधेशुभे ॥ सङ्ख्यालिपीनांलिपिभिस्संख्यानांबोधकोमहान् ॥ ६ ॥

( टीकु )–यीश्लोकद मेरिगे अक्षरगळिगे अकारादि क्षकारपर्यंत संख्याक्रम-नव संख्येगे अक्षरक्रम हाग मोदलागि काणिवरिगु खण्डगमोदलागि सोलिगे बरिविगु मणमोदलागि पावुवरिविगे वरहा तूकमोदलागि हाग तूकद वरिविगु बिंदु मकारिसुवदु अर्धअक्षरक्के सह क्रमवागि अक्षरगळन्नु हाकिकोंडु बुद्धिवन्तरु पत्रगळन्नु नोडिकोळ्ळबहुदु ॥

---

## १ तत्रसंख्याभिर्लिप्यवगमकोष्ठकम्–

| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ | ए | ऐ | ओ | औ | अं | अः | ० | ॰॰ | अर्धाक्षरस्य | क |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १० | २ | २० | ३ | ३० | ४ | ४० | ५ | ५० | ६ | ६० | ७ | ७० | ८ | ८० | ९ | ९० | ‿ | ११ |

| ख | | घ | ङ | च | छ | ज | झ | ञ | ट | ठ | ड | ढ | ण | त | थ | द |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २१ | ३१ | ४१ | ५१ | १२ | २२ | ३२ | ४२ | ५२ | १३ | २३ | ३३ | ४३ | ५३ | १४ | २४ | ३४ |

| ध | न | प | फ | ब | भ | म | य | र | ल | व | श | ष | स | ह | ळ | क्ष |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४४ | ५४ | १५ | २५ | ३५ | ४५ | ५५ | १६ | २६ | ३६ | ४६ | ५६ | १७ | २७ | ३७ | ४७ | ५७ |

## २ पूर्णाङ्कबोधकाक्षरकोष्ठकम्–

| क | ख | ग | घ | ङ | च | छ | ज | झ |
|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| वन्दु | यरडु | मूरु | नाल्कु | ऐदु | आरु | येळु | येंटु | वोंभत्तु |

## ३ अङ्कांशबोधकाक्षरकोष्ठकम्-

| ट | ठ | ड | ढ | ण | त | थ | द | ध |
|---|---|---|---|---|---|---|---|---|
| ८। | ८॥ | ८॥। | ८०- | ८०= | ८०≡ | ८००। | ८००॥ | ८००॥। |
| पादांश-स्य | अर्द्धांशस्य | त्रिपादंशस्य | पादचतुर्थांशस्य | पादार्द्धांशस्य | पादत्र्यंशस्य | पादचतुर्थांशांश० | पादचतुर्थार्द्धांश | पादचतुर्थत्र्यंश |

## ४ कर्नाटकदेशे-धान्यमानबोधकाक्षरकोष्ठकम्-

| प | फ | ब | भ | म |
|---|---|---|---|---|
| "खण्डी"इत्यस्य | खण्डीविंशांशस्य कुडोइत्यस्य | कुडोइत्येतच्चतुर्थांशस्य | कुडोचतुर्थांशांशस्य | कुडोचतुष्षष्ट्यंशस्य |
| षष्टयुत्तरशतसेटकस्य(खंङ्ग) | अष्टसेटकस्य (कोळग) | द्विसेटकस्य (बळ्ळ) | अर्धसेटकस्य ( ॥ शेरु) | सेटकाष्टमांशस्य वा१०॥रूप्यमि. |

## ५ कर्नाटकदेशे-सुवर्णमानबोधकाक्षरकोष्ठकम्-

| श | ष | स | ह |
|---|---|---|---|
| वरहातूक | होन्नुतूक | हणतूक | हागतूक |
| षट्त्रिंशद्गुञ्जापरिमितस्य | | चतुर्गुञ्जापरिमितस्य | एकगुञ्जापरिमितस्य |

## ६ कर्नाटकदेशे-तुलामानबोधकाक्षरकोष्ठकम्-

| य | र | ल | व |
|---|---|---|---|
| मण | धडय | सेरु | पावु |
| चत्वारिंशत्सेटकाःचतुश्चत्वारिंशत्सेटकावा | दशसेटकाः एकादशसेटकावा | १ सेटकःवा २४ रूप्यैस्तुलितः | सेटकपादांशः |

## २४ अथ मुष्टिप्रश्नेषु हस्तग्राह्यपदार्थतदुत्तरविधयः-

स्वर्णंजलंतथाशूलंप्रवाळस्त्वक्शिलागुडः ॥ चर्मभस्ममृदस्थीनि रजतंनखगोमये ॥ १ ॥ नीरसाश्चतथाज्ञेयाताम्रप्रभृतयोबुधैः ॥-॥

